मन्त्र। इन्द्राय यमाय वरुणाय धनदाय भूतगणाय बलिं गृह्णातु मे स्वाहा ॥
"उदीर्य कार्य्यं समयानवक्त्य
तत प्रदेशे काटस्य चेष्टाः
सुदृढीकृताङ्गानि शुभाशुभार्थं
समच्चयेन्निखिलपाशिपादः ॥
पूर्व्वेण खादन् सुखवित्तवृद्धिं
करोति वह्नेर्दिशि वह्निभीतिम्।
काकोऽर्थनाशं दिशि दक्षिणस्या
नैरृत्यगो दिग्वरकालदिष्ट ॥
जलेशदेशेऽभिमतार्थसिद्धि-
र्व्वायोर्दिशीति प्रभवान्यवृष्टि।
सौम्ये सुखारोग्यसमीहितार्थं
सौशानदेशे वितरत्यभीष्टम् ॥
मध्ये विलुप्ते काटे समन्तात्
कार्य्ये विमिश्र परिभावनीयम्।
बलिं विकीर्य्यापि न भक्षयन्ति
काकास्तदानीं भयदा भवन्ति ॥
क्षीरद्रुमारामचतुष्पदेषु
सरित्समीपे निदशालयेषु।
देयो बलिर्भूतदिनाष्टमीषु
कुल्माषदध्योदनमण्डलाद्यैः" ॥
इति काकरुते पिण्डप्रकरणं सप्तमम् ॥ * ॥
"पिण्डत्रयस्याथ विधानमेत-
दाख्यायते यत् किल नारदाद्यैः।
दृष्टं मुनीन्द्रैरशुभं शुभञ्च
यथावदस्मिन् कथयन्ति काकाः ॥
गत्वा शुभेऽह्नि प्रहरे चतुर्थे
देशेषु पूर्व्वप्रतिपादितेषु।
नरेण पिण्डत्रयभोजनार्थं
काकाः प्रयत्नेन निमन्त्रणीयाः ॥
ततः प्रभाते श्रुपलिप्य भूमिं
तस्याञ्च पूर्व्वोदितमल्लयुक्ता।
ब्रह्माच्युतेशाम्पतिलोकपाला
काकाश्च पुंसा क्रमतोऽर्च्चनीया ॥
दध्योदनाद्यैर्व्विहितं प्रदेश
पिण्डत्रये मण्डलकस्य मध्ये।
अभ्यर्च्चयेद्गन्धपुष्पधूपै-
र्मनोहरैर्धूपपरो मनुष्य ॥
तेषु क्षिपेत् प्रागुदगानुक्रमेण
पिण्डेषु पूर्व्वप्रथमे द्वितीये।
रूप्यं तथा लौहमथ तृतीये
शेषञ्च कुर्य्यादनिदिग्धतुल्यम् ॥
त्रि सप्तशो विनिवेश्य पिण्डं
पिण्डा निवेश्या बलिभोजनेभ्यः।
मन्त्रोक्तमावाहनतोऽर्चितेभ्यः
कार्य्यं विचार्य्यं परमेत्तलञ्च"।
मन्त्र। ॐ हिलि टिलि किटि काकचाण्डालाय स्वाहा। इति पिण्डाभिमन्त्रणम्। ॐ महाधी विग्राय काकचाण्डालाय स्वाहा। काकाह्वानमन्त्रः।
"काकेन भुक्ते मधुपर्णपिण्डे
श्रेष्ठं नरेणोत्तममत्कार्य्यम्।

भुक्ते सरूप्ये खलु मध्यमं स्याद्-
भुक्ते सलौहे लघमं प्रदिष्टम् ॥
विवादवाणिज्यविवाहवृष्टि-
क्षेमाश्च वित्ता कृषिभोगरोगा।
मयामनैवान्यप्रकार्य्यतेन
इत्यादयोऽस्मिन् परिभावनीया ॥
चेष्टामवामां विदधाति याति
प्रदक्षिणं दक्षिणपक्षमुखे।
ग्रीवा तथोच्चां कुरुते सशब्द
स्थानं मनोज्ञं श्रयति द्रुमञ्च ॥
एवंविधा यो विदधाति चेष्टा
पिण्डं समादाय शुभं खगोऽसौ।
अभीष्टकार्य्याभ्यधिकं करोति
चेष्टाविपर्य्यासतयान्यथात्वम् ॥
पिण्डं समादाय यदि प्रधानं
शान्तं दिशं गच्छति वायसपक्षी।
पूर्ण फलं तत् कुरुते नराणां
चिकीर्षितं वस्तुनि यत्र तत्र ॥
काको गृहीत्वा यदि मुख्यपिण्डं
प्रयाति दीप्तां ककुभं तदानीम्।
अनुत्तमं कार्य्यफलं प्रदर्श्य
ततः समस्तं विनिहन्त्यवश्यम् ॥
द्वितीयकं यद्यपहृत्य पिण्डं
सुदृष्यते शान्तदिगाश्रयेण।
फलं तदानीं शुभदं नराणाम्
याप्यं खगो व्यर्थति कार्य्यजातम् ॥
काके समादाय जघन्यपिण्डं
याते प्रदीप्तां ककुभं वदन्ति।
कार्य्यं जघन्यादधिकं जघन्यं
स्यान्मध्यमं मध्यमपिण्डभागे" ॥
इति वसन्तराजे पिण्डत्रयप्रकरणमष्टमम् ॥ * ॥
"महर्षयो वायसशाकुनस्य
वदन्ति सारादपि सारभूतम्।
पिण्डाष्टकं यत्तदशेषमेत-
दाख्यायते कार्य्यविनिश्चयार्थम् ॥
शुभेऽह्नि काकानधिवास्य सायं
पिण्डाष्टकं भोक्तुमथ प्रभाते।
तत्कालयोग्यानि समस्तवस्तू-
न्यादाय यायादविरामतः ॥
एकान्तदेशे तरुपार्श्वभूमौ
मृद्गोमयाभ्यामुपलेपितायाम्।
सतुषधान्येन समुच्छ्रितायां
सौम्योपहारैरुपशोभितायाम् ॥
विधाय पूजां कुलदेवतानां
मध्ये ततोऽष्टमपि दिक्षु देयम्।
भक्तेन सर्पिर्दधिमिश्रितेन
पिण्डाष्टकं प्रागुदगानुक्रमेण ॥
पश्चीन्द्रवह्न्यन्तकराक्षसेन्द्रान्
विष्णुं विरिञ्चिं धनदं महेशम्।
पूर्व्वादिकाष्ठाष्टमयोऽर्च्चितेषु
न्यसेत् क्रमाद्दश पिण्डकेषु ॥
नमोऽन्तकेभ्यान् प्रणवप्रसूर्व्वां

ततोऽर्च्चयेत्तन्निजनाममन्त्रैः।
अर्घ्यासनालेपनपुष्पधूपै-
र्नैवेद्यदीपाद्यतदक्षिणाभिः ॥
अभ्यर्च्चितेभ्यो विधिनोदितेन
पिण्डाष्टकं तत् ददतु द्विजेभ्यः।
मन्त्रेण सम्यक् निवेदनार्थं
कार्य्यं विचिन्त्यापसरेच किञ्चित्" ॥
अथ मन्त्रः। ॐ नम खगपतये गरुडाय द्रोणाय पक्षिराजाय स्वाहा ॥
"द्रोणाढकसमं पिण्डं गृह्णाय समशुद्धितः।
यथादृष्टं निमित्तं च कथयस्वाधमे स्फुटम् ॥
काकेन पिण्डे प्रथमे गृहीते
तिष्ठन् व्रजन् वापि भवेत् कृतार्थः।
उद्वेगशोकौ विफलं प्रयाणे
हानिं कलिर्व्वा भवति द्वितीये ॥
याम्ये रुगापद्भयमृत्यवः स्यु
पिण्डे चतुर्थे विजयो रणेषु।
स्त्रादैन्यवैऽभीष्टमकष्टसाध्यं
भवेत् प्रवासो विफलश्च षष्ठे ॥
नास्तीह तन्निश्चयमेव कार्य्यं
भुक्ते न यत् सिध्यति सौम्यपिण्डे।
सन्तापशोकौ विफला च यात्रा
पिण्डेऽष्टमे वायसभक्षिते च ॥
पिण्डं न गृह्णात्यथवा न भुङ्क्ते
चञ्च्वाविलिख्यापति दिशो य।
कार्य्येषु सर्व्वेषु स न प्रशस्तो
ब्रवीति घोरं समरं स पुंसाम्" ॥
इति वसन्तराजे काकरुते पिण्डाष्टकप्रकरणं नवमम् ॥ ० ॥
"आद्य पञ्चाशता द्वाभ्यां वृत्तैर्दिक्चक्रमीरितम्।
काकालयपरीक्षा च द्वितीये दशभिस्त्रिभिः ॥
वृत्तैस्त्रिभिस्तृतीये च काकाण्डकनिरूपणम्।
द्वाचत्वारिंशता वृत्तैर्यात्रा तुर्य्ये प्रकीर्त्तिता ॥
वृत्तानि विंशतिस्त्रोणि स्थानं स्याद्ये च पञ्चमे।
स्वरप्रकरणं षष्ठं वृत्तैर्दशभिरन्वितम् ॥
एकादशभिराख्यातं बलिसंस्थं च सप्तमम्।
पिण्डत्रयविधानाय चतुर्दशभिरष्टमम् ॥
पिण्डाष्टकविधानाय नवमे यदुदाहृतम्।
अन्यप्रकरणं तथ वृत्तान्येकादशैव तु ॥
वसन्तराजशाकुने सदागमार्थशोभने।
समस्तसत्कौतुके विचारितोऽत्र वायसः" ॥ * ॥
समुदायेन १८२ वृत्तानि। इति वसन्तराजशाकुन्तान्तर्गतवायसशाकुननामकाकचरित्रं समाप्तम्॥
काकमांसगुणाः। दोषत्रयापहत्वम्। चक्षुर्हितत्वम्। वृष्यत्वम्। बलायुर्हितकारित्वम्। लघुत्वम्। दीपनत्वञ्च। इति राजनिर्घण्टः ॥
("काकः कोकिलघूकराजवक्रगरो-
ग्रान्वादयो भासुकाः
श्यालाः सौरभयो वकप्रभृतयो
ये चान्यजीवा मताः।
मत्स्याश्च सरीसृपादिकगणा
दृष्टा कलिङ्गाश्च ये

कोकः सारसशारिका शुक इमे
भक्ष्या न शस्तास्तथा ॥
चटकचकोराः काकशाव्याश्च श्येनाः
स्मुकविषघ्नक्रौभङ्गदात्यूहकल्काः ।
करटकपोता पोतकी खञ्जरीटाः
विकमशकाद्या वृकपिङ्गादयोऽन्ये ॥
एते भक्ष्या नैव भक्ष्या न चेष्टा
ये चाप्यन्येऽज्ञातनामाण्डजाश्च ।
अन्ये चापि श्वापदा ये च निन्द्या-
स्ते चाखाद्या वर्ज्जिताश्चात्र सर्व्वे" ॥
ति हारीते प्रथमस्थाने । ११ अः ।
'काककङ्ककुररचाषभासशशघात्युलूकचिल्लिश्ये-
गृध्रप्रभृतयः प्रसहाः ॥
एते सिंहादिभिः सर्व्वे समाना वायसादयः ।
सवीर्य्ये विपाकेषु विशेषाच्छोषिणे हिताः" ॥
ति सुश्रुते सूत्रस्थाने । ४६ अः ॥) पीठसर्पी ।
शैंडा इति भाषा । द्वीपविशेषः । परिमाणभेदः ।
वृक्षविशेषः । शिरोऽवह्नान्नणम् । इति हेमचन्द्र-
मेदिनीकरौ ॥ तिलकः । अतिघृष्टः । इति शब्द-
रत्नावली ॥

काकङ्गुः, स्त्री, (काकप्रियः कङ्गुः ।) चीनकः । इति
हेमचन्द्रः ॥

काकणा, स्त्री, (काकस्य कणा अङ्गं जङ्घावयवः
तद्वत् अङ्गं यस्याः ।) काकजङ्घावृक्षः । इति
जटाधरः ॥

काकघ्नी, स्त्री, (काकं हन्तीति । काक+हन्+टः
टित्वात् ङीप् ।) महाकरञ्जः । इति राज-
निर्घण्टः ॥

काकचिञ्चा, स्त्री, (काकवर्णा चञ्चा प्रान्तभागः फले
यस्याः । पृषोदरादित्वात् साधुः ।) गुञ्जा । इति
शब्दरत्नावली । कूँच इति भाषा । (गुञ्जाशब्दे-
ऽस्या विवरणं बोद्धव्यम् ॥)

काकचिञ्चिः, स्त्री, (काकवर्णा चञ्चा प्रान्तभागः फले
यस्याः । पृषोदरादित्वात् साधुः ।) गुञ्जा । इति
शब्दरत्नावली ॥

काकचिञ्ची, स्त्री, (काकचिञ्चि+वा ङीष् ।) गुञ्जा ।
इत्यमरः । २ । ४ । ९८ ॥ (अस्याः पर्य्यायो भाव-
प्रकाशस्य पूर्व्वखण्डे प्रथमे भागे । यथा,—
"श्वेता रक्तोच्चटा प्रोक्ता कृष्णला चापि सा स्मृता ।
रक्ता सा काकचिञ्ची स्यात् काकानन्ती च रक्तिका ।
काकादनी काकपीलुः सा स्मृता काकवल्लरी" ॥
गुञ्जाशब्दे विवरणान्तरं ज्ञेयम् ॥)

काकच्छदः, पुं, (काकस्य छदः पक्ष इव छदो यस्य ।)
खञ्जनपक्षी । इति शब्दरत्नावली ॥

काकच्छर्दिः, पुं, खञ्जनपक्षी । इति त्रिकाण्डशेषः ॥
(खञ्जरीटशब्देऽस्य विवृतिर्ज्ञेया ॥)

काकजङ्घा, स्त्री, (काकस्य जङ्घेवाकृतिर्यस्याः ।)
स्वनामख्यातवृक्षविशेषः । केउया ठेङ्गा इति
भाषा । तत्पर्य्यायः । काकाङ्गी २ काकाह्वी ३ काक-
नासिका ४ । इति शब्दरत्नावली ॥ कपीवलः । इति
रत्नमाला ॥ ध्वाङ्क्षजङ्घा ६ काकाङ्गा ७ सुलोमशा
८ पारावतपदी ९ दासी १० नदीकान्ता ११ ।
अस्या गुणाः । तिक्तत्वम् । उष्णत्वम् । क-
कफबाधिर्य्यजीर्णजीर्णविषमज्वरनाशित्वञ्च । इति
राजनिर्घण्टः ॥
("काकजङ्घा बला श्यामा ब्रह्मदण्डी कृताञ्जलिः ।
पृश्निपर्णी त्वपामार्गस्तथा भृङ्गरजोऽष्टमः ॥
एषामन्यतमं मूलं पुष्येणोद्धृत्य यत्नतः ।
रक्तसूत्रेण संवेष्ट्य बद्धमैकाहिकं जयेत्" ॥
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥
मसीति लोके । अस्याः पर्य्याया गुणाश्च यथा,—
"काकजङ्घा नदीकान्ता काकतिक्ता सुलोमशा ।
पारावतपदी दासी काका चापि प्रकीर्त्तिता ॥
काकजङ्घा हिमा तिक्ता कषाया कफपित्तजित् ।
निहन्ति ज्वरपित्तास्रज्वरकण्डूविषक्रिमीन्" ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।)
गुञ्जा । इति रत्नमाला ॥

काकजम्बुः, स्त्री, (काकवर्णा जम्बुः ।) भूमिजम्बुः ।
क्षुद्रजम्बुः । इति शब्दमाला । वनजाम् इति
भाषा ॥

काकजम्बूः, स्त्री, (कं जलं अकति आश्रयत्वेन गच्छ-
तीति । क+अक्+अण्+टाप् च । काका
जम्बूः । यद्वा काकवर्णा जम्बूः ।) जम्बूप्रभेदः ।
तत्पर्य्यायः । काकफला २ नादेयी ३ काकवल्लभा
४ भृङ्गेष्टा ५ काकनीला ६ ध्वाङ्क्षजम्बूः ७ धन-
प्रिया ८ । अस्या गुणाः । कषायत्वम् । अम्लत्वम् ।
पाके मधुरत्वम् । गुरुत्वम् । दाहश्रमातिसार-
नाशित्वम् । वीर्य्यवृद्धिबलप्रदत्वञ्च । इति राज
निर्घण्टः ॥

काकणं, क्ली, (कु ईषत् कणति निमीलति इति ।
अच् काकणं गुञ्जाफलं तद्वदाकृतिरस्यास्तीति
छायारक्तचिह्नितत्वादस्य तथात्वम् ।) कुष्ठविशेषः ।
तस्य लक्षणम् । यथा,—
"यत् काकणन्तिकावर्णमपाकं तीव्रवेदनम् ।
त्रिदोषलिङ्गं तत्कुष्ठं काकणं नैव सिध्यति" ॥
इति माधवकरः ॥ ("काकणं तीव्रदाहरुक् ॥
"पूर्व्वं रक्तञ्च कृष्णञ्च काकणन्तीफलोपमम् ।
कुष्ठलिङ्गैर्युतं सर्व्वैर्नैकवर्णं ततो भवेत् ॥
दोषभेदीयविहितैरादिशेल्लिङ्गकर्म्मभिः" ॥
इति वाभटे निदानस्थाने १४ अः ॥
"काकणन्तिका वर्णान्यादौ पश्चात् सर्व्वकुष्ठ-
लिङ्गसमन्वितानि पापीयसां सर्व्वकुष्ठलिङ्गसम्भवे
नानेकवर्णानि काकणानीति विद्यात् ।
इति निदानस्थाने ५ अः । चरकेणोक्तम् ।)

काकणन्तिका, स्त्री, (कु ईषत् कणन्ती निमीलन्ती ।
कन् निमीलने शतृ ङीप् कोःकादेशः । ततः कन्
टाप् च पृषोदरादित्वात् साधुः ।) गुञ्जा । इति
रत्नमाला । कुँच इति भाषा ॥
("यत्काकणन्तिकावर्णमपाकं तीव्रवेदनम्" ।
इति चरके चिकित्सास्थाने ७ अः ॥)

काकतिक्ता, स्त्री, (काकमांसवत् तिक्ता इति मध्यपद-
लोपि समासः ।) काकचिञ्चा । इति रत्नमाला ।
कुँच इति भाषा । (अस्याः पर्य्यायो यथा,—
"काकजङ्घा नदीकान्ता काकतिक्ता सुलोमशा ।
पारावतपदी दासी काका चापि प्रकीर्त्तिता" ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

काकतिन्दुकः, पुं, (कं जलं अकति इत्यण् । काकः
तिन्दुकः काकवर्णो वा तिन्दुकः काकप्रियस्तिन्दुको
वा ।) वृक्षविशेषः । माकड़ा केन्द । माकड़ो
गाव । काकतेँदु इति च भाषा । तत्पर्य्यायः । का-
केन्दुः २ कुलकः ३ काकपीलुकः ४ । इत्यमरः
। २ । ४ । ३९ ॥ काकपीलुः ५ काकाण्डः ६ काक-
स्फूर्ज्जः ७ काकाङ्कः ८ काकबीजकः ९ । अस्य
गुणाः । कषायत्वम् । अम्लत्वम् । गुरुत्वम् ।
वातविकारनाशित्वञ्च । पक्वस्य तस्य गुणाः ।
मधुरत्वम् । किञ्चित्कफकारित्वम् । वान्तिपित्त-
नाशित्वञ्च । इति राजनिर्घण्टः ॥ (काकाण्डशब्दे-
ऽस्य विवरणं ज्ञेयम् ॥)

काकतुण्डः, पुं, (काकतुण्डस्येव वर्णोऽस्त्यस्य । अर्श-
आदित्वात् अच् ।) कालागुरु । इति हेमचन्द्रः ॥

काकतुण्डिका, स्त्री, (काकतुण्डस्येव वर्णः फलांशेऽस्याः
इति ठन् । स्त्रियां टाप् च ।) काकचिञ्चा । गुञ्जा ।
इति हलायुधः ।

काकतुण्डी, स्त्री, (काकं ईषद्दुःखं तुण्डते नाशयतीति ।
तुडि ङ वधे+अण् । गौरादित्वात् ङीष् ।)
राजरीतिः । राजपित्तल इति भाषा । इति राज-
निर्घण्टः ॥ (काकतुण्डस्येवाकृतिर्विद्यते ऽस्याः ।
अर्श आदित्वादच् । गौरादित्वात् ङीष् ।) वृक्ष-
विशेषः । कौयाठोड़ी । इति हिन्दी भाषा ।
तत्पर्य्यायः । काकादनी २ काकपीलुः ३ काक-
शिम्बी ४ रक्तला ५ ध्वाङ्क्षादनी ६ वक्रशल्या ७
दुर्म्मोहा ८ वायसादनी ९ ध्वाङ्क्षनखी १० वायसी
११ काकदन्तिका १२ ध्वाङ्क्षदन्ती १३ । अस्य
गुणाः । कटुत्वम् । उष्णत्वम् । तिक्तत्वम् । द्रव-
त्वम् । रसायनत्वम् । वातदोषहारित्वम् । रुचि-
कारित्वम् । पलितस्तम्भित्वञ्च । इति राज-
निर्घण्टः ॥

काकध्वजः, पुं, (काकमीषज्ज्वालं वासं ध्वज इवास्य ।)
वाड़वाग्निः । इति त्रिकाण्डशेषः ॥

काकनामा, [न्] पुं, (काकस्य नाम नाम यस्य ।)
वकवृक्षः । इति रत्नमाला ॥ (काकशीर्षशब्दे-
ऽस्य विवरणं बोध्यम् ।)

काकनासः, पुं, (काकस्य नासाया वर्णः इव फले यस्य ।)
विकण्टकवृक्षः । इति राजनिर्घण्टः ॥

काकनासा, स्त्री, (काकस्य नासा इव फलमस्याः ।)
काकजङ्घावृक्षः । इति जटाधरः ॥ (अस्याः पर्य्याया
गुणाश्च यथा, भावप्रकाशस्य पूर्व्वखण्डे १ भागे ।
"काकनासा तु काकाङ्गी काकतुण्डफला च सा ।
काकनासा कषायोष्णा कटुका रस पाकयोः ।
कफघ्नी वामनी तिक्ता शोथार्शः श्वित्रकुष्ठहृत्" ॥

काकनासिका, स्त्री, (काकनासा ततः स्वार्थे कन्
टाप् अत इत्वम् ।) काकजङ्घावृक्षः । इत्यमरः ।
२ । ४ । ११८ ॥ रक्तचित्रत् । इति राजनिर्घण्टः ।

काकपक्षः, पुं, (काकस्य पक्ष इव आकारोऽस्यस्य ।
काकपक्ष+अच् ।) मस्तकपार्श्वद्वये केशरचना-
विशेषः । कायपाटा जन्पी इति च भाषा ।

तत्पर्य्यायः । शिखण्डकः २ । इत्यमरः । २ । ६ । ९६ ॥ शिखाण्डकः ३ शिखण्डः ४ । इति तट्टीका ॥ (यथा, रघुः । ११ । १ ।
"कौशिकेन स किल क्षितीश्वरो
राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचित-
स्तेजसां हि न वयः समीक्ष्यते" ॥)

काकपद, पुं, (बन्धस्य काकपदवदाकारवत्त्वात् काकपद इव आकृतिरस्यस्य ।) रतिबन्धविशेषः तस्य लक्षणम् । यथा,—
"पादौ द्वौ स्कन्धयुग्मस्थौ लिङ्गं लिङ्गं भगे न्यसेत् ।
कामयेत कामुकीं कामी बन्धः काकपदो मतः" ॥
इति रतिमञ्जरी ॥

काकपर्णी, स्त्री, (काक इव कृष्णा पर्णा यस्याः । गौरादित्वात् ङीष् ।) मुद्गपर्णी । इति भावप्रकाशः ॥ ("मुद्गपर्णी हिमा रूक्षा तिक्ता स्वादुश्च शुक्रला । चक्षुष्या क्षतशोथघ्नी ग्राहिणी ज्वरदाहनुत् । दोषत्रयहरी लघ्वी ग्रहण्यर्शोऽतिसारजित्" ॥
इति च भावप्रकाशस्य पूर्व्वखण्डे प्रथमभागे ।)

काकपीलु, पुं, (काकप्रियं पीलुः ।) काकतिन्दुकः । काकतुण्डी । श्वेतगुञ्जा इति राजनिर्घण्टः । (पर्य्यायोऽस्य यथा, भावप्रकाशस्य पूर्व्वखण्डे १ भागे । "श्वेता रक्तोच्चटा प्रोक्ता कृष्णला चापि सा स्मृता । रक्ता सा काकचिञ्ची स्यात् काकानन्ती च रक्तिका । काकादनी काकपीलुः सा स्मृता काकवल्लरी" ॥ विशेषविवरणमस्य च गुञ्जाशब्दे ज्ञेयम् ॥)

काकपीलुक, पुं, (काकपीलु + संज्ञायां कन् ।) काकतिन्दुकवृक्षः । इत्यमरः । २ । ४ । ३९ । माकडाकेन्दु इति भाषा ॥

काकपुच्छ, पुं, (काकस्य पुच्छ इव पुच्छो यस्य ।) कोकिलः । इति शब्दरत्नावली ॥

काकपुष्ट, पुं, (काकेन पुष्टः । कोकिलया हि निजाण्डस्फोटनाशक्ततया काकाण्डं तन्नीडात् निक्षिप्य तत्र स्वकीयाण्डं स्थापयित्वा काकद्वारा सापत्यपोषणात् अस्य तथात्वम् ।) कोकिलः । इति त्रिकाण्डशेषः ॥

काकपुष्प, स्त्री, (काकवत् कृष्णं पुष्पमस्य ।) गन्धपर्णम् । इति राजनिर्घण्टः ॥

काकफल, पुं, (काकप्रियं फलमस्य ।) निम्बवृक्षः । इति राजनिर्घण्टः ॥ (निम्बशब्देऽस्य गुणादयो ज्ञातव्याः ॥)

काकबलि, पुं, (काकेभ्यो देयो बलिरन्नादिकम् ।) काकसम्प्रदानकान्नादि । तद्दानविधिर्यथा ।
"ॐ यमद्वारपथस्थितनानादिग्देशीयवायसेभ्यो नमः । इति पाद्यादिभिरभ्यर्च्य प्रार्थयेत् ।
'ॐ काकत्वं यमदूतोऽसि गृहाण बलिमुत्तमम् । यमलोकगतं प्रेतं समाप्याययितुमर्हसि ॥
ॐ काकाय काकपुरुषाय वायसाय महात्मने । बलिं पिण्डं प्रदास्यामि कथ्यतां धर्म्मराजनि' ॥ इति पुष्करपिण्डदानमन्त्रवायुधः ॥ * ॥
बलिवैश्वदेवान्तर्गततद्विधिर्यथा,—
"ऐन्द्रवारुणवायव्या सौम्या वै नैर्ऋतास्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम्" ॥
ॐ काकेभ्यो नमः । इति दद्यात् तदुपरि चाद्भिः सिञ्चेत् । इत्याह्निकाचारतत्त्वम् ॥ * ॥
गयायां तद्विधिर्यथा,—
"बलिं काकशिलायाञ्च काकमोक्षमवाप्नुयात्" ।
इति श्रीवायुपुराणे श्वेतवाराहकल्पे गयामाहात्म्ये ४ अध्यायः ॥ तत्र तृतीयदिनकृत्ये काकबलिदानं यथा,—
'ततः काकबलिं क्षिप्त्वा पुनः स्नानं समाचरेत् ।
ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा ॥
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम्' ॥
इति श्रीवायुपुराणे ७ अध्यायः ॥

काकभाण्डी, स्त्री, (काकस्य मुखोद्भवरसकारणस्य ईषज्ज्वलस्य भाण्डी क्षुद्रभाण्डमिव । तत्फलभक्षणेन मुखात ईषज्ज्वलक्षरणात् अस्यास्तथात्वम् ।) महाकरञ्जः । इति राजनिर्घण्टः ॥

काकभीरु, पुं, (काकात् भीरुर्भयशील ।) पेचकः । इति त्रिकाण्डशेषः ॥

काकमद्गु, पुं, (काक इव कृष्णो मद्गुर्जलचरपक्षिविशेषः ।) दात्यूहपक्षी । इति त्रिकाण्डशेषः ॥ (डाउकपाखी इति भाषा ॥ यथा, महाभारते १३ । दानधर्म्मे संसारचक्रकथने ११२ । १२१ ।
'घृतं हृत्वा तु दुर्बुद्धिः काकमद्गुः प्रजायते" ॥)

काकमर्द्द, पुं, (काकं मृद्नातीति । काक + मृद् + अण् ।) महाकालवृक्षः । इति राजनिर्घण्टः ॥

काकमर्द्दक, पुं, (काकमर्द्द + संज्ञायां कन् ।) महाकालवृक्षः । इति रत्नमाला । माकाल इति भाषा ॥

काकमाचिका, स्त्री, (काकमाची + स्वार्थे कन् ।) काकमाचीवृक्षः । इति शब्दरत्नावली ॥

काकमाची, स्त्री, (काकान् मचते अर्च्चयति फलदानेनेति । मचि + अण् + गौरादित्वात् ङीष् पृषोदरादित्वात् न लोपः ।) क्षुद्रवृक्षविशेषः । गुडकामाइ इति भाषा । तत्पर्य्यायः । वायसी २ । इत्यमरः । २ । ४ । १५१ । ध्वाङ्क्षमाची ३ वायसाह्वा ४ सर्व्वतिक्ता ५ बहुफला ६ कटफला ७ रसायनी ८ गुच्छफला ९ काकमाता १० स्वादुपाका ११ सुन्दरी १२ तिक्तिका १३ बहुतिक्ता १४ । अस्या गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । कफशूलार्शःशोथदोषकुष्ठकण्डूनाशित्वम् । इति राजनिर्घण्टः । त्रिदोषशमताकारित्वम् । स्निग्धत्वम् । रसायनत्वम् । नातिशीतत्वम् । स्वरत्वम् । वृष्यत्वम् । भेदकत्वञ्च । इति राजवल्लभः ॥ (तथाच भावप्रकाशस्य पूर्व्वखण्डे १ भागे । "काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रदा ॥ तिक्ता रसायनी शोथकुष्ठार्शोज्वरमेहजित् । कटुर्नेत्रहिता हिक्काच्छर्दिहृद्रोगनाशिनी" ॥)

काकमाता स्त्री, (काकस्य मातेव पोषिका । काकस्य तत्फलप्रियत्वात् ।) काकमाची । इति राजनिर्घण्टः । (काकमाचीशब्दे पर्य्यायगुणादिकं द्रष्टव्यम् ॥)

काकमुद्गा, स्त्री, (काकेन ईषज्जलेन मुदं गच्छतीति । काक + मुद् + गम् + ड + टाप् ।) मुद्गपर्णीवृक्षः । इत्यमरः । २ । ४ । ११३ ॥ मुगानी इति भाषा ॥ (अस्याः पर्य्यायो यथा,—
"मुद्गपर्णी काकपर्णी सूर्य्यपर्ण्यल्पिका सहा । काकमुद्गा च सा प्रोक्ता तथा मार्ज्जारगन्धिका" ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ गुणादयोऽस्या मुद्गपर्णीशब्दे ज्ञेयाः ॥)

काकयव, पुं, (काकभीषज्ज्वल यत्र तादृशो यव इव नीरसत्वात्, यद्वा काकवन्निर्गुणो यवः ।) तण्डुलशून्यधान्यम् । आगडा इति भाषा ॥ ("यथा फला षण्ढतिला यथा चर्म्ममयो मृगः । तथैव पाण्डवाः सर्व्वे यथा काकयवा इव" । इति महाभारते सभापर्व्व ॥ तथा पञ्चतन्त्रे २ । ८५ । "यथा काकयवाः प्रोक्ता यथारण्यभवास्तिलाः । नाममात्रा न सिद्धौ हि धनहीनास्तथा नराः" ॥)

काकरुहा, स्त्री, (काक इव रोहति मूलशून्यतया वृक्षाद्यवलम्बनेन जायते इति । काक + रुह + क । काकवत् परपुष्टत्वात् अस्यास्तथात्वम् । यद्वा काकपुरीषात् रोहति उत्पद्यते वृक्षोपरीत्यर्थः अतएव तत् सञ्जायमानायते ।) वन्दाकः । इति त्रिकाण्डशेषः ॥

काकरूक, पुं, (कु कुत्सितं करोतीति । कु + कृ + ऊक । कोः कादेशः ।) स्त्रीजितः । उलूकः । दम्भः । दिगम्बरभीरुकनिर्द्धनेषु त्रि । इति हेमचन्द्रः ॥

काकल, स्त्री, (ईषत्कलो यस्मात् । कोः कादेशः ।) कण्ठमणिः । इति त्रिकाण्डशेषः ॥ (ग्रीवायोर्द्धत देशः । इति सुश्रुतः ॥ टुँटि इति भाषा ।)

काकल, पुं, (का इत्याकारः कलो यस्य ।) द्रोणकाकः । इति शब्दरत्नावली ॥

काकलक, पुं, (काकल स्वार्थे कन् ।) कण्ठमणिः । इति हेमचन्द्रः ॥

काकलि, स्त्री, (कल् + इन् कलिः । कु ईषत् कलिः । कोः कादेशः ।) सूक्ष्ममधुरास्फुटध्वनिः । इत्यमरटीकायां भरतः । ("कोकिलकाकलिकूजितकुञ्जम्" । इति शिष्टप्रयोगः ॥)

काकली, स्त्री, (काकलि + कृदिकारान्तत्वात् वा ङीष् ।) सूक्ष्ममधुरास्फुटध्वनिः । इत्यमरः । १ । ७ । २ ॥ (यथा, गीतगोविन्दे । १ । ४ । ११ ।
'उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः । नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षणप्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः" ॥)

काकलीद्राक्षा, स्त्री, (काकलीव सूक्ष्मा द्राक्षा ।) द्राक्षाभेदः । किसमिस इति ख्याता । तत्पर्य्यायः । जम्बुका २ फलोत्तमा ३ लघुद्राक्षा ४ निर्ब्बीजा ५ सूक्ष्मा ६ रसाधिका ७ । तस्या गुणाः । मधुरत्वम् । अम्लत्वम् । रुच्यत्वम् । वमिकारित्वम् । शिशिरत्वम् । श्वासक्षयनाशित्वम् । जनचक्षुर्मदश्च । इति राजनिर्घण्टः ॥

काकलीरव, पुं, (काकली मधुरास्फुटो रवो यस्य ।) कोकिलः । इति राजनिर्घण्टः ॥ (सूक्ष्ममधुरास्फुटध्वनौ तु कर्म्मधारयः ॥)

काकवल्लरी, स्त्री, (काकप्रिया वल्लरी ।) स्वर्णवल्ली ।

काचमलं, क्ली, (काचस्य क्षारमृत्तिकाया मलमिव ।) काचलवणम् । इति राजनिर्घण्टः ॥

काचलवणं, क्ली, (काचात् क्षारमृत्तिकाया जातं लवणम् ।) लवणविशेषः । कालानुन इति भाषा । तत्पर्य्यायः । नीलम् २ काचोद्भवम् ३ काचम् ४ नीलकम् ५ काचसम्भवम् ६ काचसौवर्च्चलम् ७ कृष्णलवणम् ८ पाक्यम् ९ काचोत्थम् १० एयगन्धम् ११ कालवणम् १२ कुरुविन्दम् १३ काचमलम् १४ कृत्रिमम् १५ । अस्य गुणाः । रुचिकारित्वम् । ईषत्क्षारत्वम् । पित्तवर्द्धिकारित्वम् । दाहदातृत्वम् । कफवातगुल्मशूलनाशित्वम् । अग्निदीपनत्वञ्च । इति राजनिर्घण्टः ॥

काचसम्भवं, क्ली, (सम्भवत्यस्मादिति सम्भवः । काचः क्षारमृत्तिका सम्भव उत्पत्तिस्थानमस्य ।) काचलवणम् । इति राजनिर्घण्टः ॥

काचसौवर्च्चलं, क्ली, (काचस्थानिकं सौवर्च्चलं लवणम् ।) काचलवणम् । इति राजनिर्घण्टः ॥

काचस्थाली, स्त्री, (काचस्य क्षारस्य स्थालीव ।) फलेरुहावृक्षः । पारुल गाछ इति भाषा । इत्यमरः । २ । ४ । ५४ ॥ (अस्याः पर्य्याये यथा,—
"पाटलिः पाटला मोघा मधुदूती फलेरुहा ।
कृष्णवृन्ता कुबेराक्षी कालस्थाल्यलिवल्लभा ॥
ताम्रपुष्पी च कथिता परा स्यात् पाटला सिता ।
मुष्कको मोक्षकोघण्टा पाटलिः काष्ठपाटला" ॥
कालस्थालीत्यत्र काचस्थालीत्येके ।
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
गुणादयोऽस्याः पाटलिशब्दे ज्ञेयाः ॥ काचनिर्म्मिता स्थाली ।) काचपात्रम् ॥

काचिघः, पुं, (कचते दीप्यते इति बाहुलकात् इन् । काचिं कान्तिं हन्ति गच्छति । हन गतौ + ड । पृषोदरादित्वात् हस्य घः ।) काञ्चनम् । छेमण्डः । छिमड़ा । इति भाषा । मूषिकः । इति मेदिनी ॥

काचित्, व्य (पाणिनिमते पदद्वयमेतत् । मुग्धबोधमते "किमःसयत्नाश्चिच्चनौ" इति का + चित्प्रत्ययः ।) काचन । कापि स्त्री । इति व्याकरणम् । (यथा, पदाङ्कदूते २ ।
"गोपीभर्त्तुर्विरहविधुरा काचिदिन्दीवराक्षी
उन्मत्तेव स्खलितकबरी निःश्वसन्ती विशालम्" ॥)

काचितं, त्रि, (कच्यते बध्यतेऽसौ । कच् + णिच् + कर्म्मणि क्तः ।) शिक्यितम् । शिक्यारोपितवस्तु । इत्यमरः । ३ । १ । ८८ ॥ शिकाय तोला मय इति भाषा ॥

काचिमः, पुं, (कच बन्धे + णिच् + इमन् ।) देवकुलोद्भववृक्षः । तत्पर्य्यायः । भल्लरः २ । इति त्रिकाण्डशेषः ॥

काञ्चनं, क्ली, (काञ्चते दीप्यते इति । कचि ङ दीप्तौ + ल्युः ।) स्वर्णम् । इत्यमरः । २ । ९ । ९५ ॥ (यथा मनुः । २ । २३९ ।
"अमेध्यादपि सद्वृत्तममेध्यादपि काञ्चनम्" ॥) पद्मकेशरम् । इति मेदिनी ॥ धनम् । नागकेशरपुष्पम् । इति राजनिर्घण्टः ॥ (भावे ल्युट् । दीप्तिः । काञ्चनमये त्रि, यथा, मनुः । ५ । ११२ ।
"निर्लेपं काञ्चनं भाण्डमद्भिरेव विशुध्यति" ॥)

काञ्चनः, पुं, (काञ्चते दीप्यते इति कर्त्तरि ल्युः ।) स्वनामख्यातपुष्पवृक्षविशेषः । स तु द्विविधः । आद्यस्य पर्य्यायः । रक्तपुष्पः २ कोविदारः ३ युग्मपत्रः ४ कुद्दालः ५ ॥ द्वितीयस्य पर्य्यायः । काञ्चनालः २ कर्बुदारः ३ पाकारिः ४ । इति रत्नमाला ॥ अस्य राजनिर्घण्टोक्तगुणपर्य्यायौ कोविदारशब्दे द्रष्टव्यौ ॥ चम्पकः । नागकेशरः । उदुम्बरः । धुस्तूरः । इति मेदिनी ॥ (पुरूरवसो वंशे उद्भवस्य भीमस्य पुत्त्रः । यथा, भागवते । ९ । १५ । २ ।
"भीमस्तु विजयस्याथ काञ्चनो होत्रकस्ततः" ॥)

काञ्चनकं, क्ली, (काञ्चन + संज्ञायां कन् ।) हरितालम् । इति राजनिर्घण्टः ॥

काञ्चनकः, पुं, (काञ्चन + स्वार्थे कन् ।) कोविदारवृक्षः । इति वैद्यकम् ॥
("काञ्चनारः काञ्चनको गण्डारिः शोणपुष्पकः" । इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ गुणादयोऽस्य कोविदारशब्दे ज्ञेयाः ॥)

काञ्चनकदली, स्त्री, (काञ्चनवर्णा कदली ।) सुवर्णकदली । इति राजनिर्घण्टः । चाँपाकला इति भाषा ॥

काञ्चनकारिणी, स्त्री, (काञ्चनं वन्धनमिव वन्धनं करोति । काञ्चन + कृ + णिनिः । स्त्रियां ङीप् ।) शतमूली । इति शब्दचन्द्रिका ॥ (शतावरी शब्देऽस्या विवरणं बोद्धव्यम् ॥)

काञ्चनक्षीरी, स्त्री, (काञ्चनमिव क्षीरमस्याः । गौरादित्वात् ङीप् । काञ्चनवृक्षस्य क्षीरमिव क्षीरमस्य वा ।) क्षीरिकीलता । इति राजनिर्घण्टः ॥

काञ्चनगिरिः, पुं, (काञ्चनमयो गिरिः । शाकपार्थिवादित्वात् समासः ।) सुमेरुपर्व्वतः । इति हेमचन्द्रः । (यथा, भागवते । ५ । १६ । २८ ।
"जठरदेवकूटौ मेरुं पूर्व्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विसहस्रं पृथुतुङ्गौ भवतः । एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतौ एवमुत्तरतस्त्रिशृङ्गमकरावष्टाभिरेतैः परिसृतोऽग्निरिव परितश्चकास्ति काञ्चनगिरिः" ॥ दानाय दत्तः सुवर्णपर्व्वतः ॥)

काञ्चनपुष्पकं, क्ली, (काञ्चनमिव पीतं पुष्पं यस्य । काञ्चनपुष्प + कप् ।) आउल्यवृक्षः । इति राजनिर्घण्टः ॥

काञ्चनपुष्पी, स्त्री, (काञ्चनमिव पुष्पं यस्याः ङीप् ।) गणिकारीवृक्षः । इति राजनिर्घण्टः ॥ (गणिकारिका शब्दे ऽस्या विशेषो ज्ञातव्यः ॥)

काञ्चनारः, पुं, (काञ्चनं तद्वर्णं ऋच्छति पुष्पैः । काञ्चन + ऋ + अण् ।) कोविदारवृक्षः । इति राजनिर्घण्टः ॥ कचनार इति हिन्दी भाषा ॥ ("काञ्चनारः काञ्चनकः" इत्यादि पर्य्यायाः काञ्चनकशब्दे गुणाश्च कोविदारशब्दे ज्ञातव्याः ॥ व्यवह्रियते यत्र तद्यथा,—
"काञ्चनारत्वचः क्वाथः शुण्ठीचूर्णेन नाशयेत् ।
गण्डमालान्तथा क्वाथः क्षौद्रेण वरुणत्वचः" ॥
इति मध्यखण्डे २ अः शार्ङ्गधरेणोक्तम् ॥)

काञ्चनालः, पुं, (काञ्चनं काञ्चनवर्णं अलति । काञ्चन + अल + अण् ।) कोविदारवृक्षः । इति शब्दरत्नावली । (काञ्चनारशब्देऽस्य गुणादयो ज्ञेयाः ॥ अस्य विवृतिः कोविदारशब्दे द्रष्टव्या ।)

काञ्चनाह्वयः, पुं, (काञ्चनं स्वर्णं आह्वयते स्पर्द्धते सभासा । आ + ह्वे + शः । काञ्चन इत्याह्वयो नाम यस्य वा ।) नागकेशरवृक्षः । इत्यमरः । २ । ४ । ६५ ॥

काञ्चनी, स्त्री, (काञ्चते दीप्यते अनया । करणे ल्युट् ङीप् ।) हरिद्रा । इति मेदिनी ॥ स्वर्णक्षीरीवृक्षः । गोरोचना । इति राजनिर्घण्टः ॥

काञ्चनीया, स्त्री, (काञ्चनाय हिता । काञ्चन + छः टाप् च ।) गोरोचना । इति राजनिर्घण्टः ॥

काञ्चिः, स्त्री, (काञ्चते इति "सर्व्वधातुभ्य इन्" । उणां ४ । ११७ । इति इन् ।) काञ्ची । इत्युणादिकोषः ॥ (यथा आर्य्यासप्तशती ६९३ ।
"हृतकाञ्चिवल्लिवन्धोत्तरजघनादपरभोगभुक्तायाः ।
उल्लसति रोमराजिः फणभृल्लोर्गरलरेखेव" ॥)

काञ्चिकं, क्ली, (काञ्चि + संज्ञायां कन् ।) काञ्जिकम् । इति हेमचन्द्रः ॥

काञ्ची, स्त्री, (काञ्चि, "कृदिकारात्तलात्" वा ङीप् ।) स्त्रीकट्याभरणम् । चन्द्रहार गोट् इत्यादि भाषा । तत्पर्य्यायः ॥ मेखला २ सप्तकी ३ रसना ४ सारसनम् ५ । इत्यमरः । २ । ६ । १०८ ॥ काञ्चिः ६ रशना ७ कक्षा ८ कक्ष्या ९ लम्बका १० सारशनम् ११ रसनम् १२ बन्धनम् १३ । इति शब्दरत्नावली ॥
("वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः" ॥ इति मेघदूते । ३० ॥) केचित्तु
एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका ।
रसना षोड़श ज्ञेया कलापः पञ्चविंशकः" ॥
इति पठन्ति इह त्वभेदात् पर्य्यायता । इति तट्टीका ॥ मोक्षदसप्तपुर्य्यन्तर्गतपुरीविशेषः । इति मेदिनी ॥ (यदुक्तम् ।
"अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः" ॥
इयं हि कूर्म्मविभागे दक्षिणस्यां दिशि स्थिते द्राविड़देशे अनुमीयते ॥) गुञ्जा । इति विश्वः ॥

काञ्चीपदं, क्ली, (काञ्च्याः पदं स्थानम् ।) जघनम् । इति हलायुधहेमचन्द्रौ ॥

काञ्जिकं, क्ली, (अन्ज + धात्वर्थनिर्द्देशे ण्वुल् + टाप् अत इत्वञ्च । अञ्जिका । कु कुत्सिता अञ्जिका व्यक्तिर्यस्य कोः कादेशः ।) वारिपर्य्युषितान्नास्त्रजलम् । काँजी इति भाषा । तत्पर्य्यायः । आरनालकम् २ सौवीरम् ३ कुल्माषम् ४ अभिषुतम् ५ अवन्तिसोमम् ६ धान्याम्लम् ७ कुञ्जलम् ८ । इत्यमरः । २।९।३९॥ कुल्मासम् ९ कुल्माषाभिषुतम् १० काञ्चिकम् ११ काञ्जीकम् १२ काञ्जिका १३ कञ्जिकम् १४ काञ्जी १५ भक्तवारि १६ धान्यमूलम् १७ धान्ययोनि १८ तुषाम्बु १९ । इति तट्टीका ॥ रुक्षाम्लम् २०

महारसम् २१ । इति रत्नमाला ॥ सुमोदकम् २२ सुक्तम् २३ चुक्रम् २४ धातुघ्नम् २५ उन्नाहम् २६ रक्षोघ्नम् २७ कुण्डगोलकम् २८ सुवीराम्लम् २९ । इति हेमचन्द्रः ॥ वीरम् ३० अभिशवम् ३१ अम्लसारकम् ३२ । अस्य गुणः । वातश्लेष्मपित्तज्वरदाहमूर्च्छाशूलाध्मानविबन्धनाशित्वम् ।
"काञ्जिकं दधि तैलन्तु बस्तीमर्जितमाशमम् ।
दाहकं गात्रशैथिल्यं बल्यं सन्तर्पणं परम्" ॥
मर्द्दनाच्च भक्षणात् । इति राजनिर्घण्टः ॥ अपि च । भेदकत्वम् । तीक्ष्णत्वम् । उष्णत्वम् । पित्तकृद्विबस्तिशुद्धिमिष्टकारित्वम् । स्पर्शे शीतलत्वम् । श्रमक्लमनाशित्वञ्च । पुरातनस्य तस्य गुणः । हृत्पाण्डुकृमिरोगनाशित्वम् । अग्निवृद्धिकारित्वञ्च । इति राजवल्लभः ॥ * ॥
"कुल्माषधान्यमण्डेन चाद्यत काञ्जिकं भवेत् ।
यन्मन्थादिगुणौ भाण्डे स गुडच्छौदकाञ्जिकम् ।
धान्यराशौ त्रिरात्रस्य शुक्तं चुक्रं तदुच्यते" ॥
इति वैद्यकपरिभाषा ॥

काञ्जिकवटक, पुं, (काञ्जिकयोगेन कृतो वटकः ।) वटकविशेषः । काँजि बड़ा इति भाषा । तस्य पाकप्रकारो यथा,—
"मञ्जनी नूतना धार्य्या कटुतैलेन लेपिता ।
निर्म्मलेनाम्बुनापूर्य्य तस्यास्तूर्णं विनिक्षिपेत् ॥
राजिकाजीरलवणहिङ्गुशुण्ठीनिशाक्षतम् ।
निक्षिपेद्वटकांस्तत्र भाण्डस्यास्यञ्च मुद्रयेत् ॥
ततो दिनत्रयादूर्द्ध्वमम्ला स्युर्वटका ध्रुवम्" ॥
अस्य गुणाः ।
"काञ्जिकवटको रुच्यो वातहृत् श्लेष्मकारकः शीतः ।
दाहं शूलमजीर्णं हरते नेत्रामयेष्वहितः" ॥
इति भावप्रकाशः ॥

काञ्जिका, स्त्री, (कुत्सिता ईषद्वा अञ्जिका ।) जीवन्ती लता । पलाशीलता । इति राजनिर्घण्टः ॥

काञ्जी, स्त्री (कं जलं अनक्ति । क + अन्ज + कर्म्मणि + अण् । गौरादित्वात् ङीष् ।) महाद्रोणावृक्षः । इति राजनिर्घण्टः ॥ काञ्जिकम् । इत्यमरटीका ॥ ("तुम्बीबीजं सौङ्क्षिदकं काञ्जीपिष्टं गुडीत्रयम् ।
कर्षोन्हरं गुदस्य स्याद्दधिमाहिषमस्तुत" ॥
इति तु काञ्जिकार्थे ज्ञेयम् ॥ इति वैद्यकचक्रपाणिसंग्रहे अर्शोऽधिकारे ।)

काठ, पुं, (काध्यते लङ्घ्यते इति । कठ + कर्म्मणि घञ् ।) पाषाणः । इति त्रिकाण्डशेषः ॥

काठिन्य, क्ली, (कठिनस्य भावः । कठिन + ष्यञ् ।) कठिनता । यथा । "सीते मा कुरु सम्भ्रमञ्च मृदुना काठिन्यमङ्गीकृतम्" । इत्युद्भटः ॥
(यथा च कुमारे । ६ । ७३ ।
"काठिन्यं स्थावरे काये भवता सर्व्वमर्पितम्" ॥)

काठिन्यफल, पुं (काठिन्यं फले यस्य ।) कपित्थवृक्षः । इति राजनिर्घण्टः ॥ (कपित्थशब्देऽस्य गुणादयो बोद्धव्याः ॥)

काण, पुं, (कणति एकचक्षुर्निमीलतीति । कण स आयां कर्त्तरि घञ् ।) काकः । इति मेदिनी ॥

काण, त्रि, (कणति एकचक्षुषा पश्यति । कण + घञ् ।) एकचक्षुः । इति मेदिनी ॥ काणा इति भाषा । (यथा, मनुः । ३ । २४२ ।
"खञ्जो वा यदि वा काणो दातुः प्रेष्योऽपि वा भवेत्" ॥)

काणूक, पुं, (कणति शब्दायते । कण शब्दे + "कृकभिभ्यामूकोकणौ" । उणां ४ । ३९ । इत्यूकण् ।) काकः । इत्युणादिकोषः ॥

काण्ड, क्ली, (कणतीति । कण शब्दे + डः । बाहुलकात् दीर्घः ।) सन्धिविच्छिन्नैकखण्डास्थि । यथा ।
"भग्नं समासाद्द्विविधं हुताश-
काण्डे च सन्धौ च हि तत्र सन्धौ ।
उत्पिष्टविश्लिष्टविवर्त्तितञ्च
तिर्य्यग्गतं क्षिप्तमधश्च षट् च" ॥
इति रोगविनिश्चयः ॥ सन्धिविच्छिन्नमेकखण्डमस्थि काण्डम् । काण्डेन च तलकोपमाणवजयतवपक्ष कानां ग्रहणम् । तत्र भग्नं काण्डभग्नम् । इति तट्टीकायां मधुकोषः ॥

काण्ड, पुं क्ली, (कमि दीप्तौ + अमन्तात् डः । ञादिश्च ङित अनुनासिकस्येति दीर्घः ।) दण्डः । (यथा, कात्यायनश्रौतसूत्रे ८ । ७ । २७ ।
"एषता वरुणाकाण्डेनाहन्ति" ।
"वरुणाकाण्डेन वरुणदण्डेन" । इति कर्कः ॥) बाणम् । बाणः । (यथा, महाभारते १३ । ५ । ३ ।
"विषये काशिराजस्य ग्रामान्निष्क्रम्य लुब्धकः ।
सविषं काण्डमादाय मृगयामास वै मृगम्" ॥)
शरवृक्षः । अर्व्वा । कुत्सितः । वर्गः । (वर्गश्च एकजातीयसमवायः । यथा, भागवते । ४ । २४ । ९ ।
'क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह ॥)
परिच्छेदः । (यथा, अथर्व्ववेदे १२ । ३ । ४५ ।
'इदं प्रापमुत्तमं काण्डमस्य यस्माल्लोकात्परमेष्ठी समाप" ॥) अवसरः । प्रस्तावः । वारि । जलम् । इत्यमरः । ३ । ३ । ४३ ॥ (यथा, हे रामायणे २ । ८९ । १८ ।
"तान्तु गत्वा परं तीरमवरोप्य च तं जनम् ।
निरुक्ता काण्डचित्राणि क्रियन्ते दाशबन्धुभिः" ॥
"क्रीडार्थं काण्डचित्राणि काण्डे जले चित्राणि चित्रगमनानि लघुत्वात् क्रियन्ते कौतुकं" ॥
इति तट्टीका ॥) स्तम्भः । (यथा, अमरुशतके ८५ ।
"उरुद्वयं मृगदृशः कदलस्य काण्डौ
मध्यञ्च वेदिरतुलं स्तनयुग्ममस्याः" ॥)
तृणादिगुच्छः । (यथा, भट्टिः ५ । १८ ।
"दूर्व्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला" ॥) तरुस्कन्धः । गुँड़ि इति भाषा । (यथा रामायणे ।
"वृक्षकाण्डमितो भाति" ॥ वृक्षस्य शाखा । यथा मनुः १ । ४६ ।
"उद्भिज्जाः स्थावराः सर्व्वे बीजकाण्डप्ररोहिणः" ।
"केचित्काण्डात् शाखा एव रोपिता वृक्षतां यान्ति" ॥
इति तट्टीका ॥ वृन्दः । समूहः । रहः । निर्जनस्थानम् । इति मेदिनी ॥ श्लाघा । इति हेमचन्द्रः ॥ मापीयान् । इति धरणिः ॥

काण्डकटुक पुं, (काण्डे स्कन्धे लतायामित्यर्थः कटुकः तिक्तः ।) कारवेल्लः । इति राजनिर्घण्टः ॥ (कारवेल्लशब्देऽस्य विवरणं ज्ञेयम् ॥)

काण्डकाण्डक, पुं, (काण्डस्य शरवृक्षस्य काण्डमिव काण्डं यस्य । काण्डकाण्ड + कप् ।) काशतृणम् । इति राजनिर्घण्टः ॥

काण्डकार, स्त्री, (काण्डं स्कन्धं किरति दीर्घतया उत्क्षिपति । काण्ड + कॄ + अण् ।) गुवाकः । इति शब्दमाला ॥ (पुंसि तु काण्डं बाणं करोति इति काण्डकारः । बाणकारकः ॥)

काण्डकीलक, पुं, (काण्डे स्कन्धे कीलकमिव यस्य । काण्डकील + कप् ।) लोध्रः । इति राजनिर्घण्टः । लोधकाठ इति भाषा ॥

काण्डगुण्ड, पुं, (काण्डेन गुच्छेन गुण्डयति वेष्टयति भूमिम् । काण्ड + गुडि वेष्टने + अण् ।) गुण्डनामतृणम् । इति राजनिर्घण्टः ॥

काण्डगोचर, पुं, (काण्डस्य बाणस्य गोचर इव गोचरो यस्य ।) नाराचः । लौहमयबाणः । इति त्रिकाण्डशेषः ॥

काण्डणी, स्त्री, (काण्डेन स्तम्बेन नीयतेऽसौ काण्डं नयति आत्मानं वा । काण्ड + नी + क्विप् । पूर्वोदरादित्वात् णत्वम् ।) सूक्ष्मपर्व्वलता । रामदूती इति ख्याता । इति शब्दचन्द्रिका ॥

काण्डतिक्त, पुं, (काण्डे स्कन्धे तिक्तः ।) भूनिम्बः । इति राजनिर्घण्टः ॥ (अस्य पर्य्यायो यथा,—
"किराततिक्तः कैरातः कटुतिक्तः किरातकः ।
काण्डतिक्तो नार्य्यतिक्तो भूनिम्बो रामसेनकः" ।
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे । गुणादयोऽस्य किराततिक्तशब्दे ज्ञेयाः ॥)

काण्डतिक्तक, पुं, (काण्डतिक्त + स्वार्थे कन् ।) भूनिम्बवृक्षः । इति शब्दचन्द्रिका । चिराता इति भाषा ॥

काण्डनील, पुं, (काण्डे स्कन्धे नीलः ।) लोध्रः । इति राजनिर्घण्टः ॥

काण्डपट, पुं, (काण्डे काष्ठादिनिर्म्मितस्तम्भे आवरकत्वात् स्थितः पटः ।) यवनी । तिरस्करिणी । इति हेमचन्द्रः । कानात् इति भाषा ॥

काण्डपुङ्खा, स्त्री, (काण्डस्य बाणस्य पुङ्ख इव पुङ्खो यस्याः ।) शरपुङ्खा । इति राजनिर्घण्टः ॥

काण्डपुष्प, क्ली, (काण्डात् स्कन्धं व्याप्य पुष्पं यस्याः ।) क्षुद्रसुगन्धिपुष्पविशेषः । इति शब्दचन्द्रिका । दोना इति भाषा ॥

काण्डपृष्ठ, स्त्री, (काण्डं तरुस्कन्ध इव स्थूलं पृष्ठं यस्य ।) कर्णधनुः । इति महाभारतम् ॥

काण्डपृष्ठ, त्रि, (काण्डं बाणः पृष्ठे यस्य ।) काण्डस्पृष्टः । शस्त्राजीवः । इत्यमरटीकायां स्वामी ॥ ("स्त्रीपूर्व्वाः काण्डपृष्ठाश्च यावन्तो भरतर्षभ ।
अजपा ब्राह्मणास्तेन श्राद्धे नार्हन्ति केतनम्" ॥
इति महाभारते । १३ । २३ । २२ ॥) वैश्यापतौ पुं । इति दानधर्म्मः ॥

काण्डवारिणी, स्त्री, (काण्डान् संग्रामापतितान् वाणान् स्मरणादेव निवारयतीति । काण्ड + वृ + णिच् + णिनि ।) दुर्गा । यथा,—
"महागजघटाटोपसयुगे नरवाणिनाम् ।
स्मरणाद्धरते बाणान् तेन सा काण्डवारिणी" ॥
इति देवीपुराणे देवीनिरुक्तनाम ४५ अध्यायः ॥

**काण्डरुहा**, स्त्री, (काण्डात् छिन्नस्कन्धात् रोहतीति । काण्ड + रुह + कः टाप् च ।) कटुकी । इति रत्नमाला ॥ (अस्याः पर्य्यायो यथा,—
"कट्वी तु कटुका तिक्ता कृष्णभेदा कटुम्भरा ।
अशोका मत्स्यशकला चक्राङ्गी शकुलादनी ॥
मत्स्यपित्ता काण्डरुहा रोहिणी कटुरोहिणी" ॥
इति भावप्रकाशस्य पूर्ब्बखण्डे प्रथमे भागे ॥ अस्याः गुणाः कटुकाशब्दे ज्ञेयाः ॥)

**काण्डर्षिः**, पुं, (काण्डस्य वेदविभागस्य ऋषिः । यद्वा काण्डेषु एकजातीयक्रियादिसमवायेषु ऋषिर्विचारकः ।) वेदकाण्डविशेषाध्यायकमुनिभेदः । स तु जैमिन्यादिः । इति त्रिकाण्डशेषः ॥ (जैमिनिस्तु पूर्ब्बमीमांसाशास्त्रप्रणयनेन क्रियाकाण्डस्य विचारकः । तथा वेदव्यासः उत्तरमीमांसारूपवेदान्तशास्त्रप्रणयनेन ज्ञानकाण्डस्य विचारकः । इत्यादि सूरिभिर्निरुक्तम् ॥)

**काण्डवान्**, [त्] त्रि, (काण्डः शरःप्रहरणतया अस्यास्ति इति । काण्ड + मतुप् । मस्य वः ।) काण्डीरः । इत्यमरः । २ । ८ । ६९ ॥ तीरन्दाज इति भाषा ॥

**काण्डसन्धिः**, पुं, (काण्डस्य स्कन्धस्य सन्धिः मेलनस्थानम् ।) ग्रन्थिः । इति राजनिर्घण्टः ॥ गाब् गाँट इति च भाषा ॥

**काण्डस्पृष्टः**, त्रि, (स्पृष्टं गृहीतं काण्डं येन निष्ठान्तत्वात् परनिपातः ।) काण्डपृष्ठः । शस्त्राजीवी । इत्यमरः । २ । ८ । ६७ ॥

**काण्डहीनं**, क्ली, (काण्डेन स्कन्धेन हीनम् ।) भद्रमुस्तकम् । इति शब्दचन्द्रिका ॥

**काण्डिका**, स्त्री, (काण्डः गुच्छः प्राशस्त्येन अस्ति अस्याः । काण्ड + ठन् + टाप् ।) लङ्कानामकधान्यविशेषः । वालुकीनामकर्कटीभेदः । इति राजनिर्घण्टः ॥

**काण्डीरः**, त्रि, (काण्डः वाणः अस्त्यस्य । काण्ड + "काण्डाण्डादीरन्नीरचौ" । ५ । २ । १११ । इति ईरन् ।) काण्डास्त्रवान् । इत्यमरः । २ । ८ । ६९ ॥ तीरन्दाज इति भाषा ॥ (यथा भट्टिः ४ । १० ।
"काण्डीरः खाङ्गिकः शार्ङ्गी रक्षन् विप्रस्तनुत्रवान्" ॥)

**काण्डीरः**, पुं, (काण्डः स्तम्बः अस्यास्तीति । काण्ड + "काण्डाण्डादीरन्नीरचौ" । ५ । २ । १११ । इति ईरन् ।) अपामार्गवृक्षः । लताप्रभेदः । काण्डवेल इति ख्यातः । तत्पर्य्यायः । काण्डकटुकः २ नासासंवेदनः ३ पटुः ४ उग्रकाण्डः ५ सोमवल्ली ६ कारवल्ली ७ सुकाण्डिका ८ । अस्य गुणाः । कटुत्वम् । तिक्तत्वम् । उष्णत्वम् । सारकत्वम् । दुष्टव्रणलूतागुल्मोदरप्लीहशूलमन्दाग्निनाशित्वञ्च । इति राजनिर्घण्टः ॥

**काण्डीरी**, स्त्री, (काण्डीर + गौरादित्वात् ङीष् ।) मञ्जिष्ठा । इति रत्नमाला ॥ काण्डीरा इत्यपि पाठः ॥ (मञ्जिष्ठाशब्देऽस्या गुणादयो ज्ञातव्याः ॥)

**काण्डेक्षुः**, पुं, (काण्डे इक्षुरिव ।) कोकिलाक्षवृक्षः । इत्यमरः । २ । ४ । १०४ ॥ कुलिया खाड़ा इति भाषा ॥ (अस्य पर्य्यायाः । यथा, भावप्रकाशस्य पूर्ब्बखण्डे १ भागे ॥
"कोकिलाक्षस्तु काकेक्षुरिक्षुरः क्षुरकः
भिक्षुः काण्डेक्षुरप्युक्त इक्षुगन्धेक्षुवालिका" ॥
गुणाऽस्य क्षुरकशब्दे ज्ञेयाः ॥) काशतृणम् । इति राजनिर्घण्टः ॥

**काण्डेरी**, स्त्री, (काण्डं वाणाकारं पुष्पं ईर्त्ते । काण्ड + ईरङ् गतौ + अण् । गौरादिराकृतिगणत्वात् ङीष् ।) नागदन्तीवृक्षः । इति रत्नमाला ॥

**काण्डेरुहा**, स्त्री, (काण्डे रोहति इति कः टाप् । सप्तम्या अलुक् ।) कटुकी । इति रत्नमाला ॥ (कटुकीशब्देऽस्या विशेषो वोध्यः ॥)

**कातरः**, त्रि, (कु कष्टेन तरतीति । कु + तॄ + अच् । कोः कादेशः ।) व्यसनाकुलचित्तः । व्याकुलः । तत्पर्य्यायः । अधीरः २ । इत्यमरः । ३ । १ । २६ ॥ (यथा रघुः ११ । ७८ ।
"कातरोऽसि यदि वोद्गतार्च्चिषा
तर्ज्जितः परशुधारया मम" ॥)

**कातरः**, पुं, (कं जलं आतरति । क + आ + तॄ + अच् ।) कातलमत्स्यः । इति शब्दरत्नावली ॥

**कातलः**, पुं, (कातर एव रस्य लः । अयं हि रोहितादिवत् न तेजस्वी अतोऽस्य तथात्वम् । यद्वा, कस्य जलस्य तलं स्पृश्यत्वेन न अस्ति अस्य । अर्श आदित्वादच् ।) मत्स्यविशेषः । कात्ला इति भाषा । तस्य गुणाः । उष्णत्वम् । मधुरत्वम् । गुरुपाकित्वम् । त्रिदोषकारित्वञ्च । इति राजवल्लभः ॥ (यथा, वैद्यके ।
"कातलो मधुरश्चोष्णो गुरुपाकी त्रिदोषकृत्" ॥)

**कातृणं**, क्ली, (कुत्सितं तृणं कुत्सं तृणं वा । कोः कादेशः ।) रोहिषतृणम् । इति राजनिर्घण्टः ॥

**कात्यः**, पुं, (कतस्य ऋषेर्गोत्रापत्यं । कत + "गर्गादिभ्यो यञ्" ४।१।१०५ । इति यञ् ।) कात्यायनमुनिः । इति त्रिकाण्डशेषः ॥

**कात्यायनः**, पुं, (कतस्य गोत्रापत्यम् । गर्गादित्वात् यञ् यञन्तत्वात् फक् निष्पन्नः ।) धर्म्मशास्त्रकर्त्तमुनिविशेषः । (यथोक्तं याज्ञवल्क्ये १ । ४ । ५ ।
"मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसम्वर्त्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वशिष्ठश्च धर्म्मशास्त्रप्रयोजकाः" ॥
वररुचिः । इति मेदिनी ॥

**कात्यायनी**, स्त्री, (कतस्यापत्यं स्त्री । "गर्गादिभ्यो यञ्" । ४ । १ । १०५ । इति यञ् । "सर्व्वत्र लोहितादिकतन्तेभ्यः" । ४ । १ । १८ । इति ष्फः । षित्वात् ङीष् ।) दुर्गा । (यथा मार्कण्डेय ९१ । २३ ।
"एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ।
पातु नः सर्व्वभूतेभ्यः कात्यायनि नमोऽस्तु ते" ॥)
अर्द्धवृद्धा काषायवसना विधवा । इत्यमरः । २ । ६ । १७ ॥ (याज्ञवल्क्यमुनेः पत्नीरेका पत्नी । यदुक्तं बृहदारण्यकोपनिषदि । "याज्ञवल्क्यस्य हे भार्य्ये वभूवतुः मैत्रेयी कात्यायनी च । तयोर्हि मैत्रेयी ब्रह्मवादिनी वभूव स्त्रीप्रज्ञैव तर्हि कात्यायनी" ॥ पत्न्यां ङीष् । कात्यायनस्य ऋषेः पत्नी" ॥)

**कादम्बः**, पुं, (कदम्बे समूहे भवः । कदम्ब + अण् ।) कलहंसः । वालि हाँस् इति भाषा । इत्यमरः । २ । ५ । २३ । (यथा रघुः । १३ । ५५ ।
"क्वचित् खगानां प्रियमानसानां
कादम्बसंसर्गवतीव पङ्क्तिः" ॥)
अस्य मांसस्य गुणाः । वायुरक्तपित्तनाशित्वम् । मेदकत्वम् । शुक्रकारित्वम् । शीतलत्वञ्च । इति राजवल्लभः ॥ (कदम्ब एव । स्वार्थे अण् ।) कदम्बवृक्षः । इत्यमरटीकायां भरतः ॥ (कदम्बस्येदमिति व्युत्पत्त्या अण् । कदम्बसम्बन्धिनि, त्रि । कादम्बकुसुमम् । यथा रघुः १३ । २७ ।
"गन्धश्च धाराहतपल्वलानां
कादम्बमर्द्धोद्गतकेसरञ्च" ।)
वाणः । इति मेदिनी ॥

**कादम्बकः**, पुं, (कादम्ब + स्वार्थे कन् ।) वाणः । इति हारावली ॥

**कादम्बरं**, क्ली, (कादम्बम् कदम्बोद्भवं रसं लाति गृह्णातीति । कादम्ब + ला + कः । लस्य रः ।) कदम्बपुष्पोद्भवमद्यम् । इति मेदिनी ॥ (यथा, माघे ।
"निषेव्य मधुमाधवाः सरसमत्र कादम्बरम्" ॥)
दधिसारः । इति हेमचन्द्रः ॥ शीधुः । इति विश्वः ॥ (इक्षुजातगुडादि । इति मल्लिनाथः ॥)

**कादम्बरः**, पुं, (कादम्बं कादम्बरसवत् लाति गृह्णातीति । ला + कः । लस्य रश्च ।) दध्यग्रम् । दधिसरः । इति मेदिनी ॥

**कादम्बरी**, स्त्री, (कु ईषत् अवर्णं नीलवर्णमित्यर्थः अम्बरं वस्त्रं यस्य । कोः कादादेशः । कादम्बरो वलरामस्तस्य प्रिया । कादम्बर + अण् ततः स्त्रियां ङीप् । यद्वा कदम्बे जातो रसः कादम्बः । "तत्र जातः" । ४ । ३ । २५ । इत्यण् । कादम्बं राति ददातीति । रादाने + "आतोऽनुपसर्गे कः" । ३ । २ । ३ इति कः । गौरादित्वात् ङीष् ।) मदिरा । इति मेदिनी ॥ (यथा,—
"कादम्बरीमदविघूर्णितलोचनस्य
युक्तं हि लाङ्गलभृतः पतनं पृथिव्याम्" ॥
इत्युद्भटः ।) कोकिला । सरस्वती । शारिकापक्षिणी । इति मेदिनी ॥ (वाणभट्टविरचितकाव्यविशेषः । स्वनायिकानाम्नैव प्रसिद्धोऽयं ग्रन्थः । इयं कादम्बरी तु वाणभट्टेनासमापिता पुनरस्य पुत्त्रेण समाप्तिं नीता ॥ नायिकाविशेषः । सा तु तुम्बुरुप्रभृतीनां परां गन्धर्व्वाणां ज्येष्ठस्य हंस इत्याख्यया प्रसिद्धस्य गन्धर्व्वस्य कन्या । अस्या जननी सोममयूखसम्भवाप्सरसां कुले जाता गौरीति नाम्ना प्रसिद्धा । अस्या अन्यद्विवरणन्तु कादम्बर्य्यां द्रष्टव्यम् ॥ )

**कादम्बरीवीजं**, क्ली, (कादम्बर्य्याः वीजं आसवः ।) सुरावीजम् । इति रत्नमाला ॥

**कादम्बर्य्यः**, पुं, (कादम्बर्य्यै हितः इति यत् ।) कदम्बवृक्षः । इति जटाधरः ॥

**कादम्बा**, स्त्री, (कादम्ब इव आचरति । कादम्ब + आचारे क्विप् + अच् + टाप् ।) कदम्बपुष्पीवृक्षः ।

महाविद्योपासकाश्च गुणतः क्षत्रियोपमाः ।
कलौ हि क्षत्रियाभावात् वैश्याभावाच्च सुव्रत! ॥
एते भक्त्या भविष्यन्ति विप्रमानसहिष्णवः ।
विप्रप्रिया विप्रभक्ता विप्रमानप्रदा यतः ॥
महाविद्याश्रितश्चैते क्षत्रकर्म्मरताः कलौ ।
मस्या एवेश इत्यस्मात् मसीशोऽसौ निगद्यते ॥
ब्रह्मणो विप्रमूर्त्तेस्तु पादांशे सम्भवन्ति तत् ।
कायस्था इति संज्ञाः स्युः सुयज्ञैषां शिवा मतिः ॥
श्रुत्वैतत् सकलं राजा वृत्तान्तं सुतपोमुखात् ।
प्रेमाश्रुभिर्न्नत्यकारी कृताञ्जलिपुटोऽब्रवीत् ॥

राजोवाच ।

इतः परम्महेऽहञ्चेत् म्रिये तदपि मच्छिवम् ।
श्रुतं यत्तव जातीनां क्षत्रहीनकलौ सुखम् ॥
ततोऽतितुष्टः सुतपा उवाच मधुरं नृपम् ।
सुयज्ञ! सुमतिस्त्वं हि त्वत्तो विप्रप्रियो न हि ॥
मानेन ब्राह्मणानां हि वरञ्च मरणं नयेः ॥

सुयज्ञोवाच ।

हे नाथ सुतपो विप्र! श्रुतं यन्मेऽङ्गत्वन्मुखात् ।
कृपया शृणु तत् सर्व्वं ते जातेर्म्महिमानमु ॥
ब्राह्मणो ब्रह्म जानाति नान्यजातिरिति श्रुतिः ।
ब्रह्मज्ञानी सदा विप्रो न चेद्ब्राह्मणसंज्ञकः ॥
विना प्रयुक्तिं यो विप्र उपकारी स्वयं भवेत् ।
आशीः करोति ब्रूते च क्षत्रादीनां शिवं वचः ॥
स एव साक्षाद्ब्रह्मेति विप्राणां जातिलक्षणम् ।
ब्राह्मणाज्ञावचो ये न गृह्णन्ति पालयन्ति च ॥
गुर्व्वाज्ञालङ्घनं पापं स्पृशेत्तेषां शरीरतः ।
मित्रेति सकलं चोक्तं ते च सन्दिग्धजातयः ॥
वशीकारादि सकलं सृष्टिस्थितिलयश्च यत् ।
शक्नुवन्ति हि कर्त्तुं ते विप्राः मित्रेति चोक्तमु ॥
विनायासैर्मुदा यो यत् विप्राय शक्तितो ददत् ।
मुदा तदेव गृह्णाति विप्राणामिति लक्षणम् ॥
केषामपि न कापट्यं कुरुते ब्राह्मणः क्वचित् ।
विनापराधैर्न्न शपेदिति तज्जातिलक्षणम् ॥
हिंस्रे भवति हिंस्रः स शठे शाठ्यं समाचरेत् ।

आर्जवञ्चेन्द्रियग्रामान् स्ववशे स्थापयेच्चिरम्
दयालुश्च सदा विप्र इति पुत्त्र हृदि स्मरन् ।
भीत्या भक्त्या सदा पूज्यः पितेति ब्रूतवांश्च मे ॥
कटूक्त्या यदि गृह्णाति हृदा दुःखेन राति चेत् ।
तद्विप्रो दुःखं भजते दातुर्नैव शिवं क्वचित् ॥
वित्तशाठ्यं गृहशाठ्यं कार्य्यं नोभयतः क्वचित् ।
इत्यप्यात्मज विप्राच्च श्रुतं शासनसम्मतम् ॥
शृणु पुत्र प्रवक्ष्यामि सावधानं समाचर ।
शान्तं वऽशपन्तं वा नैव द्रुह्यति भूसुरम् ॥
सुतपो नाथ मे पित्रा यद्यदुक्तं तदुक्तवान् ।
त्वञ्चापि ब्राह्मण ब्रह्म यथारुचि तथा कुरु ॥
श्रुत्वैतत् सुतपा विप्र उवाच परमादरम् ।
राजन् वरं वृणु वृणु यत्ते मनसि वाञ्छितम् ॥

सुयज्ञ उवाच ।

ऋषे! वरेण ते नैक उपकार इहाधुना ।
यज्ञे समाप्ते मे मस्तच्छेत्ता रामो भविष्यति ॥

सुतपा उवाच ।

यज्ञं समाप्य सुखतः प्रगच्छेर्विन्ध्यनैर्ऋतिम्! ।
तत्र वै स्वर्णदानद्या मध्ये द्वीपोऽस्ति सुन्दरः ॥
द्वादशक्रोशमानो हि तद्गत्वा वसतिं कुरु ।
यदा परशुरामस्ते कश्चिच्छेत्ता भविष्यति ॥
भविष्यति च कायः स नय ते वाञ्छितं वरम् ।
ततः पुनः कृते राजन् जम्बूद्वीपेश्वरो भवान् ॥
भविष्यतीति त्वं वीजरूपेण तिष्ठ तत्र हि ।
वरं ते वाञ्छितं गृह्ण तुष्टोऽहं भक्तितस्तव ॥
इहतः परतो यद्यत् परमानन्द मुत्तमम् ॥

सुयज्ञराजोवाच ।

नाथ! नाहं वरं याचे याचे केवलमङ्घ्रिते ।
चिरं मम मतिस्तिष्ठेदिति देहि वरोत्तमम् ॥
तेऽङ्घ्री पवित्रे परमे सर्व्वत्र सुखदे किल ।
तदेवास्तु इति प्रोच्य सुतपा गतवान् गृहम् ॥
राजापि च मखं कृत्वा विप्रेभ्यो दक्षिणां ददत् ।
परिवारयुतोऽगच्छद्द्वीपे काञ्चनदान्तरे ॥
वसतिं वरतः प्राप्तां चतुर्द्दिक्षु जलप्लुताम् ।

अत्रस्थाः प्रापटन् विप्राः पण्डिताः स्वस्ववासभूम् ॥
एको मसीशः सर्व्वाख्यः सर्व्वाणीहृदयद्विजात् ।
कुलप्रदीपः स्वीयानां जातीनां पूतनास्पृहः ॥
वगलेति महाविद्यां गृहीत्वा साधयन् मुदा ।
सर्व्वाणीहृदयाख्यस्य पण्डितस्य प्रसादतः ॥
वरं याचितवान् भक्त्या त्रिलोकाधिपतिं गुरो! ।
कृपया कुरु मां नाथ! त्वमेव वगला मम ॥
गुरुस्त्वपि वरं दत्तो राज्यं भुक्त्वा पुनर्भवन् ।
त्रिलोकाधिपतिर्भूय मुदा तत्र सुखिष्यसि ॥
गुर्व्वाज्ञया मसीशः स राज्यभोगी द्विजार्चितः ।
विहाय देहं भूयश्च त्रिधारूपो बभूव ह ॥
चित्रगुप्तश्चित्रसेनश्चित्राङ्गद इति त्रयः ।
स्वर्गे मर्त्ये च पाताले राजते चिरमुत्तमः ॥
चित्रगुप्तो महाविद्यां प्राप्य कुल्लाख्यविप्रतः ।
पुत्रान् याचितवान्नैव गुरोर्देवत्वमावहन् ॥
यमान्तिस्थो बभूवापि सर्म्मत्याधोविवेचकः ।
चिरं शुभाशुभं कर्म्म विविच्य शमनान्तिके ॥
यद्वदेत् सकलानां तु तदेवाभोजयेत् यमः ।
चित्रसेनो महाविद्यां वगलेति गुरोर्नयन् ॥
जप्त्वा संतोष्य पुत्रादीन् याचित्वा प्राप्य मर्त्यतः ।
राज्यं चकार मुदयुक्तश्चित्राङ्गद अधोगतः ॥
अधोगतस्य हेतुं त्वं वगले शृणु कालिके! ।
वगलेति मनुं प्राप्य विप्रोऽस्मि इति वाञ्छया ॥
तपश्चकार पश्चाद्वं नान्नं किञ्चित् गृहीतवान् ।
फलमूलादिकं किञ्चित् सायमत्ति यथा मिलेत् ॥
विहाय विप्रस्य गुरोरपि पूजाञ्च पार्व्वति! ।
जपेन्नित्यं हि वगलामन्यविप्रञ्च नेक्षयन् ॥
ज्ञात्वेति ब्राह्मणाः सर्व्वे ऊचुश्चित्राङ्गदं क्रुधा ।
वचो हि मधुरं किञ्चित् प्रियाद्यभक्ताच्च सुन्दरि! ॥
रे चित्राङ्गद! अज्ञस्त्वं वत्स विप्रत्वमिच्छसि ।
कदाप्युपानन्मस्तस्थो नैवेति न हि बुध्यसि ॥
वत्स! शीघ्रमधो गच्छ चिरं कुरु तपो मुदा ।
ततः श्रुत्वेति शापं स भक्त्यातिशयमानसः ॥
कृताञ्जलिपुटो ब्रूते चित्राङ्गद इतीश्वरि! ॥

---

नित्यं यमस्यमायुष्यमर्व्वकामार्थसिद्धिदम् ।
दानानि दापयेद्यस्तु भगिन्यै च विशेषतः ॥
काले तत्र च संपूज्य चित्रगुप्तञ्च लेखकम्
चित्रैश्च चित्रपुष्पैश्च रक्तचन्दनमिश्रितैः ॥
नैवेद्यं दीयते तस्मै मोदकं गुडमिश्रितम् ॥
भीष्मोक्तप्रार्थना यथा,—
उत्पत्तौ प्रलये चैव भोग्ये दाने कृताकृते ।
लेखकस्त्वं सदा श्रीमांश्चित्रगुप्त नमोऽस्तु ते ॥
श्रिया सह समुत्पन्न समुद्रमथनोद्भव! ।
चित्रगुप्त महाबाहो! ममाद्य वरदो भव ॥
चित्रगुप्तस्तु सन्तुष्टो भीष्माय च वरं ददौ ।
मत्प्रसादान्महाबाहो मृत्युस्ते न भविष्यति ॥
स्मरिष्यसि यदा मृत्युं तदा मृत्युर्भविष्यति ।
इति तस्मै वरं दत्त्वा चित्रगुप्तो दिवं ययौ ॥
अनेन विधिना यस्तु चित्रगुप्तस्य पूजनम् ।
करिष्यति महाबुद्धे तस्य पुण्यफलं शृणु ॥
इहैव विपुलान् भोगान् भुक्त्वा सर्व्वान् मनोरथान् ।
अन्ते च विष्णुलोकञ्च नरो याति न संशयः ॥
चित्रगुप्तकथां दिव्यां कायस्थोत्पत्तिसंज्ञकाम् ।
भक्तियुक्तेन मनसा ये शृण्वन्ति नरोत्तमाः ॥
दीर्घायुषो भविष्यन्ति सर्व्वव्याधिविवर्जिताः ।
सर्व्वे विष्णुपदं यान्ति यत्र यान्ति तपोधनाः" ॥
इति भविष्यपुराणे चित्रगुप्तकायस्थोत्पत्तिमाहात्म्यकथ समाप्ता ॥ * ॥
"एवं हत्वार्ज्जुनं रामः सन्धाय निशितान् शरान् ।
एक एव ययौ हन्तुं सर्व्वानेवातुरान् नृपान् ॥
केचित् गहनमाश्रित्य केचित् पातालमाविशन् ।
सगर्भा चन्द्रसेनस्य भार्य्या दाल्भ्याश्रमं ययौ" ॥
"ततो रामः समायातो दाल्भ्याश्रममनुत्तमम् ।
पूजितो मुनिना सद्यः पाद्यार्घ्याचमनादिभिः ॥
ददौ मध्याह्नसमये तस्मै भोजनमादरात् ।
रामस्तु याचयामास हृदिस्थं स्वमनोरथम् ॥
याचयामास रामाच्च कामं दाल्भ्यो महामुनिः ।
ततस्तौ परमप्रीतौ भोजनं चक्रतुर्मुदा ॥
भोजनानन्तरं दाल्भ्यः पप्रच्छ भार्गवं प्रति ।
यत्त्वया प्रार्थितं देव तत् त्वं शंसितुमर्हसि ॥

राम उवाच ।

तवाश्रमे महाभाग सगर्भा स्त्री समागता ।
चन्द्रसेनस्य राजर्षेः क्षत्रियस्य महात्मनः ॥
तन्मे त्वं प्रार्थितं देहि हिंसेयं तां महामुने ।
ततो दाल्भ्यः प्रत्युवाच ददामि तव वाञ्छितम् ॥

दाल्भ्य उवाच ।

स्त्रियो गर्भममुं बालं तन्मे त्वं दातुमर्हसि ।
ततो रामोऽब्रवीद्दाल्भ्यं यदर्थमहमागतः ॥
क्षत्रियान्तकरश्चाहं तत् त्वं याचितवानसि ।
प्रार्थितश्च त्वया विप्र! कायस्थो गर्भ उत्तमः ॥
तस्मात् कायस्थ इत्याख्या भविष्यति शिशोः शुभा ॥
एवं रामो महाबाहुर्हित्वा तं गर्भमुत्तमम् ।
निर्जगामाश्रमात् तस्मात् क्षत्रियान्तकरः प्रभुः" ॥
"कायस्थ एष उत्पन्नः क्षत्रिण्यां क्षत्रियात्ततः ।
रामाज्ञया स दाल्भ्येन क्षत्रधर्माद्वहिष्कृतः ॥
कायस्थधर्मोऽस्मै दत्तश्चित्रगुप्तस्य यः स्मृतः ।
तद्गोत्रजाश्च कायस्था दाल्भ्यगोत्रास्ततोऽभवन् ॥
दाल्भ्योपदेशतस्ते वै धर्मिष्ठाः सत्यवादिनः ।
सदाचारपरा नित्यं रता हरिहरार्चने ॥
देवविप्रपितृणाञ्च अतिथीनाञ्च पूजकाः" ॥
इति स्कान्दे रेणुकामाहात्म्यम् ॥ * ॥

अथ ब्राह्मणानां गौड़राज्यप्रवेशो राजसमीपे आशिरर्थं गमनञ्च ।

"पितॄन् बान्धवांस्तारयित्वा गयायां
गताः शासितं गौड़राज्येश्वराज्यम् ।
ततस्तेजसा ते दिशो भासयन्तः
श्रुतिं व्याहृतिं भारतीं पाठयन्तः ॥
ततो हस्तदूर्व्वान्विताः पञ्चगोत्रा
नृपस्याशिषं कर्त्तुमेव प्रतस्थुः ।
अमी पञ्च मध्याह्नमार्त्तण्डतुल्या
द्विजाः स्थापिताश्चाः परश्रेयसश्च" ॥ * ॥

अथैषां वेशं दृष्ट्वा राज्ञोऽवज्ञा तेषां शुष्कवृक्षे च्याशिषो निक्षेपश्च । "दृष्ट्वैवं वेशमेषामवनिपतिरसौ भ्रान्तचित्तो द्विजानां तैराजायं न ज्ञात्वा स्थाणुमपि ययौ गन्तुकामाः पुनस्ते । बुद्ध्वा भूपालबुद्धिं स्वगमपि च बुधाः शुष्कवृक्षाशिषस्ते तद्वस्तात् प्राप्य दूर्व्वाहततमपि स बभौ शुष्कवृक्षः सुवृक्षः" ॥*॥ अथ राज्ञा ब्राह्मणानां प्रशान्तनं गोत्रनामप्रश्नश्च ।

"सविस्मया वै गजवद्गदस्था
भूपादयस्ते चरणारविन्दम् ।
पवित्रकीर्त्तिं भुवि भूसुराणां
श्रुत्वा च पेतुः सकलाः प्रणम्य ॥
क्षमध्वमस्माकमुचितवादं
मूढात्मनाश्चापराधं हि विप्राः ।
भो ब्रूत विप्राः किमु नाम गोत्रं
ततश्च सर्व्वे गदितुं प्रवृत्ताः" ॥ * ॥

अथ पञ्चब्राह्मणानां परिचयः ।

"अभूदन्ववंशोद्भवो भट्टनारायणोऽयञ्च शाण्डिल्यगोत्रे गरीयान् । तपस्वान् यशस्वान् दयावान् सविद्वान् विवस्वानिवास्यां सभायां विभाति ॥ श्रुतितत्त्वतदङ्गविचारकरोऽवनिपालक काश्यपगोत्रवरः । क्रतुदक्षसमः किल दक्षमहाशयो नाम इति भुवि भाति यतिः ॥ समस्तशास्त्रपण्डितसाधागतप्रखण्डितः प्रचण्डसर्व्ववैरिदर्पगर्व्वखर्व्वकारकः । सावर्णगोत्रसम्भवोऽत्र भाति वेदगर्भकः छान्दड़ः प्रभाति भूप वात्स्यगोत्रसम्भवः ॥ यशःसुधाकरोत्तपत्तपत्निसङ्घयोषितानन्नाम्बुजे महातपस्तपोवशीकृतेन्द्रियः ॥ अयं श्रीलहर्षोऽनिशं दानहर्षो महर्षिर्यथास्यां तपोभिः प्रभाति । क्षितीन्द्र! क्षितौ यो भरद्वाजगोत्रेश्वरो विप्रवर्य्यः प्रतापारिशौर्य्यैः" ॥ * ॥

अथ शूद्रपरिचयप्रश्नः ।

"के यूयं नाम किं वा वयस्य कृतिनः स्वागताः क्वापि देशात् ? कोलाञ्चात् पञ्चशूद्रा वयमपि नृमते ! किङ्कराः भूसुराणाम् । धन्या यूयं पृथिव्यां परिचयमखिलं ब्रूत भो विप्रभक्ताः श्रुत्वोत्सुर्व्विप्रवर्य्याः सकलपरिचयं भूपतेरन्ति चैषाम् ॥ * ॥

अथ पञ्चशूद्राणां परिचयः ।

"सुकृतालिकृताम्बर एष कृती
क्षितिदेवपदाम्बुजचारुरतिः ।
मकरन्द इति प्रतिभाति यति-
र्द्विजवन्द्यकुलोद्भवभट्टगतिः ॥





स च घोषकुलाम्बुजभानुरयं
प्रथितेन्दुयशाः सुरलोकवशः ।
सततं सुसुखो सुमतिश्च सुधीः
शरदिन्दुपयोऽम्बुधिकुन्दयशाः ॥
वसुधाधिपचक्रवर्त्तिनो
वसुतुल्या वसुवंशसम्भवाः ।
वसुधाविदिता गुणार्णवै-
र्नियतं ते जयिनो भवन्तु नः ॥
दशरथो विदितो जगतीतले
दशरथप्रथितः प्रथमः कुले ।
दशदिशां जयिनां यशसा जयी
विजयते विभवैः कुलसागरे ॥
यशस्विनां यशोधरः सदा हि सर्व्वसादरः
प्रमत्तसत्तमत्तहःशरत्सुधांशुवद्यशः ।
प्रतापतापनोत्तपद्विपारियोषिदालिको
विभाति मित्रवंशसिन्धुकालिदासचन्द्रकः ॥
द्विजालिपालनार्थकोऽप्यसौ च हर्षसेवकः ।
कुलाम्बुजप्रकाशको यथान्धकारदीपकः ॥
अयं गुहकुलोद्भवो दशरथाभिधानो महान्
कुलाम्बुजमधुव्रतो विविधपुण्यपुञ्जान्वितः ।
निशम्य गुहभाषितं सकलसभ्यहास्यं बभूव
स वङ्गगमनोद्यतो विविधसानभङ्गो यतः ॥
अयञ्च पुरुषोत्तमः कुलभदयगण्यः कृती
सुदत्तकुलसम्भवो निखिलशास्त्रविद्योत्तमः ।
विलोकितुमिहागतो द्विजवरैश्च राज्यं प्रभो!
चकार नृपतिः सतं विनयहीनतो निष्कुलम्" ॥*॥

अथाष्टौ सिद्धमौलिकाः ।

"गौड़ेऽष्टौ कीर्त्तिमन्तस्त्रिरवसतिकृता मौलिका ये हि सिद्धास्ते दत्ताः सेनदासाः करगुहसहिताः पालिताः सिंहदेवाः । ये वापाद्याभिमुख्याः क्षितिविनयगुणः सम्प्रतिस्ते द्विपूर्व्वा होड़ाद्या वीक्ष्य राज्ञा चरणगणयुता मौलिकत्वेन साध्याः" ॥*॥

अथ द्विसप्ततिः साध्यमौलिकाः ।

"होड़ः स्वर धर धरणी वान आड्च सोमः पै सुर सामः । भञ्जो विन्दो गुह वल लोधः शर्म्मा वर्म्मा ऊह मुह चन्द्रः ॥ रुद्रो रक्षित राजादित्यो विष्णुर्नागः खिल पिल गूतः । इन्द्रो गुप्तः पालो भद्र थोमस्याङ्कुर वन्धुर नाथः ॥ शाँइ हैशश्च मनो गण्डो राहा राणा राउत साना दाहा दाना गण उपमाना । स्वामः क्षेमो घर वैष्णोधो वीरदत्तेजस्यार्णव आशः ॥ शक्तिर्भूतो ब्रह्मः शानः क्षेमो हेमो बर्द्धन रङ्गः । गुहः कीर्त्तिर्यशः कुण्डुनन्दी शीलो धनुर्गुणः ॥ * ॥ इति दक्षिणराढ़ीयघटककारिका ॥ * ॥ * ॥ * ॥

अथ वङ्गजकुलाचार्य्यकारिका लिख्यन्ते ।

अथ शूद्रोत्पत्तिः ।

तथा चाग्निपुराणोक्तजातिमालायाम् ।

"आदौ प्रजापतेर्जाता मुखाद्विप्राः सदारकाः ।
बाह्वोश्च क्षत्रिया जाता उर्व्वोर्व्वैश्या विजज्ञिरे ॥
पादाच्छूद्रश्च सम्भूतस्त्रिवर्णस्य च सेवकः ।
शौनकनामा सुतस्तस्य प्रदीपस्तस्य पुत्रकः ॥
कायस्थस्तस्य पुत्रोऽभूद्बभूव लिपिकारकः ।



कायस्थस्य त्रयः पुत्राः विख्याता जगतीतले ॥
चित्रगुप्तश्चित्रसेनो विचित्रश्च तथैव च ।
चित्रगुप्तो गतः स्वर्गे विचित्रो नागसन्निधौ ।
चित्रसेनः पृथिव्यां वै इति शूद्रः प्रचक्ष्यते" ॥ * ॥

अथ चित्रसेनादिसुतः ।

"वसुर्घोषो गुहो मित्रो दत्तः करण एव च ।
मृत्युञ्जयस्य सप्तैते चित्रसेनसुता भुवि ॥
करणस्य सुता जाता नागो नाथश्च दासकः ।
मृत्युञ्जयतनूद्भूता देवः सेनश्च पालितः ॥
सिंहश्चैव तथा ख्यातश्चैते पद्धतिकारकाः ।
एते पद्धतिकाराश्च मुनिभिः कथिताः पुरा" ॥*॥

अथ द्वादशशुद्धवंशजाः ।

"वसुर्घोषो गुहो मित्रो दत्तो नागश्च नाथकः ।
दासो देवस्तथा सेनः पालितः सिंह एव च ॥
एते द्वादशनामानः प्रसिद्धाः शुद्धवंशजाः" ॥ * ॥

अथ सप्ताशीतिः पद्धतिकाराः ।

"मृत्युञ्जयवंशभूतो नित्यानन्दो नृपेश्वरः ।
तस्यापि वंशसंजाताः सप्ताशीतिः प्रकीर्त्तिताः ॥
तेऽपि पद्धतिकाराश्च मुनिभिः कथिताः पुरा" ॥*॥

तेषां नामानि ।

करो भद्रो धरो नन्दी पालश्चाङ्कुरदामकः ।
रक्षितो धरणिहोड़ौ च वानश्चाड्यसोमकौ ॥
पै सुरः शौनकश्चैव भञ्जो विन्दुर्गुहस्तथा ।
बलश्च लोधकश्चैव शर्म्मा वर्म्मा च भूमिकः ॥
ऊहश्च राजकश्चैव चन्द्रो रक्षितराजकौ ।
आदित्यविष्णुगुप्ताश्च खिलश्च पीलकस्तथा ॥
चाञ्जिर्हैंशश्च वन्धुश्च शाञ्जिश्च सुमनुस्तथा ।
गण्डको राहकश्चैव राणाराउतदाहकाः ॥
दाना गणश्च सानाश्च स्वामाप्रक्षेमधारकाः ।
वैतोषवेदकाश्चेन्द्रश्चार्णवश्चावशक्तिकाः ॥
भूतो ब्रह्मः संज्ञः क्षेमो वर्द्धनो हैमरङ्गकौ ।
भूञ्जिः कीर्त्तिर्यशः कुण्डः शीलश्चैव धनुर्गुणः ॥
दाँड़िर्मनोरिलिश्चैव चाकिश्च नन्दनस्तथा ।
श्यामश्चाण्डश्च भूञ्जिश्च तेजको नाद एव च ॥
रोद्रक्रोमश्च हाथिश्च ढोलश्च दूतकस्तथा ।
एते पद्धतिकाराश्च सप्ताशीतिः प्रकीर्त्तिताः" ॥

एताः सप्ताशीतिपद्धतयः द्वादशशुद्धपद्धतयश्च मिलित्वा नवाधिकनवतिपद्धतयो भवन्ति ॥ एतेषां पुरोहितगोत्रप्रवरेण गोत्रप्रवरत्वं मुनिभिरुक्तम् ॥*॥

अथ कान्यकुब्जात् पञ्चानां विप्राणां शूद्राणाञ्चागमनमाह देवीवरः ।

"अम्बष्ठकुलसम्भूत आदिशूरो नृपेश्वरः ।
राढ़गौड़वरेन्द्राश्च वङ्गदेशस्तथैव च ॥
एतेषां नृपतिश्चैव सर्व्वभूमीश्वरो यथा ।
अमात्यैर्बान्धवैश्चैव मन्त्रिभिर्द्विजवन्दकैः ॥
एतैः सह महीपाल एकदा स निजालये ।
उपविष्टो द्विजान् प्रष्टुं धर्म्मशास्त्रपरायणः ॥
केन यज्ञेन भगवत्प्रीतिर्भवति निश्चितम् ।
तत् सर्व्वं श्रोतुमिच्छामि कथयध्वं द्विजोत्तमाः ॥
इति श्रुत्वा द्विजाः सर्व्वे स्वर्व्वीकृतकलेवराः ।
कथयन्ति नृपाग्रे तु सर्व्वे विकृतमानसाः ॥
केन केन विधानेन यज्ञो वा क्रियते बुधैः ।

वयं सर्व्वे न जानीमो विधानं कीदृशं कृतौ ॥
इति तेषां वचः श्रुत्वा चिन्तायुक्तो महीपतिः ।
किं करोमि क्व गच्छामि विललाप पुनः पुनः ॥
कान्यकुब्जात् समानीतान् दूतेन द्विजपञ्चकान् ।
वेदशास्त्रेष्ववगतान् सर्व्वाम्श्च विशारदान् ॥
गोयानारोहितान् विप्रान् खड्गचर्म्मादिभिर्युतान् ।
मत्तवेशान् समालोक्य विषादो जायते हृदि ॥
अश्रद्धा जायते राज्ञ इति ज्ञात्वा द्विजोत्तमाः ।
आशीर्व्वादार्थं निर्म्माल्यं मल्लकाष्ठोपरि स्थितम् ॥
तदा काष्ठं सजीवं स्यात् फलपल्लवसंयुतम् ।
इति दृष्ट्वा नृपस्तस्मिन् कम्पान्वितकलेवरः ॥
क्रोधञ्च बहुधा तेषामकरोत् स नृपोत्तमः ।
आसनं पाद्यमानीय ददौ विनयपूर्व्वकम् ।
उपविष्टा द्विजाः पञ्च तथा च शूद्रपञ्चकाः ॥
राजक्ले कुशलं सर्व्वं प्रोचुस्तेष्ववदत् स तान् ।
अद्य मे सफलं जन्म जीवितञ्च सुजीवितम् ॥
पूतञ्च भवनं जातं युष्माकं गमनं यतः ।
एवञ्च क्रियते स्तोत्रं दृष्टान्यत् शूद्रपञ्चके ॥
युष्माकं गोत्रमाख्या च किमर्थं वा द्विजैः सह ।
तत् सर्व्वं श्रोतुमिच्छामि ब्रूत भोः शूद्रपुङ्गवाः ।
इति राज्ञो वचः श्रुत्वा कथयन् नामगोत्रके ।
काश्यपे चैव गोत्रे च दत्तनामा महामतिः ॥
तस्य दासो गोतमस्य गोत्रे दशरथो वसुः ।
शाण्डिल्यगोत्रे सम्भूतो भट्टनारायणः कृती ॥
सौकालिनञ्च दासोऽयं घोषः श्रीमकरन्दकः ।
भरद्वाजेषु विख्यातः श्रीहर्षो मुनिसत्तमः ॥
दासस्तस्य विराटाख्यो गुहकः काश्यपः स्मृतः ।
सावर्णगोत्रनिर्दिष्टो वेदगर्भमुनिस्त्वयम् ॥
तस्य दासो मित्रवंशो विश्वामित्रस्य गोत्रकः ।
कालिदास इति ख्यातः शूद्रवंशसमुद्भवः ॥
वात्स्यगोत्रेषु सम्भूतश्चान्दड़श्चेति संज्ञितः ।
मौद्गल्यगोत्रजो दत्तः पुरुषोत्तमसंज्ञकः ॥
एतेषां रक्षणार्थाय आगतोऽस्मि तवालये ।
इति श्रुत्वा नृपश्रेष्ठः मनसा हर्षमागतः ॥
विधानेनैव निर्व्वर्ण्य क्रतुं च धर्म्मसंस्थितम् ।
ग्रामं सुवर्णं गाश्चैव वस्त्राणि विविधानि च ॥
दक्षिणार्थं द्विजातिभ्यः प्रददौ स नृपोत्तमः ।
अथ देशे कृताशासा सर्व्वे च द्विजशूद्रकाः ॥
बहवश्च प्रजा जाता नानादेशनिवासिनः" ॥ * ॥

अथ वल्लालकृतश्रेणिविभागः ।

"अथ वल्लालभूपश्च अम्बष्ठकुलनन्दनः ।
कुरुतेऽतिप्रयत्नेन कुलशास्त्रनिरूपणम् ॥
आदिशूरानीतविप्रान् शूद्रांश्चैव तथापरान् ।
एतेषां सन्ततौ सर्व्वा आनयत स निजालये ॥
यत्र यत्र स्थिता विप्रास्तत्र ग्रामे निरोपिताः ।
श्रेणीद्वयन्तु निर्द्दिष्टं राढीवारेन्द्रसंज्ञितम् ॥
तथैव द्विविधं प्रोक्तं कुलञ्च नदिनोत्तम ।
गङ्गायाः पश्चिमे भागे राढ इत्यभिधीयते ॥
वरेन्द्रपद्मयोर्मध्ये वारेन्द्रः प्रोच्यते तथा ।
इति श्रेणी समाख्याता राढवारेन्द्रविभागतः ॥
कृत्वा चतुर्व्विधं तेषां भेदाभेदं निरूपितम्" ॥ * ॥

अथ बङ्गजकायस्थविवरणम् ।

'अथ बङ्गेषु ये शूद्रैर्निवासः क्रियतेऽधुना ।
तेषां निर्णयमाचक्षे कुलञ्चैव विशेषतः ॥
वसुवंशे च मुख्यौ द्वौ नाम्ना लक्ष्मणपूषणौ ।
घोषेषु च समाख्यातश्चतुर्भुजमहाकृती ॥
गुहे दशरथश्चैव मित्रे तारापतिस्तथा ।
दत्ते नारायणश्चैव एते च बङ्गजाः स्मृताः" ॥

अपरन्तु ।

"नागे दशरथश्चैव महानन्दस्तु नाथके ।
चन्द्रशेखरदासस्तु सेने गङ्गाधरस्तथा ॥
दामोदरकरः ख्यातो दामन्तपालितस्तथा ।
पालिते जनसङ्घः स्यात् चन्द्रे नारायणाख्यकः ॥
पाले श्रीव समाख्यातो राहावंशे च शाण्डकः ।
भद्रे दिगम्बरश्चैव धरे तु व्याससंज्ञकः ॥
प्रभाकरस्तु नन्दी स्यात् केशवो देववंशजः ।
अधीपतिरिति ख्यातः कुण्डुवंशे प्रकीर्त्तितः ॥
सोमे वंशधरश्चैव सिंहे रत्नाकरस्तथा ।
नारायणः समाख्यातो रक्षिते च तथापरे ॥
वदनभानुरश्चैव दैत्यारिर्विष्णुसंज्ञकः ।
आद्ये त्रिलोचनः ख्यातो नन्दने च उमापतिः ॥
एते बङ्गजनिर्द्दिष्टा वल्लालेन महात्मना ।
अन्येऽपि शूद्रा विख्यातास्तत्र देशनिवासिनः ॥
ते बङ्गजाः समाख्याताः करणेषु प्रतिष्ठिताः" ॥ * ॥

अथ बङ्गजकुलीनादिनिरूपणम् ।

'कुलीन इति संज्ञा स्यात् मध्यन्यस्तु तथापरः ।
महापात्रोऽधमश्चैव इति संज्ञाचतुष्टयम्" ॥

तद्यथा ।

"वसुर्घोषो गुहो मित्रो दत्तो नागश्च नाथकः ।
दासः सेनः करो दामः पालितश्चन्द्रपालकौ ॥
राहो भद्रो धरो नन्दी देवः कुण्डुश्च सोमकः ।
रक्षिताङ्कुरसिंहाश्च विष्णुराख्यश्च नन्दनः ॥
चत्वारोऽप्यास्त्रयो मध्या महापात्रा परे तथा ।
सप्तविंशति शूद्राणां वल्लालेन प्रशंसिताः" ॥ * ॥
इति कुलीनमध्यममहापात्राः । अधमान् वक्ष्यामि ।
"शोढ्य आरकश्चैव धरणीवान एव च ।
आढ्य पैसुरश्चैव शानश्च भद्रविन्दकौ ॥
गुहश्च वललोधो च शर्म्मा वर्म्मा च भूमिकः ।
कुड़श्च बहकश्चैव राणादित्यो च पीलकः ॥
लिनश्च गुप्तस्वामी च मधुश्च शाण्डिसंज्ञकः ।
हेमश्च सुमनुर्गण्डो गणारोक्ष्तदाहकाः ॥
दानानन्दापमानाख्या खाम क्षेमश्च तोषकः ।
बैद्यापि परवेदौ च भूतालेवकपालकाः ॥
नन्दश्च शाक्तिसङ्गौ च क्षेमाशी वर्द्धनस्तथा ।
हेमश्च बन्धकश्चैव भूमि कीर्त्तिश्च प्रीतकः ॥
धनुर्गुणो धरश्चैव मनोगीतिश्च दाड़िकः ।
चाकिश्च श्याम पूतिश्च गड़ओ नादकस्तथा ॥
गोदश्च सोमकश्चैव चापाकश्च तथैव च ।
ठोनश्च दूतकश्चेति द्विहात्रयमधमाः स्मृताः" ॥
एतेषां धनिगुरुयकमेण कुमार्यन्ताम् महापात्र-भागो जायते ॥ * ॥ इति बङ्गजदक्षरामानन्द शर्म्मकृतकुलदीपिका ॥
कायस्था, स्त्री, (कायस्थितकान्यदा । काय + स्था + घञर्थे क ।) हरीतकी । इति मेदिनी ॥ आमो-
दृक्षः । इति जटाधरः ॥ काकोली । इत्यमर-टीकायां भरतः ॥ एलाद्वयम् । तुलसी । इति राजनिर्घण्टः ॥ कायस्थस्त्रीजातिः । कायस्थपत्नी कायस्थी ॥

कायिक, त्रि, (कायेन निष्पादितं निष्पन्नो वा कायेन निर्वृत्त इति वा । काय + ठक् ।) शारीरिक । कायनिष्पन्न । यथा ।
"अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम्" ॥
इति तिथ्यादितत्त्वम् ॥ (स्त्री, शरीरसम्बन्धिनी चक्रवृद्धिः । यथा मनुः ८ । १५३ ।
"चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या" ॥)

कायिकावृद्धि, स्त्री, (गोबलीवर्द्दादीनां कायपरिश्रमसाध्या या वृद्धिः ।) गवादिबलीवर्द्दादिकर्म्मयुता वृद्धिः । यथा ।
"दोह्यवाह्यकर्म्मयुता कायिका समुदाहृता" ॥
इति व्यासः ॥ मूलधनाविरोधिनी प्रत्यब्ददेयपणतदर्द्धादिरूपा वृद्धिः । यथा ।
"कायाविरोधिनी शश्वत् पणार्द्धाद्या तु कायिका" ॥
इति नारदः ॥ हलायुधस्तु पणार्द्धाद्या इत्यत्र पणशाद्येति पठित्वा पणस्य मूलधनस्य यावदव-स्थानं तावत् शश्वत् वर्षसहस्रमपि उत्तमर्णेन या वाह्यते प्राप्यते सा कायिकेति व्याख्यातवान् तत्राद्या भोगलाभान्तर्गता अपरा च वृद्धिरा इति मिश्राः । इति विवादार्णवसेतुः ॥

कार, पुं, (कृ हिंसायां + भावे घञ् ।) वधः । निश्चयः । (धातूनामनेकार्थत्वात् अत्र निश्चयार्थेऽपि ॥ कं सुखं ऋच्छत्यनेन । क + ऋ + करणे + घञ् ।) बलिः । यत्नः । यतिः । (कं सुखं निर्वृतिं ऋच्छतीति । क + ऋ + कर्त्तरि अण् ।) पतिः । इति शब्दरत्नावली ॥ (कं निष्यन्दजलमृच्छतीति ।) तुषारशैलः । इति मेदिनीकरहेमचन्द्रौ ॥ कर्म्मोपपदे कर्त्तृवाचकः । यथा कर्म्मकारः स्वर्णकारः इत्यादि । इति व्याकरणम् ॥ क्रिया । यथा कारणं कारः क्रिया । इति रामतर्कवागीशः ॥ (अक्षरान्ते तदक्षरवाचकः । यथा ककारः । मकारः । इत्यादिः ।)

कारक, क्ली, (क्रियाभिरन्वित इति । भाष्यमते तु करोति क्रियां निर्वर्त्तयतीति । कृ + कर्त्तरि ण्वुल् ।) क्रियानिमित्तं लोकतः सिद्धम् । इति दुर्गसिंहः ॥ भट्टिभाष्यमते पुं, यथा भवितुः स प्रयोजकः कारकः । तत्तु षड्विधम् । कर्म्म १ यथा रामं नमति । करणम् २ यथा नेत्रैः प्रियो दृष्टः । कर्त्ता ३ यथा जनैः प्रियो दृष्टः । सम्प्रदानम् ४ यथा हरिः सख्ये सुखं ददातु । अपादानम् ५ यथा बिभीषणः परादभ्यत । अधिकरणम् ६ यथा रेमे शरदि गोविन्दः । इति वोपदेवः ॥ वर्षोपलोद्भव जलम् । इति राजनिर्घण्टः ॥

कारक, त्रि, (करोति कर्म्मादिकम् । कृ + "ण्वुल्तृचौ" । ३ । १ । १३३ । इति ण्वुल् ।) कर्त्ता । इति मेदिनी ॥ (यथा मनुः ७ । २०४ ।
"आदानमप्रियकरं दानञ्च प्रियकारकम्" ।)

कारकुक्षीय, पुं, (कारकुक्षि + छ ।) ग्रामदेशः ।

(तत्र भवः ष्यञ् बहुषु तस्य लुक् ।) तद्देशीयजने बहुवचनान्तः । इति हेमचन्द्रः ॥

[का]रणं, क्ली, (कार्य्यतेऽनेन । णिजन्तात् कृञो ल्युट् ।) येन विना यन्न भवति तत् । तत्पर्य्यायः । हेतुः २ बीजम् ३ । इत्यमरः । १ । ४ । २८ ॥ निमित्तम् ४ प्रत्ययः ५ । इति जटाधरः ॥ (यथा, विष्णुपुराणे । १ । १७ । ३० ।

"यतः प्रधानपुरुषौ यतश्चैतत् चराचरम् ।
कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु" ॥)

कारणत्वमाह । अन्यथासिद्धिशून्यत्वे सति नियतपूर्व्ववर्त्तित्वम् । तत्त्रिविधम् । समवायिकारणत्वम् १ असमवायिकारणत्वम् २ निमित्तकारणत्वम् ३ परमाणुपरिमाणभिन्नानां कारणत्वम् । इति भाषापरिच्छेदः । १६-१७ ॥ अणुपरिमाणन्तु न कस्यापि कारणम् । इति सिद्धान्तमुक्तावली (यथा, रेः रामायणे । १ । ६४ । ११ ।

"बहुभिः कारणैर्देव ! विश्वामित्रो महामुनिः ।
लोभितः क्रोधितश्चैव तपसा चाभिवर्द्धते" ॥)

करणम् । (कृ वधे + स्वार्थे णिच् भावे ल्युट् ।) बधः । इति मेदिनी ॥ (आदिः । मूलम् । यथा, मनुः । ११ । ८४ ।

"ब्राह्मणः सम्भवेनैव देवानामपि दैवतम् ।
प्रमाणञ्चैव लोकस्य ब्रह्मात्रैव हि कारणम्" ॥

प्रमाणम् । यथा, मनुः । ८ । २०० ।

"सम्भोगो दृश्यते यत्र न दृश्येतागमः क्वचित् ।
आगमः कारणं तत्र न सम्भोग इति स्थितिः" ॥)

इन्द्रियम् । (यथा, गीतायाम् । १३ । २० ।

"कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" ॥

"कार्य्यं शरीरं कारणानि सुखदुःखसाधनानीन्द्रियाणि तेषां कर्त्तृत्वे तदाकारपरिणामे" ।

इति तट्टीकायां श्रीधरस्वामी ॥) देहः । (यथा, शाङ्कराप्तबोधे । १३ ।

"अनाद्यविद्याऽनिर्व्वाच्या कारणोपाधिरुच्यते ।
उपाधित्रितयादन्यमात्मानमवधारयेत्" ॥)

साधनम् । (करणमेव स्वार्थे अण् ।) कर्म्म । (यथा, चाणक्ये । २३ ।

"न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचित् रिपुः ।
कारणेन हि जानाति मित्राणि च रिपूंस्तथा" ॥)

कायस्थः । (करणशब्देऽस्य विशेषो ज्ञेयः ॥) वाद्यप्रभेदः । गीतप्रभेदः । इति भरतधृतरत्नकोषः ॥ (आदिकारणत्वात् विष्णुः । यथा महाभारते । १३ । १४९ । ५४ ।

"कारणं कारणं कर्त्ता विकर्त्ता गहनो गुहः" ॥

शिवः । यथा शङ्करकृते वेदसारशिवस्तवे ७ ।

"अजं शाश्वतं कारणं कारणानाम्
शिवं केवलं भासकं भासकानाम्" ॥)

कारणगुणोद्भवगुणः, पुं, (कारणगुणा उद्भवो यस्य । स चासौ गुणश्चेति कर्म्मधारयः ।) कारणगुणपूर्व्वकगुणः । तद्यथा । रूपम् १ रसः २ गन्धः ३ अपाकजस्पर्शः ४ द्रवत्वम् ५ स्नेहः ६ वेगः ७ गुरुत्वम् ८ एकत्वम् ९ पृथक्त्वम् १० परिमाणम् ११ स्थितिस्थापकसंस्कारः १२ । इति भाषापरिच्छेदे । ९६ ॥

कारणशरीरं, क्ली, (कारणं अविद्या सैव शरीरम् । अनाद्यविद्याऽनिर्व्वचनीयं शरीरद्वयकारणमात्रम् । सत्स्वरूपाज्ञानं यदन्ति तत्कारणशरीरमित्याहुः ।) सत्त्वप्रधानमज्ञानम् । (किन्तु वीजावस्थायां सूक्ष्मत्वात्‌ विषयव्यापाररहितत्वात्‌ तस्यान्तःकरणस्य सुतरां सुखस्वरूपेणानुभूयतेऽसौ द्रष्टा ।) तत्पर्य्यायः । आनन्दमयकोषः २ सुषुप्तिः ३ । (यदुक्तं वेदान्तसारे । १९ ।

"अस्यापीयमहङ्कारादिकारणत्वात् कारणशरीरं आनन्दप्रचुरत्वात् कोषवदाच्छादकत्वाच्च आनन्दमयकोषः सर्व्वोपरमत्वात् सुषुप्तिः अत एव स्थूलसूक्ष्मशरीरलयस्थानमिति चोच्यते" ॥ अत्र सुबोधिनी यथा ।

"प्रलयकाले हिरण्यगर्भादिप्रपञ्चोत्पादकेश्वरगतमूलप्रकृतिवत् सुषुप्तिकाले अहङ्कारादिशरीरोत्पादकसंस्कारमात्रावशिष्टजीवगताज्ञानस्यापि कारणशरीरत्वं इन्द्रियतद्विषयाभावे व्यासङ्गाभावादानन्दबाहुल्यादानन्दमयत्वं अाच्छादकत्वात्कोषत्वञ्च युक्तमितिभावः । ननु स्थूलसूक्ष्मशरीरलयस्थानस्य कथं सुषुप्तिशब्दवाच्यत्वमित्याशङ्क्य पूर्व्ववत् संज्ञाभेद इति वक्तुं तत्र युक्तिमाह सर्व्वोपरमत्वादिति । पञ्चीकृतस्थूलशरीरस्य व्यावहारिकस्य स्वाप्नप्रपञ्चस्य स्वकारणेऽज्ञाने लीनत्वात् सर्व्वोपरतिरित्यर्थः । तथा चोक्तम् ।

"लये फेनस्य तद्धर्म्मा द्रवाद्याः स्युस्तरङ्गके ।
तस्यापि विलये नीरे तिष्ठन्त्येते यथा पुरा ॥
व्यवहारिक देहस्य लयः स्यात् प्रतिभासिके ।
तल्लये सच्चिदानन्दाः पर्य्यवस्यन्ति साक्षिणि" ॥)

कारणा, स्त्री, (कृ हिंसायाम् । णिजन्तात् कृञो "ण्यासश्रन्थेति" । ३ । ३ । १०७ । युच् ततः टाप् ।) यातना । गाढ़वेदना । इत्यमरः । १ । ९ । ३ ॥ नरकरुजा यमयातना । इति केचित् । इति भरतः ॥

कारणिकः, त्रि, (करणैः कारणैर्वा चरति । "चरतीति" । ४ । ४ । ८ । ठक् ।) परीक्षकः । इत्यमरः । ३ । १ । ७ ॥

कारणोत्तरं, क्ली, (कारणेन उत्तरम् ।) प्रत्यवस्कन्दनम् । सत्यत्वेनाङ्गीकृत्य तत्प्रतिकूलरूपकारणं ब्रूयात् तदा तदुत्तरम् । तत्त्रिविधम् । बलवत् १ तुल्यबलम् २ दुर्ब्बलम् ३ । आद्यं यथा मया त्वत्तः शतं गृहीतमिति सत्यं किन्तु तत् परिशोधितम् । द्वितीयं यथा मदीयेयं भूमिः क्रमागतत्वादिति वाद्युक्ते प्रतिवादिनोऽपि तथोत्तरम् । तृतीयं यथा ममेयं भूमिः क्रमागतत्वात् इति वाद्युक्ते ममेयं भूमिः दशवर्षोपभुज्यमानत्वात् इति प्रत्युत्तरम् । इति व्यवहारतत्त्वम् ॥

कारण्डवः, पुं स्त्री, (समन्तादड इति रमेर्डे । रण्डः । ईषत् रण्डः । "ईषदर्थे" ६ । ३ । १०५ । इति कोः कादेशः । कारण्डं वाति । वा गतौ + "आतोनुपेति" । ३ । २ । ३ । कः । कारण्डस्येदं कारण्डं तदाकारं वाति वा ।) हंसविशेषः । इत्यमरः । २ । ५ । ३४ ॥ खड़हाँस इति भाषा । (यथा ऋतुसंहारे । शरद्वर्णने ८ ।

"कारण्डवाननविघट्टितवीचिमालाः
कादम्बसारसकुलाकुलतीरदेशाः" ॥)

कारण्डव्यूहः, पुं, बुद्धभेदः । इति त्रिकाण्डशेषः । (बौद्धशास्त्रविशेषः ॥)

कारन्धमी, [न्] पुं, (कर एव कारस्तं धमतीति । ध्मा + इनिः । पृषोदरादित्वात् साधुः ।) कांस्यकारः । धातुवादरतः इति मेदिनी ॥

कारम्भा, स्त्री, (ईषत् रम्भा । कोः कादेशः ।) प्रियङ्गुवृक्षः । इत्यमरः । २ । ४ । ५६ ॥

कारवः, पुं, (का इति रवो यस्य । कुत्सितो रवो यस्येति वा ।) काकः । इति त्रिकाण्डशेषः ॥

कारवल्ली, स्त्री, (कारा इव स्तनो विक्षिप्ता वल्ली यस्याः । यद्वा कुत्सित आरो गतिर्यस्याः । सा चासौ वल्ली चेति ।) कारवेल्लः । काण्डीरः । इति राजनिर्घण्टः ॥

कारवी, स्त्री, (कारं वाति । वा + कः । के जलोपलक्षितवर्षाकाले रवो यस्य । कारवः केकावरो मयूरस्तस्य पुच्छमिवाकारोऽस्त्यस्य अच् । यद्वा कृ हिंसायां स्वार्थे णिच् ततः क्विप् । कारमवति । कर्म्मण्यण् । गौरादित्वात् ङीष् ।) मधुरा । मौरी इति भाषा । दीप्यः । मयूरशिखा । यवजटा इति भाषा । चोचयमानिका इति केचित् । सुषवी । केले जीरा इति भाषा । हिङ्गुपत्री । हिङ्गेर पाता इति भाषा । इत्यमरभरतौ ॥ क्षुद्रकारवेल्ली । इति राजनिर्घण्टः । छोट करला इति भाषा ॥

कारवेल्लं, क्ली, (कारं वेल्लति । वेल्ल चलने कर्म्मण्यण् । यद्वा कारेण वातगमनेन वेल्लति चलति गच्छति वा वेल्ल चलने अच् ।) कठिल्लकम् । करला इति भाषा । तत्पर्य्यायगुणाः ।

"कारवेल्लं कठिल्लं स्यात् कारवेल्ली ततो लघुः ।
कारवेल्लं हिमं भेदि लघु तिक्तमवातलम् ॥
ज्वरपित्तकफास्रघ्नं पाण्डुमेहकृमीन् हरेत् ।
तद्गुणा कारवेल्ली स्याद्विशेषाद्दीपनी लघुः" ॥

इति भावप्रकाशः ॥ अमरे पुंलिङ्गोऽयम् ॥

कारवेल्लः, पुं, (कारेण वायुवत् गत्या वेल्लति चलतीति । कार + वेल्ल + अच् ।) लताविशेषः । करला इति भाषा । तत्पर्य्यायः । कठिल्लकः २ सुषवी ३ । इत्यमरः । २ । ४ । १५४ ॥ सुषवी ४ सुशवी ५ । इति तट्टीका ॥ काण्डरः ६ काण्डकटुकः ७ सुकाण्डः ८ उग्रकाण्डः ९ कठिल्लः १० नासासम्वेदनः ११ पटुः १२ । इति राजनिर्घण्टः । तत्पुष्पगुणाः । धारकत्वम् । रक्तपित्तरोगे सुपथ्यत्वञ्च ॥ तत्फलगुणाः । श्लेष्मकफपित्तनाशित्वम् । रुचिकारत्वञ्च । इति राजवल्लभः ॥

कारवेल्लकः, पुं, (कारवेल्ल एव । स्वार्थे कन् ।) कारवेल्लः । इति रत्नमाला ॥ (क्लीवत्वमपि दृश्यते । यथा सुश्रुते सूत्रस्थाने ४६ अध्याये ।

"तद्वत् कर्कोटकं प्रोक्तं कारवेल्लकमेव च" ॥)

कारवेल्ली, स्त्री (कारवेल्ल + अल्पार्थे ङीष् ।) क्षुद्र-

कल्पनादिकमिति जिज्ञासितवतीं पार्व्वतीं प्रति भगवतः शिवस्योत्तरदानं तत्रैव १३ उल्लासे ॥
"उपासकानां कार्य्याय पुरैव कथितं प्रिये ! ।
गुणक्रियानुसारेण रूपं देव्याः प्रकल्पितम् ॥
श्वेतपीतादिको वर्णो यथा कृष्णे विलीयते ।
प्रविशन्ति तथा काल्यां सर्व्वभूतानि शैलजे ! ॥
अतस्तस्याः कालशक्तेर्निर्गुणाया निराकृतेः ।
हिताया प्राप्तयोगानां वर्णः कृष्णो निरूपितः ॥
नित्यायाः कालरूपाया अव्ययायाः शिवात्मनः ।
अमृतत्वात् ललाटेऽस्याः शशिचिह्नं निरूपितम् ॥
शशिसूर्य्याग्निभिर्नेत्रै रखिलं कालिकं जगत् ।
सम्पश्यति यतस्तस्मात् कल्पितं नयनत्रयम्" ॥
तस्याः स्थूलध्यानं यथा तत्रैव ५म उल्लासे ।
"मेघाङ्गीं शशिशेखरां त्रिनयनां रक्ताम्बरं बिभ्रतीं पाणिभ्यामभयं वरञ्च विलसद्रक्तारविन्द स्थिताम् ॥
मेघाङ्गीमिति वर्णनेनास्याः कृष्णवर्णत्वं सूचितं परं अरूपाया निराकृतेः कालशक्तेरेव ध्यानासम्भवतया ज्ञापकत्वमिति यावत् ।
शशिशेखरेत्युक्त्या शशी चन्द्रः जीवसमष्टिः सर्व्वजीववीजस्वरूपो हिरण्यगर्भो ब्रह्मा एव चन्द्रनामाख्यायते अतएवास्या देव्या ललाटे ऊर्द्ध्वदेशे इति निर्देशात् समस्तजड़शक्तिभ्यः पृथक् कृत्वा जीवशक्तेरुत्कर्षं बोधयति यथा,—
"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवरूपां महाबाहो ! ययेदं धार्य्यते जगत्" ॥
अतोऽस्या जीवशक्त्याधायकतया सैव परमात्मरूपिणी चिदानन्दमयीति प्रबोध्यते । यदि च स्थानभेदे क्वचित् परब्रह्मणः सकाशादस्याः पार्थक्यं दृश्यते तत्तु केवलमज्ञानां क्रियाविशेषबोधनायैव स्वरूपतः अभेदाहिकाशक्तिवत् सर्व्वत्रैव शास्त्रकृद्भिस्तयोरभेदः प्रतिपादितः । त्रिनयनमित्युक्त्या सर्व्वज्योतिःपदार्थानां प्रधानभूताश्चन्द्रसूर्य्याग्नयः प्रकाशशक्तेराधिक्यात् तैरेवास्या देव्या नयनत्रितयत्वेन प्रकल्पितं वस्तुतः सर्व्वप्रकाशकानां सूर्य्यादीनां सैवान्तर्यामितयाधिष्ठात्रीदेवतात्मरूपिणीति बोध्यम् ॥
रक्ताम्बरं बिभ्रतीं इति सृष्टिकरणार्थं सैव परमात्मरूपिणी रजोगुणोद्रेकरूपमम्बरं वस्त्रं आवरणशक्तिमिति भावः बिभ्रतीं धारिणीं । पाणिभ्यामभयं वरञ्च इति भक्तसाधकानां रक्षार्थं कुशलार्थञ्च वराभयदानरूपशक्तिद्वयस्य पाणिद्वयत्वेन कल्पितं रक्तारविन्दस्थितामिति रजोगुणसमुद्भवाया इच्छाशक्तेरेवारविन्दत्वेन प्रकल्पनं कृतमिति बोध्यम् । अतः स्थूलध्यानादीनां यदिचापाततः स्थूलदृष्ट्या नामरूपादिस्थूलजड़भावो लक्ष्यते परं सर्व्वत्रैव तेषां सूक्ष्मार्थरूपपरमात्मन्येव गूढ़तात्पर्य्यार्थः प्रतिफलनेव विज्ञानद्भिरेव तत्त्वर्व्वतो ज्ञातुं शक्यते । न ह्येतदस्माकं केवलं स्वकपोलकल्पनामात्रं श्रीमद्भगवद्गीताप्रभृतितत्त्वज्ञानप्रतिपादकशास्त्रेषु विशेषतोनिरूपितं किञ्च प्रकृतिपुरुषयोरपि तत्तच्छास्त्रे भूयोभूयोऽविनश्वरत्वमनादित्वं चाङ्गीकृतम् ।
"प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपीत्यादि" ।
भूरिभूरि प्रमाणानि सन्ति बाहुल्यभिया नैवास्माभिस्तान्युद्धृतानि ॥)

**कालीकः**, पुं, (के जले अलति पर्य्याप्नोति प्रभवतीत्यर्थः । अल + इकन् पृषोदरादित्वात् दीर्घः । यद्वा के जले + अलीकः मत्स्यलाभाय कपटशान्तमूर्त्तिरिव।) क्रौञ्चः । इति शब्दरत्नावली ॥

**कालीची**, स्त्री, ( काल्या यमभगिन्या चीयतेऽत्र । चिञ् + बाहुलकात् अधिकरणे डः । गौरादित्वात् ङीष् ।) यमविचारभूमिः । इति त्रिकाण्डशेषः ॥

**कालीतनयः**, पुं, (काल्याः यमरूपाया यमभगिन्याः यमत्वशक्तेर्वा तनयः इव यमवाहनत्वात्तथात्वम् । यद्वा, कालीं इतः प्राप्तः सन् बलिदानाय आत्मानं नयति प्रापयति । नी + अच् । कालीं प्रति उद्दिश्य वा इतः प्राप्तः उपस्थित इत्यर्थः आत्मनो नयः प्रापणं यस्य । महिषस्य कालीसन्निधाने बलिदानाय नीयमानतया तथात्वम् ।) महिषः । इति हेमचन्द्रः ॥

**कालीयं**, क्ली, (कालस्य कृष्णवर्णस्यायं कालस्थाने भवं वा "वृद्धाच्छः" । ४ । २ । ११४ । इति छः ।) कृष्णचन्दनम् । इति शब्दचन्द्रिका ॥ (अस्य व्यवहारो यथा, वैद्यकचक्रपाणिसंग्रहे एकादशशतिकप्रसारणीतैले । "कालीयोत्पलपद्मकाकुञ्जनिशेत्यादि" ॥)

**कालीयकं**, क्ली, (कालीय + स्वार्थे कन् । कालीयमिव कायति वा । कै + कः ।) कालिया इति ख्यातं पीतवर्णसुगन्धिकाष्ठम् । इत्यमरटीकासारसुन्दरी ॥ (यथा, महाभारते २ । ५१ । १० ।
"चन्दनागुरुकाष्ठानां भारान् कालीयकस्य च ।
चर्म्मरत्नसुवर्णानां गन्धानाञ्चैव राशयः" ॥)
तत्पर्य्यायः । जायकं २ कालानुसार्य्यं ३ । इत्यमरः । २ । ६ । १२६ ॥ जापकम् ४ । इति टीकासर्व्वस्वम् ॥ कालेयम् ५ वर्णकम् ६ कान्तिदायकम् ७ । इति भरतधृतव्याडिः ॥ राजनिर्घण्टोक्तगुणपर्य्यायौ पीतचन्दनशब्दे द्रष्टव्यौ ॥ कृष्णचन्दनम् । तत्पर्य्यायः । कालीयम् २ कालिकम् ३ हरिप्रियम् ४ । इति शब्दचन्द्रिका ॥ दारुहरिद्रा । इति राजनिर्घण्टः ॥ (अस्य व्यवहारो यत्र तद्यथा, "सालसाराजकर्णखदिरकदरकालस्कन्धक्रमुकभूर्जमेष शृङ्गीतिनिशचन्दनकुचन्दनशिंशपा शिरीषासनधवार्ज्जुनतालशाकनक्तमालपूतीकाश्वकर्णागुरूणि कालीयकञ्चेति" ॥ इति सुश्रुते सूत्रस्थाने । ३८ अध्यायः ॥)

**कालीयकः**, पुं, (कालीय + संज्ञायां स्वार्थे वा कन् ।) दारुहरिद्रा । इति शब्दरत्नावली ॥ (अस्य पर्य्याया यथा,—
"दार्व्वी दारुहरिद्रा च पर्ज्जन्यापर्ज्जनीति च ।
कटङ्कटेरी पीता च भवेत् सैव पचम्पचा ॥
सैवकालीयकः प्रोक्तस्तथा कालेयकोऽपि च ।
पीतद्रुश्च हरिद्रुश्च पीतदारुकपीतकम्" ॥
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

**कालेयं**, क्ली, (कं सुखं कालेयं आदेयं यस्मात् ।) कालियानामपीतवर्णसुगन्धिकाष्ठम् । इति व्याड़िः रमानाथश्च ॥ (यथा, कुमारे ७ । ९ ।
"तां लोध्रकल्केन हृताङ्गतैला-
माश्यानकालेयकृताङ्गरागाम्" ॥
कलाये रक्ताधारिण्ये हितं इति ढक् ।) कालखण्डम् । यकृत् इति यावत् इति मेदिनी ॥

**कालेयः**, पुं, (कालाया अपत्यं ढक् ।) दैत्यभेदः । इति मेदिनी ॥ (यथा, महाभारते १ । ६५ । ३४ ।
"कालायाः प्रथिताः पुत्राः कालकल्पाः प्रहारिणः ।
प्रविख्याता महावीर्य्या दानवेषु परन्तपाः ॥
विनाशनश्च क्रोधश्च क्रोधहन्ता तथैव च ।
क्रोधशत्रुस्तथैवान्यः कालेया इति विश्रुताः" ॥)

**कालेयकं**, क्ली, (कालेय + स्वार्थे कन् ।) कालीयकम् । कालियानाम पीतवर्णसुगन्धिकाष्ठम् । इत्यमरटीका ॥ ("मधुकरकुलकलङ्ककालीकृतकालेयककुसुमकुड्मलेषु" । इति कादम्बरी ॥)

**कालेयकः**, पुं, (कालेय + संज्ञायां स्वार्थे वा कन् ।) दारुहरिद्रा । इत्यमरः २।४।१०१ ॥ (यथा, सुश्रुते सूत्रस्थाने ३९ अध्यायः । "कालेयकागुरुतिलपर्णी कुष्ठहरिद्रेति" ॥ कालीयकशब्देऽस्य विवरणं ज्ञातव्यम् ॥ कलये विवादाय साधुः । कल + ढक् + संज्ञायां कन् । कुक्कुराणां हि अन्योन्यकलहपरत्वं प्रसिद्धम् ।) कुक्कुरः । इति राजनिर्घण्टः ॥

**काल्पः**, पुं, (कल्पे विधौ भवः । "तत्र भवः" ४ । ३ । ५३ । इति अण् ।) हरिद्राविशेषः । काँचा हलुद इति भाषा । तत्पर्य्यायः । कर्व्वूरः २ द्राविड़कः ३ द्राविड़भूतिकः ४ । इति शब्दरत्नावली ॥

**काल्पकः**, पुं, (कल्पे विधौ भवः । "तत्र भवः" । ४।३।५३। इत्यणन्तात् संज्ञायां स्वार्थे वा कन् ।) कर्व्वूरकः । इत्यमरः २।४।१२५ ॥ काँचा हलुद इति भाषा ॥

**काल्पनिकः**, त्रि, (कल्पनायाः आगतः । ठञ् ।) कल्पनाभवः । कल्पितः । यथा । "रसः स्वाद्यते इति काल्पनिकं भेदमुरीकृत्य कर्म्मकर्त्तरि वा प्रयोगः" । इति साहित्यदर्पणम् ॥

**काल्यं**, क्ली, (कलयति चेष्टाम् । अघ्न्यादयश्चेति कलेर्यक् । ततः प्रज्ञाद्यण् ।) प्रत्यूषः । इति हेमचन्द्रः ॥ (यथा हि रामायणे २ । ३४ । ३४ ।
"तर्पितः सर्व्वकामैस्त्वं श्वः काल्ये साधयिष्यसि" ॥)

**काल्यकः**, पुं, (काले साधुः । तत्र साधुरिति यत् । स्वार्थे कन् ।) काल्पकः । इति शब्दरत्नावली ॥

**काल्या**, स्त्री, (कालः प्राप्तोऽस्याः । कालाद्यत् । टाप् च ।) गर्भग्रहणप्राप्तकाला ऋतुमती गौः । तत्पर्य्यायः । उपसर्य्या २ । इत्यमरः । २ । ९ । ७० ॥ ("उपसर्य्या काल्या प्रजने" । इति पाणिनिः । ३ । १ । १०४ ॥)

**कावचिकं**, क्ली, (कवचिनां समूहः । "ठञ् कवचिनश्च" । ४ । २ । ४१ । इति ठञ् ।) वर्म्मभृतां

काशश्वासक्षयच्छर्द्दिस्वरसादादयो गदाः ॥
भवन्त्युपेक्षया यस्मात् तस्मात्तं त्वरया जयेत् ।
इति गारुड़े काशरोगनिदानं १५४ अध्यायः ॥ * ॥

अथ काशस्य चिकित्सा ।

तत्र वातकाशस्य चिकित्सा ॥
"वास्तूकं वायसीशाकं मूलकं सुनिषस्सुकम् ।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौड़िकाः ॥
दध्यारनालाम्लफलं प्रसन्नापानमेव च ।
शस्यते वातकाशेषु स्वाद्वम्ललवणानि च ॥
वायसी काकमाची कवई इति लोके । सुनिषस्सकं सिसुयारि इति लोके शाकविशेषः । चाङ्गेरी-सदृशचतुष्पत्रा जलान्तदेशे भवति । चौपति इति लोके ॥
"ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान् ।
रसैर्माषात्मगुप्तानां यूषैर्व्वा भोजयेद्धितान्" ॥
ग्राम्यानूपौदकैः रसैरित्यन्वयः । आत्मगुप्ता किवाछ इति लोके ॥
"दशमूलीकृता काशश्वासहिक्काज्वरापहा ।
यवागूर्दीपनी पथ्या वातरोगविनाशिनी ॥
रसः कर्क्कटकानां वा घृतभृष्टः स नागरः ।
वातकाशप्रशमनः शृङ्गिमत्स्यस्य वा पुनः" ॥ * ॥

अथ पित्तकाशस्य चिकित्सा ।
"कण्टकारीयगन्धाद्राक्षावासाकर्च्चूरवालकैः ।
नागरेण च पिप्पल्या क्वथितं सलिलं पिवेत् ॥
शर्करामधुसंयुक्तं पित्तकाशहरं परम्" ॥ * ॥

अथ कफकाशस्य चिकित्सा ।
"पिप्पली कट्फलं शुण्ठी शृङ्गी भार्गी तथोषणम् ।
कारवी कण्टकारी च सिन्धुवारो यवानिका ॥
चित्रको वासकश्चैषां कषायं विधिवत् कृतम् ।
कफकाशविनाशाय पिवेत् कृष्णारजोयुतम्" ॥
पिप्पल्यादिकाथः ॥ * ॥

अथ क्षतजकाशस्य चिकित्सा ।
"इक्षुवालिकापद्मस्मृणालोत्पलचन्दनम् ।
मधुकं पिप्पली द्राक्षा लाक्षा शृङ्गी शतावरी ॥
द्विगुणा च तुगाक्षीरी सिता सर्व्वचतुर्गुणा ।
लिह्यात्तन्मधुसर्पिर्भ्यां क्षतकाशनिवृत्तये" ॥
इक्षुवालिका इक्षुभेदः । कन्न इति लोके । पद्मं पद्मकाष्ठम् । मृणालं विशम् । उत्पलं कमलम् । चन्दनञ्च धवलम् चूर्णत्वात् । शृङ्गी कर्कटशृङ्गी । तुगाक्षीरी वंशलोचना । सा चेक्षोर्द्विगुणा ॥ * ॥ अथ क्षयकाशचिकित्सा । "चूर्णं काकुभमिष्टं वासकरसभावितं बहून् वारान् । मधुघृतसितोपलाभिर्लेह्यं क्षयकाशरक्तपित्तहरम्" ॥
काकुभं चूर्णं ककुभत्वक्चूर्णम् ॥ * ॥

अथ काशस्य सामान्यतश्चिकित्सा ।
"ताम्यमानस्य काशेन नासास्रावे स्वरे जड़े ।
क्षवथौ गन्धनाशे च धूमपानं प्रयोजयेत् ॥
मनःशिलालमरिचं मांसीमुस्तेङ्गुदैः पिवेत् ।
धूमं त्र्यहं च तस्यानु पयश्च सगुड़ं पिवेत् ॥
एष काशान् पृथक् द्वन्द्वसर्व्वदोषसमुद्भवान् ।
शतैरपि प्रयोगाणामसाध्यान् साधयेत् ध्रुवम्" ॥
आलं हरितालम् । इङ्गुदमिह पुत्रजीवकफलम् ॥

"बदरीदलमालिप्तं शिलायां धर्म्मशोषितम् ।
तद्धूमपानं सक्षीरं महाकाशनिवारणम् ॥
कण्टकारिकृतक्वाथः सकृष्णः सर्व्वकाशहा ।
कण्टकार्य्याः कषायाश्च चूर्णं समधु काशहृत् ॥
लवङ्गजातीफलपिप्पलीनां
भागान् प्रकल्प्याक्षसमानमीषाम् ।
पलार्द्धमात्रं मरिचं प्रदेयं
पलानि चत्वारि महौषधस्य ॥
सितासमस्तेन समाप्य चूर्णं
रोगानिमानाशु बलान्निहन्ति ।
काशज्वरारोचकमेहगुल्म-
श्वासाग्निमान्द्यग्रहणीविकारान्" ॥
समशर्करचूर्णं वटिका वा ॥
"कुनटीसैन्धवव्योषविड़ङ्गामयहिङ्गुभिः ।
लेहः साज्यमधुः काशश्वासहिक्कानिवारणः" ॥ * ॥
"हरीतकीकणा शुण्ठी मरिचं गुड़संयुतम् ।
काशघ्नो मोदकः प्रोक्तः परं वह्नेः प्रदीपनः" ॥ * ॥
"कर्षः कर्षांशकौ पलं पलद्वयं स्यात्ततोऽर्द्धकर्षश्च ।
मरिचस्य पिप्पलीनां दाड़िमगुड़यावशूकानाम्" ॥
सर्व्वौषधैरसाध्याः काशा ये वैद्यनिर्म्मुक्ताः ।
अपि पूयं छर्द्दयतां तेषामिदमौषधम्" ॥
पथ्यम् ॥ वङ्गसेनस्तु कर्षांश इति पाठे कर्षांशः कर्षार्द्धमिति व्याचष्टे ॥
"मरिचं कर्षमात्रं स्यात् पिप्पली कर्षसंमिता ।
अर्द्धकर्षो यवक्षारः कर्षयुग्मञ्च दाड़िमम् ॥
एतच्चूर्णीकृतं युञ्ज्यादष्टकर्षगुड़ेन हि ।
शाणप्रमाणां गुटिकां कृत्वा वक्त्रे विधारयेत् ॥
अस्याः प्रभावात् सर्व्वेऽपि काशा यान्त्येव संक्षयम्" ॥
दाड़िमं दाड़िमफलवल्कलं ग्राह्यम् । मरिचादिवटिका ॥ * ॥
"समूलवल्कच्छदकण्टकार्य्या-
स्तुलां ततो द्रोणमितं जलञ्च ।
हरीतकीनां शतमेकपात्रे
विपच्य कुर्य्याच्चरणाम्बुशेषम् ॥
तस्मिन् कषाये तनुवस्त्रपूते
हरीतकीभिः सहितो गुड़स्य ।
तुलां विनिःक्षिप्य पचेत् सुपक्व-
मेतत् समुत्तार्य्य सुशीतले च ॥
पृथक् पलञ्चापि कटुत्रयञ्च
तथा चतुर्जातपलं विचूर्ण्य ।
पलानि षट् पुष्परसस्य चापि
विनिःक्षिपेत्तत्र विमिश्रयेच्च ॥
प्रयुज्यमानो विधिनैष लेहो
यथाबलञ्चापि यथानलञ्च ।
वातात्मकं पित्तकृतं कफोत्थं
द्विदोषजातानपि च त्रिदोषम् ॥
क्षतोद्भवञ्च क्षयजञ्च काशं
श्वासञ्च हन्यात् सह पीनसेन ।
यक्ष्माणमेकादशसुग्ररूपं
हरीतकीयं भृगुणोपदिष्टा" ॥
पुष्परसो मधु । चतुर्जातं त्वगेलापत्रनागकेशराः ।
भृगुहरीतकी ॥ * ॥

"कण्टकारीतुलां नीरद्रोणे पक्त्वा कषायकम् ।
नीत्वा च तत्र चूर्णानि दापयेत् ॥
शङ्ख्येलाग्निगुडूचीचव्यचित्रकाः ।
मुस्तं कर्कटशृङ्गी च त्र्यूषणं धन्वयासकः ॥
भार्गी रास्ना शटी चैव शर्करा पलविंशतिः ।
प्रत्येकञ्च पलान्यष्टौ प्रदद्यात् घृततैलयोः ॥
पक्त्वा लेहत्वमानीय शीते मधुपलाष्टकम् ।
चतुष्पलं तुगाक्षीर्य्याः पिप्पलीश्च चतुष्पलाम् ॥
क्षिप्त्वा निदध्यात् सुदृढ़े मृण्मये भाजने शुभे ।
लेहोऽयं हन्ति हिक्कार्त्तिकासश्वासानशेषतः" ।
कण्टकार्य्यवलेहः । इति कासाधिकारः । इति भावप्रकाशः ॥ * ॥ अपि च ।
"हरीतकीकणा शुण्ठी मरिचं गुड़संयुतम् ।
काशघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः ॥
कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पलद्रवे ।
प्रस्थसिद्धो घृतात्कासकाशनुद्वह्निदीपनः" ॥
इति गारुड़े १७४ अध्यायः ॥
"मनःशिला बलामूलं काकपर्णश्च गुग्गुलुम् ।
जातिपत्रं कोलिपत्रं तथा चैव मनःशिला ॥
एभिश्चैव कृता वर्त्तिर्वदराग्नौ महेश्वर ! ।
धूमपानं काशहरं नात्र कार्य्या विचारणा" ॥
इति च गारुड़े १९४ अध्यायः ॥
"कतकस्य फलं शङ्खं सैन्धवं त्र्यूषणं वचा ।
फेनोरसाञ्जनं क्षौद्रं विड़ङ्गानि मनःशिला ।
एषां वर्त्तिर्हन्ति काशं तिमिरं पटलं यथा" ॥
इति तत्रैव १९८ अध्यायः ॥
"अभयामलकं द्राक्षा पिप्पली कण्टकारिका ।
शृङ्गं पुनर्नवा शुण्ठी अमृता काशं निहन्ति वै" ॥
इति च तत्रैव १९९ अध्यायः ॥

काशकः, पुं, (काशते दीप्यते इति । काश + कर्त्तरि ण्वुल् । ) काशः । इति शब्दरत्नावली ॥ केश्या इति भाषा ॥

काशमर्द्दः, पुं, (काशं मृद्नाति उपशमयति नाशयति वा । मृद् + "कर्म्मण्यण्" । ३ । २ । १ । इति अण् ।) कासमर्द्दवृक्षः । इत्यमरटीकायां रायमुकुटः ॥ (कासमर्द्दशब्दे ऽस्य गुणाः पर्य्यायाश्च ज्ञेयाः ॥)

काशा, स्त्री, (काशते इति । काश + अच् + टाप् ।) काशतृणम् । इत्यमर-टीकायां भरतः ॥

काशाल्मलिः, स्त्री, (कुत्सिता शाल्मलिः । कोः कादेशः ।) कूटशाल्मलिः । इति जटाधरः ॥

काशिः, स्त्री, (काश् + "सर्व्वधातुभ्य इन्" । उणां ४ । ११७ । इति इन् ।) काशी । इत्युणादिकोषः ॥ (यथा हेः रामायणे १ । १३ । २३ ।
"तथा काशिपतिं स्निग्धं सततं प्रियवादिनम् ।
सद्वृत्तं देवसङ्काशं स्वयमेवानयस्व हि" ॥)
काशिनगरोपलक्षिते जनपदे पुंभूम्नि ।
यथा महाभारते ६ । ९ । ४१ ।
"अत ऊर्द्ध्वं जनपदान्निबोध गदतो मम" ।
"बोधा मद्राः कलिङ्गाश्च काशयो ऽपरकाशयः" ॥
मुष्टिः । इति निरुक्तिः । यथा ऋग्वेदे ७ । १०४ । ८ । "आप इव काशिना संगृभीतो असन्नस्त्वा-

ये च मे युद्धकालेषु प्रवहन्ति रथं सदा ।
अश्वाश्च वारणाश्चैव दानवैर्बलवत्तरैः ॥
दुर्धिकोऽस्य समुतश्चैव पक्षच्छेदं यथात्तदा ।
वाजिनां शक्रवाक्येन शालिहोत्रो महामुनिः ॥
छिन्नपक्षास्तु ते सर्व्वे गत्वा तन्मुनिमब्रुवन् ।
दीनाः सुदुःखसम्पन्ना रुधिरेण परिप्लुताः ॥
भगवन् । किं निमित्तं न पक्षच्छेदः कृतस्त्वया ।
अपराधविहीनानां नेच्छन्ति परिरक्षिता ॥
तस्मादृतिर्भव प्राज्ञ । सर्व्वेषामिह वाजिनाम् ।
यथा स्यात् सर्व्वदा सौख्यं पुष्टिश्च मुनिपुङ्गव ॥
अथाशौ कृपयाविष्टस्तानुवाच सुदुःखितान् ।
इन्द्रात्प्राप्तं कृतं सर्व्वं भवतां पक्षपातनम् ॥
तस्माद्वः प्रकारयामि भविष्यति यथासुखम् ।
पृथ्वीरम्यां यथा दृष्टे गौरवं च जगत्त्रये ॥
अथ शक्रान्दिवानां वाहनत्वं करिष्यथ ।
तथा भूमिपालानाञ्च गौरवेण समन्विताः ॥
यो राजा भवतां पुष्टिं स्वन्नपानादिभिः सदा ।
करिष्यति न सन्देहो भविष्यति स दुर्ज्जयः ॥
न च त्यक्ष्यति तं लक्ष्मीः कदाचिज्जयलक्षणा ।
अपि सर्व्वैर्गुणैर्हीनं बहुशत्रुभिरावृतम् ॥
तथा चैव विधास्यामि परमञ्च चिकित्सितम् ।
पुष्टौ च रोगनाशार्थं नराणां विहितं यथा ॥
तस्मात्प्रकृत भूलोकं पातालञ्च तथापरे ।
स्वर्ग चान्ये मन्निदेशाद्दुयेन शान्तिर्भवेद्भुवन ॥
एवं विसृज्य तान् सर्व्वान् शालिहोत्रस्तुरङ्गमान् ।
चक्रे द्वादशसाहस्रीं तन्त्रे संहितां सुधीः ॥
ततः प्रभृति लोकेऽस्मिन् वाह्या जातास्तुरङ्गमाः ।
तच्चिकित्सितं तथा शालिहोत्रप्रभाषितम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते प्रश्नो नाम प्रथमोऽध्यायः ॥

अथ जातिः ।

उत्तमा मध्यमा नीचा कनीयांसस्तथापरे ।
चतुर्धा वाजिनो भूमौ जायन्ते देशसंश्रयात् ॥
ताजिकाः खुरशाणाश्च उत्तराश्चोत्तमा हयाः ।
गौन्धिकाश्च केकाणाः प्रौढाहाराश्च मध्यमाः ॥
भाण्डजाश्चोत्तमाशाश्च राजशूलाश्च मध्यमाः ।
गोह्वराः शावराश्चैव सिन्धुपाराः कनीयसः ॥
अन्यदेशोद्भवा ये च नीचनीचाश्च ते स्मृताः ।
वाजिनो जलजाः केचिद्वह्निजातास्तथापरे ॥
समीरप्रभवाश्चान्ये उलूकप्रभवास्तथा ।
जलोद्भवा द्विजातीयाः क्षत्रिया वह्निसम्भवाः ॥
समीरप्रभवा वैश्या उलूकाश्च शूद्रजाः ।
विवेकी सत्त्ववान् विप्रस्तेजस्वी क्षत्रियो बली ॥
दुष्टभावस्तथा वैश्यः शूद्रो निःसत्त्वकातरः ।
ब्राह्मणः सामवाही च भेरवाही च क्षत्रियः ॥
उपादानेन वैश्यः स्याच्छूद्रो दण्डेन ताड़ितः ।
पुष्पगन्धः सदा विप्रः क्षत्रियोऽगुरुगन्धकः ॥
घृतगन्धः सदा वैश्यो मीनामोदी च शूद्रकः ।
विप्राख्या वाजिनः सर्व्वे क्षत्रियो भूपतेः सदा ।
द्वौ वैश्यस्याथ शूद्रस्य शूद्र एव सुखावहः ॥
कथिञ्चिच्छन्ति भूपानां सर्व्वेऽप्यश्वा वाहनोचिताः ।
तन्त्रं भूमौ यतश्च्छालिहोत्रेण निर्म्मिताः ।
ब्राह्मणाः क्षेमकार्य्येषु सिद्धिं गच्छन्ति वाजिनः ॥
क्षत्रिया युद्धकार्य्येषु वैश्या वित्तार्ज्जने सदा ।
शूद्राश्चान्येषु कार्य्येषु चालिता वाजिनः सदा ॥
आरोहेत सर्व्वकार्य्येषु यदीच्छेच्छाश्वतीं श्रियम् ।
सदा शुभा भवन्त्येते वाजिनो यस्य भूतले ॥
सदैव निद्रावशगा निद्राच्छेदस्य सम्भवः ।
जायते सङ्गरे प्राप्ते कर्कशस्य च भक्षणे ॥
प्रबुद्धाः कथयन्त्यश्वाः शुभं वा यदि वाशुभम् ।
स्वस्वामिनो निद्रैश्चिह्नैस्तर्द्दिह्नेय विचक्षणैः ॥
यः सम्बद्धो हयो रावमर्द्धमर्द्धं करोति च ।
खुराग्रेण लिखन् भूमिं स शंसति रणे जयम् ॥
यः करोत्यसकृन्मूत्रं पुरीषञ्चाशुभोदयम् ।
स शंसति पराभूतिं यत्रैव वर्त्तते हयः ॥
निराभिषं निशीथे यो जागर्त्ति नृपतेर्हयः ।
स शंसति दुरन्तस्य स्थिरस्यापि प्रयाणकम् ॥
यदा व्याधिं विना वाजी ग्रासमत्यजति दुर्म्मनाः ।
अशुभातञ्च कुरुते तदा भर्त्तुरशोभनम् ॥
पुलकाङ्कितपुच्छा ये जायन्ते भूपतेर्हयाः ।
निरीक्षन्तः शशीनाथं ते वदन्ति निशागमे ॥
प्रस्पष्टं रक्तवैद्धस्नानं प्रविशन्ति हयालये ।
यदीच्छेच्छाश्वतीं वृद्धिं तथाश्वैव तथात्मनः ॥
स्फुलिङ्गा यस्य दृश्यन्ते पुच्छदेशे च वह्निजाः ।
परचक्रागमाशंसी विज्ञेयो हयपण्डितैः ॥
अश्वशालां समासाद्य यदान्तर्मधुमक्षिका ।
मधुजालं प्रकुर्व्वन्ति तदाश्वान् घ्नन्ति हन्तव्यः ॥
तस्मात् सत्त्वप्रयत्नेन वाजिशालां प्रयत्नयेत् ।
उपायेभ्यश्च सर्व्वेभ्यो य इच्छेद्धृतिमात्मनः ॥
ब्राह्मणान्वाचयन् शक्तिं नित्यं वर्णविचक्षणान् ।
तिलहोमजपाः कार्य्या जपश्च शान्तिरुच्यते ॥
मन्दुरान्ते सदा धार्य्यो रक्तवक्त्रो महाकपिः ।
सर्व्वपापविनाशाय वाजिनाञ्च विवृद्धये ॥
सदा रक्षयेद् यत्नात् प्रविशन्तौ हयालये ।
यदीच्छेच्छाश्वतीं वृद्धिं तथाश्वैव तथात्मनः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते वाद्यधिकारे द्वितीयोऽध्यायः ॥

अथ वर्णवर्णनम् ।

‘वर्णाः सप्त भवन्तीह सर्व्वेषां वाजिनां ध्रुवम् ।
तानहं कीर्त्तयिष्यामि भेदैर्जातानेनकधा ॥
सितो रक्तस्तथा पीतः सारङ्गः पिङ्ग एव च ।
नीलः कृष्णोऽथ सर्व्वेषां श्वेतः श्रेष्ठतमः स्मृतः ॥
पट्टार्हो भूपतेर्वाजी सर्व्वश्वेतः प्रशस्यते ।
तदभावे यथा प्रोक्तास्तथा श्रेष्ठाः क्रमेण च ॥
श्वेतः प्रालेयसङ्काशो रक्तः कुङ्कुमसन्निभः ।
हरिद्रासदृशः पीतः सारङ्गः कर्व्वुरः स्मृतः ॥
पिङ्गः कपिलकाकारो नीलो दूर्व्वाग्रसन्निभः ।
कृष्णो जम्बुफलाकारः शाम्बर्णे समुदाहृतः ॥
पीताभः श्वेतपादो यस्तथा स्यात् सितलोचनः ।
चक्रान्तः स विज्ञेयो राजार्हो वाजिसत्तमः ॥
सर्व्वश्वेतो हयो यस्तु भवेन्मेचककर्णकः ।
स वाजी वाजिमेधार्हः श्यामकर्णः प्रकीर्त्तितः ॥
मुखे चन्द्रकसंवीतो जम्बूफलसमाकृतिः ।
श्वेतपादः स विज्ञेयो मल्लिकाख्यः स पूजितः ॥
चत्वारोऽप्यसिता पादाः सर्व्वश्वेतस्य वाजिनः ।
भवन्ति यस्य स त्याज्यो यमदूतः सुदूरतः ॥
यस्य पादाः सिताः सर्व्वे पुच्छं वक्षो मुखं तथा ।
मूर्द्धजाश्च सिता यस्य तं विद्यादष्टमङ्गलम् ॥
भस्माभं वाजिनं त्यजेत् सुदूरेण नराधिपः ।
यदि वाञ्छति कल्याणं वाञ्छञ्च श्रीसमुद्भवम् ॥
यस्य रोमविभेदेन जायन्ते रोमबिन्दवः ।
पुष्पाख्यः स परित्याज्यः सर्व्ववाजिभयावहः ॥
यस्य पादाः सिताः सर्व्वे तथा वक्त्रञ्च मध्यतः ।
कल्याणपञ्चकः प्रोक्तः सर्व्वकल्याणदश्च सः ॥
विमिश्रवर्णका सर्व्वे प्रशस्ता वाजिनः स्मृताः ।
कृष्णनीलस्य निःश्वेतमेकं मुक्ता सुदूरतः ॥
यस्योत्कृष्टतरो वर्णो वृद्धिं याति शनैः शनैः ।
नाशयति तथा नीचान् स करोति बहून् हयान् ॥
यस्याधमेन वर्णेन छाद्यते च प्रधानकः ।
विवृद्धिं गच्छता सोऽथ करोति हयसंक्षयम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते वर्णो नाम तृतीयोऽध्यायः ॥

अथ आवर्त्ताः ।

“आवर्त्ता विंशतिः प्रोक्ताः शालिहोत्रमहात्मना ।
गात्रस्थानविभागेन तेषां व्यक्तिर्मयोच्यते ॥
ललाटे मस्तके चैव ग्रीवायां हृदये तथा ।
पादे पृष्ठे मणिबन्धे नाभिदेशे विशेषतः ॥
स्कन्धे पार्श्वे गले वक्त्रे कुक्षौ रन्ध्रे त्रिके तथा ।
आद्यास्तयोऽशुभावर्त्ता विज्ञेया वाजिपण्डितैः ॥
नासिकाग्रे ललाटाग्रे शङ्खे कण्ठे च मस्तके ।
आवर्त्तो जायते येषां ते धन्यास्तुरगोत्तमाः ॥
हृदि स्कन्धे गले चैव कटिदेशे तथैव च ।
नाभौ कुक्षौ च पार्श्वाग्रे मध्यमास्ते प्रकीर्त्तिताः ॥
ललाटे यस्य चावर्त्तौ द्वितीयस्य स निन्दकः ।
मस्तके च तृतीयश्च पृथक्कुक्षिः स उत्तमः ॥
पृष्ठदेशे तथावर्त्तो यस्यैकः स प्रजायते ।
स करोत्यश्वसङ्घातान् स्वामिनः सुख्यसम्भवः ॥
कक्षायां जानुमेढ्रे च त्रिवलौ पुच्छसन्निधौ ।
पुच्छे गुह्ये बलावष्टावावर्त्ता अधमा हये ॥
त्रयो यस्य ललाटस्था आवर्त्ता अधरोत्तराः ।
त्रिकूटः स परिज्ञेयो वाजिवृद्धिकरः परः ॥
एवमेव प्रकारेण त्रयो ग्रीवां समाश्रिताः ।
त्रयावर्त्तः स वाजीशो जायते भूपमन्दिरे ॥
ललाटे युगलावर्त्तौ चन्द्रार्कौ सम्प्रकीर्त्तितौ ।
वाजिनो यदि तौ स्यातां राष्ट्रवृद्धिकरौ परौ ॥
उपर्य्युपरि यस्य स्युरावर्त्ता अलिके त्रयः ।
निःश्रेणिः स तु विज्ञेयो राष्ट्रवृद्धिकरः परः ॥
एकोऽथवा कपोलस्थो यस्यावर्त्तः प्रदृश्यते ।
वर्त्तमानः स विज्ञेयः स दृश्येत् स्वामिनाशनम् ॥
कपोलाभ्यान्तथावर्त्तौ विद्येते वाजिनो यदि ।
तावश्विनाविति प्रोक्तौ युद्धकाले जयप्रदौ ॥
गण्डावर्त्तौ भवेद्यस्य वाजिनो दक्षिणाश्रयः ।
स करोति महासौख्यं स्वामिनः शिवसञ्चकः ॥
तद्वामाश्रयः क्रूरः प्रकरोति धनक्षयम् ।
इन्द्रकाख्याबुभौ शस्तौ नृपराज्यविवृद्धिदौ ॥
कर्णमूले यदावर्त्तस्तम्भाधो च तथापरः ।

विनयाख्यावुभौ ज्ञेयौ युद्धकाले जयप्रदौ ॥
नासामध्ये यदावर्त्त एको वा यदि वा त्रयः ।
चक्रवर्त्ती स विज्ञेयो वाजी भूपालपूजितः ॥
कण्ठे यस्य महावर्त्त एकोऽश्वस्य प्रजायते ।
चिन्तामणिः स विज्ञेयश्चिन्तितार्थविवृद्धिदः ॥
स्कन्धे पार्श्वे यदावर्त्तः स भवेत् पद्मलक्षणः ।
करोति विविधवत् पद्मं स्वामिनः सततं सुखम् ॥
शुक्राख्यौ तालुवान्तस्थावावर्त्तौ कीर्त्तिवृद्धिदौ ।
हृदयस्य स्वामियुक्तस्य सदैव सुसुखावहौ ॥
एकावर्त्तो भवेद्यस्य कक्षान्ते वाजिनो यदा ।
स एवो मृत्युमाप्नोति द्वौ च स्वामिविनाशनौ ॥
जानुदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
प्रवासं सततं कुरुते स्वभर्त्तुः क्लेशसंयुतम् ॥
वाजी मेढ्रतलावर्त्तो वर्जनीयो गृहीशुभाम् ।
स करोति हरेर्नाशं परचारसमुद्भवम् ॥
त्रिवलिस्थो यदावर्त्तस्त्रिवर्गस्य प्रणाशकः ।
वाजिनस्ते परिज्ञेयाः स्त्रीपार्श्वस्था भयप्रदाः ॥
पुच्छदेशे यदावर्त्तो वाजिनः संप्रदृश्यते ।
धूमकेतुरिति ख्यातः स त्याज्यो दूरतो गृहैः ॥
गुह्ये पुच्छे वलौ यस्य भवन्त्यावर्त्तकास्त्रयः ।
स कृतान्तस्वरूपेण वर्जनीयस्तुरङ्गमः ॥
अथ ऊर्द्धं यदा वाजी सम्पुटं न स्पृशेत् क्वचित् ।
यमदूतः स विज्ञेयो वर्जनीयः प्रयत्नतः ॥
हीनदन्तोऽधिदन्तश्च कराली कृष्णतालुकः ।
मुशली च तथा शृङ्गी मर्द्दते स्वामिघातकाः ॥
एकाण्डजातश्चैकाण्डो हीनाङ्गोऽप्यधिकाङ्गकः ।
परित्याज्यः स वाञ्छद्भिरन्विष्य परमं यशः ॥
घण्टी वदनवो वाली शृङ्गी चैव चतुर्थकः ।
वर्जनीयः प्रयत्नेन सर्व्वे ते पापलक्षणाः ॥
घण्टी च स्वामिनं हन्ति वदनी धनसंचयम् ।
अन्तःपुरं तथा वाली शृङ्गी राष्ट्रविनाशनः ॥
षट्पदाभो भवेद्यस्य कृष्णतालुर्न दुष्यति ।
शङ्खपादसखो यस्तु आवर्त्तैः कुत्सितैरपि ।
न दुष्यति सदावर्त्तः शालिहोत्रमतं यथा ॥
इति श्रीनकुलविरचितेऽश्वचिकित्सिते आवर्त्ताध्यायश्चतुर्थः ॥

अथ दन्ताः ।

दन्तोद्भेदं प्रवक्ष्यामि वाजिनामायुलक्षणम् ।
येन विज्ञातमात्रेण आयुर्ज्ञानं प्रचक्षते ॥
अश्वस्तु तनुभिर्दन्तैः क्षीरदन्त इति स्मृतः ।
तथा षोडशभिः कोणे शाबैर्द्वादशमासिकः ॥
त्रिंशन्मासोद्भवाः सर्व्वे अखण्डाः परिकीर्त्तिताः ।
द्वौ स्यातां द्वौ च न स्यातां सर्व्वोपरि यथाक्रमम् ॥
चतुर्भिर्वत्सरैर्दन्ताः कालिकाख्या भवन्ति च ।
तथान्यः सप्तमे वर्षे चतुर्थः कालिको भवेत् ॥
अष्टमे वत्सरे प्राप्ते प्रभाः स्युः सार्व्वकालिकाः ।
नवमे लघवा रेखा पीतत्वं संस्पर्शन्ति च ॥
तथाप्येकादशे वर्षे तावत् पीतत्वमागताः ।
तिष्ठन्ति दशनास्तेषां वाजिनामध्वसंशयम् ॥
ततः श्वेताः प्रदृश्यन्ते यावद्वर्षत्रयं पुनः ।
ततः काचप्रभाः सम्यक् यावत् संवत्सरत्रयम् ॥
ततः सप्तदशादूर्द्धं यावद्वर्षाणि विंशतिः ।
मक्षिकाभारदास्तेषां यावद्वर्षत्रयं पुनः ॥
तस्मादुदूखलं प्राप्तास्तावद्वर्षत्रयं पुनः ।
प्रकम्पश्च समागम्य पश्चात् पातः समात्रयम् ॥
द्वात्रिंशद्वत्सरैरेव वाजी निर्व्वाणमाप्नुयात् ।
दंष्ट्राचतुष्टयं श्वेतं वर्ज्जेण परमायुषि ॥
अश्वानामेव सर्व्वेषां दन्ता द्वादश कीर्त्तिताः ।
कालिका हारिणी शुक्ला काचा वाप्यथ मक्षिका ॥
शङ्खोदूखलकश्चैव दन्तानाञ्चलनं तथा ।
ततस्तु पतनं विद्यादेष वञ्जनसंग्रहः ॥
चतुर्विंशतयो दंष्ट्राः शालिहोत्रमतं तथा ।
एवं दन्तविशेषेण सर्व्वेषामिह वाजिनाम् ।
विज्ञेया चायुषःसंख्या वाजिपोषणतत्परैः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते दन्तोद्भेदो नाम पञ्चमोऽध्यायः ॥

अथ अवयवप्रमाणम् ।

दीर्घह्रस्वविमांसास्या ये भवन्ति तुरङ्गमाः ।
ते शस्ताः पार्थिवेन्द्रस्य यानवाहनकर्म्मणि ॥
स्कन्धमभ्युन्नतं दीर्घं वक्रग्रीवं विशेषतः ।
चमरालङ्कृतं सम्यक् स्तोकवालसमन्वितम् ॥
येषां पृष्ठं सुवंशं स्याद्विपुलं व्रणवर्जितम् ।
किञ्चिन्मध्ये भवेन्निम्नं राजार्हास्ते तुरङ्गमाः ॥
स्निग्धरोमा सुवृत्ता च सुस्थूला विपुला कटी ।
ग्रथिताः सुदृढ़ा रम्या भुजा मांसप्रपूरिताः ॥
पादा निर्मांसला वक्राश्चक्राकारखुरान्विताः ।
अप्रमाणं तथा वक्षः कर्णौ लघुतरौ स्मृतौ ॥
पार्श्वौ तनुतरौ शस्तौ सुरक्तस्निग्धतालुकम् ।
दन्ताश्च शिखराकारा विपुला चन्द्रवर्चसः ॥
सप्तविंशप्रमाणेन मुखमश्वस्य शस्यते ।
कर्णौ षडङ्गुलौ प्रोक्तौ तालुकं चतुरङ्गुलम् ॥
चत्वारिंशच्च सप्ताढ्याः स्कन्धाः सम्यक् प्रकीर्त्तिताः ।
पृष्ठवंशश्चतुर्व्विंशः सप्तविंशा तथा कटी ॥
अतिसूक्ष्मं तथा निम्नं पुच्छं हस्तद्वयायतम् ।
लिङ्गं हस्तप्रमाणञ्च तथान्तौ चतुरङ्गुलौ ॥
मार्गस्थानं चतुर्व्विंशं हृदयं षोड़शाङ्गुलम् ।
कटिकक्षान्तरञ्चोक्तं चत्वारिंशत् प्रमाणतः ॥
मणिबन्धद्वयं चैव खुराश्च चतुरङ्गुलाः ।
अशीत्यङ्गुल उत्सेधो दैर्घ्यञ्च द्व्यधिकं शतम् ।
एवं क्रमेण गात्रस्य प्रमाणं वाजिनां मतम् ॥
दीर्घाणि चत्वारि तथोन्नतानि
चत्वारि रक्तानि च सूक्ष्मकाणि ।
ह्रस्वानि चत्वार्य्यथ चायतानि
भूयश्च चत्वार्य्यथ नम्रकाणि ॥
द्वात्रिंशत् क्रमशोऽप्याहुर्लक्षणानि मुनीश्वराः ।
तान्यहं कीर्त्तयिष्यामि वाजिनाञ्च पृथक् पृथक् ॥
आस्यं मुखौ केशकलापटिकाश्च
दीर्घं चतुष्कं तुरगस्य शस्तम् ।
तथोन्नते प्राणपुटे ललाटे
शफाश्च तज्ज्ञास्खुरयौ वदन्ति ॥
ओष्ठौ च जिह्वाप्यथ तालुकञ्च
मेढ्रं सुरक्तं शुभदं हयस्य ।
लम्बानि वस्त्यास्वरगेषु कोष्ठं
श्रोत्राणि सर्व्वाणि तथैव पुच्छम् ॥
कर्णान्तरं कर्णसमन्वितञ्च
वंशं तथा ह्रस्वतरं प्रशस्तम् ।
वक्त्रं मुखं कन्धराजानुनी च
पार्श्वञ्च सप्तिः शुभदं प्रदिष्टम् ॥
कक्षान्तरं चोदरमध्यमञ्च
निम्ना कटी तानि सजानुकानि ।
वक्षःशफोरूनघनस्थलञ्च
चतुष्कमेतत् पृथुलं प्रदिष्टम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते सर्व्वावयवप्रमाणो नाम षष्ठोऽध्यायः ॥

अथ वेगः ।

गुणानामिह सर्व्वेषां गुणो वेगमयोऽधिकः ।
अश्वानां शस्यते तज्ज्ञैरश्वज्ञानविचक्षणैः ॥
संवाहनविधानेन प्रकाशं यान्त्यसंशयम् ।
तस्मात् सर्व्वप्रयत्नेन वेगो ज्ञेयश्च वाजिनाम् ॥
अवाहिता विनश्यन्ति विनश्यन्त्यतिवाहिताः ।
अश्वानां वाहनं पथ्यं सानुरागश्च मोक्षणम् ॥
अधमा मध्यमास्ते स्युर्मध्यमाश्च तथोत्तमाः ।
उत्तमाश्चोत्तमा भूयो वाह्यमानास्तुरङ्गमाः ॥
रूढ़मश्वविदां श्रेष्ठं रूढ़े सर्व्वं प्रतिष्ठितम् ।
रूढ़ेन तु विहीनस्य लक्षणं चाप्यलक्षणम् ॥
रूपावर्त्तगतिच्छायासत्ववर्णवयोबलम् ।
जवहीनस्य वाहस्य सर्व्वमेव निरर्थकम् ॥
गतेर्धन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः ।
स्वराद्धन्यतरं सत्वं सर्व्वं सत्वे प्रतिष्ठितम् ॥
लघुत्वं मातृदोषेण पितृदोषेण जाड्यता ।
दौर्व्वल्यं स्वामिदोषेण स्वदोषो नास्ति वाजिनाम् ॥
जवो हि सप्तेः प्रथमं विभूषणं
त्रपाङ्गनायाः कृशता तपस्विनः ।
द्विजस्य वेदोऽथ मुनेरपि क्षमा
पराक्रमः शस्त्रबलोपजीविनः ॥
आकर्षन्निव गां वमन्निव खुरौ पश्चार्द्धमुद्यन्निव
स्रोतुर्म्मन्निव खं पिबन्निव दिशो वायुं समश्नन्निव ।
साङ्गारप्रवरान् स्पृशन्निव महीं छायाममर्षन्निव
चञ्चच्चामरवीज्यमानवदनः श्रीमान् हयो धावति ॥
अलक्षितगतागतैर्निगदस्यां कटाक्षैरिव
चणानुनयशीतलैः प्रलयकेलिकोपैरिव ।
सुरत्नमरकतोत्तरैर्निगदस्यासुरोचैरिव
त्वरीयतुरगैरलं धरणिचक्रमाक्रम्यते ॥
येषां दीर्घशिखोपमानि नयनान्युद्भावितः सन्निव
ग्रीवा क्रौञ्चनिभा विभाति च समा पादाश्च मुक्तोपमाः ॥
वेगो वायुरिवाथ वानरसमः स्वान्ताश्चयेङ्गितं
शङ्खक्रौञ्चमृगेन्द्रदुन्दुभिघनव्याघ्रेभतुल्यस्वनः ॥
वक्त्रे यो हरिणाधिपप्रतिनिभो याश्चोपमो बाहुभिः
आवर्त्तैरशुभैः प्रधानकुलजाः सान्द्राभ्रवर्णप्रभाः ।
उच्चाश्चाः प्रियदर्शनाश्च सुभगाः श्वासैः सुगन्धैश्च ये

धावन्ति घातैश्च न चोद्विजन्ते
भयावहास्ते समरे नृपाणाम् ॥
शोकं शीलं भयं लज्जामालस्यं चैवमादिषु ।
सुकुलं तं विजानीयाद्दलं पर्य्याणवारणे ॥
स्थाणुकण्टकवृन्दैश्च सुधाखदिरकण्टकैः ।
स्वामिघाताय चादत्ते तेषां रूपमिदं शृणु ॥
वानरोलूकमार्जारतरक्षुगण्डलोचनाः ।
गतिर्वा वसुरैस्तुल्या स्थूलमेढ्रशिरान्विताः ॥
लम्बोष्ठकर्णनासाश्च क्षतदर्हीनाधिकाङ्घ्रिकाः ।
विच्छिन्नग्रीवगण्डा ये भ्रुकुटीचित्रमेहनाः ॥
एते दोषास्तथान्येऽपि सुकुलाश्वसमुद्भवाः ।
खलानामिह राजेन्द्र! वक्तुं शक्या न मादृशैः ॥
लक्ष्यं प्रधानमित्येके चान्ये लक्षणमाश्रिताः ।
लक्ष्यलक्षणमेतेषां तेनेदं दुष्करं विदुः ॥
अश्वाभिरतिसंक्षेपादतिवाशिश्च विस्तरात् ।
मुनीनामेकवाक्यत्वाद्भूयासः स्थितिदुष्कराः ॥
सत्ववर्णगतिच्छायास्वरस्थानगतिः क्रमम् ।
पुष्पं पुण्ड्रकनामानि दोषं वा जवलक्षणम् ॥
एवं लक्षणसंयुक्तं दृश्यते शूररक्षणे ।
लक्षणेन विहीना ये निर्दोषाःस्युः प्रधाविताः ॥
हयरोहस्य का चिन्ता लक्षणैः शुभनिन्दितैः ।
तेनात्र न कृतोऽस्माभिर्हयलक्षणविस्तरः ॥
हयवाहनविज्ञानं कौतुकाहितहृदयः ।
अनायासेन गृह्णन्ति परं दृष्ट्वा इमे जनाः ॥
चलासनं कशा राशाः पाणिघातप्रतोदनम् ।
मदप्रघातसंज्ञानि दोषो येरुपजायते ॥
कामात् कोपाद्भयाल्लोभाद्दर्पाच्चैव मदाश्रयात् ।
मर्य्यादारोहदोषाच्च दुष्यन्त्यश्वा निसर्गतः ॥
श्रीयुक्तसामन्तनरेन्द्रवन्दितं
रक्षे हयारोहवराभिनन्दितम् ।
धर्म्मार्थकामादियशःप्रधान-
मित्थं कृतं वाहनशास्त्रविस्तरम् ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते वाहना-
ध्यायो नवमः ॥

अथ धातुपरीक्षा ।

अथातः संप्रवक्ष्यामि धातूनां लक्षणं परम् ।
येन विज्ञानमात्रेण ज्ञायन्ते रोगसम्भवाः ॥
ततः शुद्धशरीरोत्थरक्तदोषानवाप्नुयात् ।
रक्तदोषात्तदा वाजी प्राप्नोत्येव महामयान् ।
तस्मात् सर्व्वप्रयत्नेन रक्तं ज्ञेयं विचक्षणैः ।
आषाढ़समये प्राप्ते शिरामोक्षेण तत्क्षणः ॥
तेन संशोध्यते रक्तं वाजिनां दोषसम्भवम् ।
ततः शुद्धशरीरोऽथ पिण्डाद्यैश्च बलीकृतः ॥
सावशेषं शष्पमास्वाद्य वज्रवत् सुदृढ़ो भवेत् ।
यदि रक्ताधिको वाजी शष्पमश्नाति कर्हिचित् ॥
रक्तात् सञ्जायते पित्तं ततो नाशमवाप्नुयात् ।
रक्ताधिकश्वासपुटः स्नेहाद्यैः शष्पमत्ति चेत् ॥
संप्राप्य श्लेष्मरिक्ताढ्यो नाशमवाप्नुयात् ।
हीनरक्तो यदा शष्पं रुक्षोऽश्नाति तुरङ्गमः ॥
तदा वायुं परं प्राप्य सद्यो नाशमवाप्नुयात् ।
वक्ष्ये लक्षणं प्रोक्तं रक्तकोपसमुद्भवम् ॥
धातूनामपि सर्व्वेषां ज्ञेयमिदं विचक्षणैः ।
पित्तरक्तप्रकोपेण यदा संपीड्यते हयः ॥
तदा कण्डूनिमामाद्य कषते सततं वपुः ।
छायां वाञ्छति यत्नेन विशेषेण जलाश्रयम् ॥
मुहुर्वाञ्छति पानीयमाहारञ्च विशेषतः ।
एवं वातोत्थरक्तेन ज्ञात्वाश्वं पीड़ितं ततः ॥
शिरामोक्षं विधायैव दद्यात् सकटुकं गुड़म् ।
ततः शुद्धिमवाप्नोति नीरोगः संप्रपद्यते ॥
पित्तासृग्दूषितो वाजी यदि चाश्रूणि मुञ्चति ।
नेत्रान्ते पाण्डुरताञ्च सद्यो मृत्युमवाप्नुयात् ॥
नेत्रयोर्लक्षणं प्रोक्तं पित्तरक्तसमुद्भवम् ।
श्लेष्मरक्तप्रकोपेण यदा सम्पीड्यते हयः ॥
अधोमुखो भवेन्नित्यं श्वसते च मुहुर्मुहुः ।
आहारं न च गृह्णाति नात्मानं कुरुते क्वचित् ॥
न विन्दति कशाघातं न च पार्ष्णिं न चासनम् ।
नासाग्रेण क्षिपेत्तोयं वह्निधर्म्मस्य वाञ्छति ॥
तस्यापि शोधयित्वासृग् दद्यात् कृष्णागुरुं गुड़म् ।
सर्व्वं रक्तं ततः शुद्धं निःशेषं समवाप्नुयात् ॥
वाजिनः श्लेष्मरक्ताभ्यां दूषितस्य सदा भवेत् ।
नेत्रान्ते बिन्दुकाकारकण्डूस्तस्य तथोदरे ॥
तदा मृत्युमवाप्नोति पक्षाभ्यन्तरे ध्रुवम् ॥
शुण्ठ्यामलकगोक्षुरकं घनञ्च
श्यामानिशाहिङ्गुयुता च यष्टिः ।
कफप्रणाशाय विनिर्म्मितोऽयं
पिण्डः पनिष्ठ कफापहश्च ॥
नोचेदन्यानि शुण्ठ्यादीनि सैन्धवं नस्यमार्गतः ।
वायुरक्तप्रकोपेण पीड़ितस्तु तुरङ्गमः ॥
कुक्षिद्वयं हयस्तीव्रं मुहुः श्वासं प्रमुञ्चति ।
नैकत्र मन्यते स्थातुं पिबते च निरर्गलम् ।
अत्र वातोद्भवं ज्ञाप्यं रक्तान्दैर्हि हयस्य च ॥
शोधयित्वाश्च मन्दक्षारहाष्टतमनल्पकम् ।
ततः शुद्धिमवाप्नोति परां पुष्टिञ्च गच्छति ॥
उत्साहं कुरुते मार्गे सर्व्वदोषविवर्ज्जितः ।
वातरक्तप्रकोपेण लोचनान्ते हयस्य च ॥
यदा स्यातां सिते रक्ते वाशः कण्डूस्तथानने ।
तदा तस्य भवेन्मृत्युर्यदि नाश्नाति चामिषम् ॥
अश्मकाश्च युतन्द्रा माक्षिकेण निशागमे ।
सन्निपातेऽथ रक्तेन यदा सम्पीड्यते हयः ॥
यदा वेपथुमाप्नोति काशते च निरर्गलम् ।
निद्रालस्याग्निमन्दत्वं वक्त्रौ मलनिबन्धनम् ॥
कर्णयोः पातनञ्चैव वक्त्रलालाविमोक्षणम् ।
तत्रापि शोधयेद्रक्तं ततो लङ्घनमर्हति ॥
यावद्दोषस्य निर्णाशं लोकोदकशताशनः ।
क्वचिदुष्णं क्वचिच्छीतं क्वचिद्भेषजसंयुतम् ॥
प्रदेयं युक्तितत्त्वज्ञैर्वारि वार्य्यं न कुत्रचित् ।
सपथ्या चाम्लता चैव कटुका च वचा तथा ॥
शमयेत्तत्क्षणादेव त्रिधातुकुपितं ज्वरम् ।
शिरीषं श्रीफलस्यैव वेतसस्यैव वह्निभाक् ॥
मन्दाग्नित्वं सदोषाणां कुरुते भक्षसादृशम् ।
मधुकं मधुजालञ्च माधुर्य्यं कुलिकान्वितम् ॥
शिरीषं चूर्णकं वाचां धापयित्वा त्रिभागतः ।
यस्यैतत् सन्निपाताय वाजिनः संप्रदीयते ॥
तस्य तन्नाशमायाति तमः सूर्य्योदये यथा ।
श्वस्यस्मादि हि नेत्रान्ते स्यातां नीले च वाजिनः ॥
गन्धश्च मद्यः जीवगा तदा मृत्युर्द्विमासिकः ।
नीले पीतेऽथ नेत्रान्ते स्यातां येद्वाजिनः क्वचित् ।
स निर्णाशमवाप्नोति त्रिभिर्मासैरसंशयम् ॥
यस्य नेत्रान्तरे रेखा बहुवर्णा प्रजायते ।
त्रिशेषान् स्वरभेदः स्यात्तस्यायुः पञ्चमासिकम् ॥
जिह्वायां जायते बिन्दुरकस्माद् यस्य वाजिनः ।
कृष्णस्य जीवते मासं स वाजी नात्र संशयः ॥
पीतो मासद्वयेनैव मृत्युं प्रयच्छति ।
त्रिभिर्मासैस्तथारक्तश्चतुर्भिश्च विचित्रितः ॥
पञ्चभिर्नीलवर्णश्च षड्भिर्जलसमाकृतिः ।
सप्तभिः पाटलाकारश्चन्यकाभस्तथाष्टभिः ॥
नवभिश्च हरिद्राभो दशभिर्जम्बुकोपमः ।
एकादशभिर्दूर्व्वाभो वत्सरेण हिमद्युतिः ॥
यस्य श्वासो भवेदुष्णः शरीरं पुलकाङ्कितम् ।
जिह्वा छिन्नकराकारा मासषट्कं स जीवति ॥
ग्रीवाग्रे पिटिका यस्य जायते च तथाधरे ।
मूत्रं करोति रक्ताढ्यं मासषट्कं स जीवति ॥
वर्णः श्वेतो यदा यस्य नेत्रयोश्च प्रजायते ॥
दशमासान् समासाद्य पित्तार्त्तो न न जीवति ।
यस्य नीलप्रभे स्यातां नेत्रे वातार्द्दितस्य तु ।
नासत्रयस्य स्पर्शेण यः क्षिप्तः स न जीवति ॥
श्लेष्मयुक्तस्य या रक्ते यदि स्यातां विलोचने ।
वातान्धः सुरातुल्यो दश मासान् न जीवति ॥
यस्य नेत्रे हरिद्राभे स्यातां पित्तार्द्दितस्य च ।
तस्यायुः सप्तमासाख्यं मुनिभिः परिकीर्त्तितम् ॥
बहुवर्णे घने नेत्रे स्यातां धातुसमागमे ।
तस्य सप्तभिर्वेन्मृत्युः सप्तरात्रादसंशयम् ॥
यस्यैकं लोचनं नीलं द्वितीयं रक्तसन्निभम् ।
दृश्यते च च विज्ञेयः पित्ताढ्यो मासजीवकः ॥
यस्य पित्तप्रसक्तस्य काले नीरदवर्त्तिनि ।
हयस्य जीवितं तावद्दिनानि दश पञ्च च ॥
एवं रक्तविकाराणां ज्ञात्वा धातुं तुरङ्गमे ।
ततः प्रतिक्रिया कार्य्या उक्ता या कीर्त्तिता परा ॥
भयाद्भीतपानीयशीनविशीर्णस्य च ।
आर्त्तोऽपि ताड़ितोऽत्यर्थं तिर्य्यग्विद्धो यदापि वा ॥
श्रमाद्दूराच्च वन्धाद्वा गात्रं वा विषमस्थिते ।
क्षीणशोणितमांसस्य शिरावेधः प्रशस्यते ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते धातु-
परीक्षाध्यायो दशमः ॥

अथ ऋतुचर्य्या ।

द्वासप्ततिसहस्राणि नाड़ीनां हि भवन्ति च ।
वाजिनामिह सर्व्वेषां वपुरक्तं व्यवस्थितम् ॥
तासां निर्म्मोचनार्थाय द्वाराण्यष्टौ वदाम्यहम् ।
वैर्याति कुत्सितं रक्तं सर्व्वदेहसमुद्भवम् ॥
कण्ठे वक्षसि तालौ च नासयोश्च मुखे तथा ।
अक्ष्णयोरथ पादेषु पादयोरुभयोरपि ॥
कालं बलञ्च विज्ञाय वाजिनां भिषगुत्तमः ।
शिरामोक्षं प्रकुर्व्वीत स्थानेष्वेतेषु पण्डितः ॥
अन्ये सप्तदश प्राहुः शिराद्वाराणि वाजिनः ।
विकारयुक्तं यद्रक्तं सुस्वल्पमपि वर्ज्जयेत् ॥
एवं शरदि यः सम्यक् पुष्टिं नयति वाजिनाम् ।

तत्र यद्वाञ्छितं किञ्चिद्धयानाय तत्र सिध्यति ।
ततो हेमन्तमासाद्य निवाते निरुपद्रवम् ।
मासोत्थं यवसन्दानं पानीयञ्च यथेच्छया ॥
घृतं वा यदि वा तैलं पाने दद्याद्धितञ्च यत् ।
वाहयेच्च शनैर्नित्यं सर्व्वदोषप्रशान्तये ॥
तत्र शिशिरमासाद्य दद्यात्तैलं हि वाजिनाम् ।
पलाष्टकप्रमाणेन यावद्दिनत्रिसप्तकम् ॥
यवोत्थं यवसन्दद्यादकविप्रत्यहानि च ।
यवाभावेऽथ चणकान् दद्यादार्द्रतरान् सदा ॥
तदभावे मसूरांश्च शुष्कांस्तैलसंयुतान् ।
यवश्चापि तद्देयं नीरोगो जायते हयः ॥
कौषधानाञ्च सर्व्वासां क्वाथानां नस्यकर्म्मणाम् ।
तैलानाञ्च घृतानाञ्च यवस्य यवसं परम् ॥
पर्व्वतानां यथा मेरुरायुधानाञ्च वज्रकम् ।
तथा सर्व्वोपचाराणां सर्व्वे श्रेष्ठतमा यवाः ॥
देवतानां यथा विष्णुर्ब्रह्मा वेदविदां वरः ।
नदीनाञ्च यथा गङ्गा तथा श्रेष्ठा यवा हये ॥
यथोदितः सहस्रांशुर्निःशेषं तिमिरं जयेत् ।
तथा शरीरजान् दोषान् यवाः सर्व्वे हरन्ति च ॥
उपचारक्रिया सर्व्वा यवसंजनिता हये ।
कृता सुय्यवभोज्येन यत्नेनास्य कृता नरैः ॥
दद्याद्दत्ता यवा भोज्ये शिशिरे समुपस्थिते ।
जायतापि कृता सर्व्वा यवसंजनिता हये ॥
कृता सुय्यवभोज्येन यत्नेनास्य कृता नरैः ।
नीरोगास्तुरगाः सर्व्वे शालिहोत्रमतं यथा ॥
यवसंजनिता चाथ क्रिया प्रोक्ता तुरङ्गमे ।
यवैस्तास्ते विजानीयाद्धयभोज्यविवर्ज्जिताः ॥
एवं रक्तविशुद्धात्मा कृत्वा यत्नेन वाजिनाम् ।
दद्याच्छोधनसंयुक्तां सतैलाञ्च हरीतकीम् ॥
दिनं त्रिसप्तकं यावत् पलपञ्चप्रमाणतः ।
ततः शुद्धिमवाप्नोति निःशेषाद्व्याधिरोगमान् ॥
ततो मन्दाशनाहारं संप्राप्य सुमनोहरम् ।
परां पुष्टिमवाप्नोति नीरोगश्च प्रजायते ॥
न शाद्वलं वाहयेदश्वं प्रावृट्काले कथञ्चन ।
यदस्तद्वाश्विनस्य वाहनं दशमासिकम् ॥
कूपोदकं सदा शस्तं पानाय जलदागमे ।
अथवा कटुतैलेन निर्व्वासस्यानबन्धनम् ॥
दद्याद्धान्तरितं दद्याद्भक्षणञ्च विचक्षणः ।
पलद्वयप्रमाणेन सुवर्च्चलापरिशुद्धये ॥
सुखरोगमवाप्नोति चारम्भादपिवर्ज्जितः ।
दद्याभोभिस्तु विशाङ्गस्तथा युज्यते हयः ॥
चतुर्द्रोणकलान् ग्रासान् प्राश्नीत शतशः परान् ।
मर्द्दकप्रधानेन बलहीनश्च जायते ।
तस्मात् सर्व्वप्रयत्नेन प्रावृट्काल उपस्थिते ।
अनेन विधिना प्राज्ञो वाजिनः परिपोषयेत् ॥
ततः शरन्मासाद्य बहुशस्यसमन्वितम् ।
शस्यं चारोग्यं समपञ्चाष्टपरिसंख्यया ॥
दुग्धं वा केवलं रात्रौ क्वथितं शमप्रयस्यति ।
तथान्यदपि यत्किञ्चिन्मधुरं सम्प्रजायते ॥
पानाय पारमं तोयं यवसं सुमनोहरम् ।
सैन्धवकमुद्गाश्च एतं शालीन संयुतम् ॥
वाहनं च प्रयत्नेन सुमन्दमपि वर्द्धयेत् ।
परीक्षाणां यथा हेम स्वच्छस्य च प्रतिक्रिया ।
हयजीवस्य तद्वच्च परीक्षा यवभक्षणे ॥
यथा मारुतिकः पारं गत्वाब्धेः स्वस्थतां व्रजेत् ।
तद्वत् यवाशनोत्तीर्णः सुहृष्टो हयोत्तमः ॥
अल्पेनापि हि छिद्रेण यथा नश्यति नौर्ज्जले ।
स्वल्पेनापि हि शोधेन यवदोषास्तथैव च ॥
एवं ज्ञात्वा विधानेन यवा देयाः प्रयत्नतः ।
प्रायशो वा विशेषेण शिशिरे समुपस्थिते ॥
शुष्का वापि यवा देयाः सर्व्वकालं च वाजिनाम् ।
प्राणदास्ते ततो ज्ञेयाः सर्व्वव्याधिविनाशनाः ॥
यश्चाश्नाति यवानश्वः शुष्कांश्च स्वेच्छया सदा ।
न तस्य जायते रोगः कदाचिच्च यवाशभाक् ॥
न च शूलं न च श्वासो न च शोषो न च क्रमः ।
न च रक्तप्रकोपश्च न च वातादिधातवः ॥
योग्योऽशनाय वाहानां प्रधानो यव इष्यते ।
यवाभावेऽथ चणका धान्यमन्यतमं परम् ॥
यवाभावेऽथवा दद्यान्मुकुष्टांस्तैलसंयुतान् ।
भोजने तुरगेन्द्राणां परां पुष्टिमभीप्सताम् ॥
सुकुष्ठभोजनाद्वाजी पुष्टिं गच्छत्यलौकिकीम् ।
उत्साहं परमं धत्ते न च रोगैर्विमुच्यते ॥
चणकाश्च मुकुष्ठानां मुद्गा देया मनीषिभिः ।
सतैलास्तेऽपि कुर्व्वन्ति पुष्टिं सत्त्वविवर्द्धिनीम् ॥
एते पुष्टिगुणाः प्रोक्ताश्चणकाहारजा हये ।
नान्यस्तस्मादभावेन सर्व्वेषां तान् विनिर्द्दिशेत् ॥
नान्यद्धि प्रशंसन्ति पचनं वाजिनां बुधाः ।
भक्षणाय यवस्तस्य दानोल्लङ्घनमुत्तमम् ॥
यवाभावे प्रदातव्यं घृतं वा यदि वा पयः ।
शस्यं वा मांसमेवाथ पुष्ट्यर्थं वाजिनां सदा ॥
यस्त्वश्वः शस्यमश्नाति सदा लवणमिश्रितम् ।
किं तस्य शस्यदानेन यथाभृतेन भूपते ॥
शस्याभावेऽथ यवसं शुष्कं वा यस्य वाजिनः ।
स्वाधिष्ठमरण्ये च स्वेच्छया स्वविभुक्तिका ॥
ते चापि वाजिनो ज्ञेया यथा शस्यचरास्तथा ।
तथा सर्व्वप्रयत्नेन तुरगान् चारयेद्वने ॥
आरोग्यार्थं सुपुष्ट्यर्थमुत्साहार्थं विशेषतः ।
वित्तक्षयस्य रक्षार्थं वैद्येन प्रयत्नतः ॥
वसन्तसमये प्राप्ते वाहयेन्न सततं हयम् ।
सनिम्बं लवणं दद्यात्ताभ्यां तैलं विशेषतः ॥
सर्व्वस्मिन् समये भोज्यं तैलं वा यदि वा घृतम् ।
न दोषकारणं प्रोक्तं सचारं लवणं ततः ॥
वसन्तसमये योऽश्वः स्थाने तिष्ठति बन्धने ।
तस्योत्साहः प्रणश्येत बालस्य जायते वपुः ॥
ततो मन्दाग्निनाविष्टो रोगाभावे प्रजायते ।
तस्मात् सर्व्वप्रयत्नेन वसन्ते वाहयेद्धयम् ॥
ग्रीष्मकाले च संप्राप्ते दूर्व्वाभोज्यं प्रशस्यते ।
वाजिनामिह सर्व्वेषां सर्व्वतापोपशान्तये ॥
घृतपानं विशेषेण रुक्षायाश्च निबन्धनम् ।
तदभावे च गात्रेषु चार्धं वा घृतसंयुतम् ॥
दूर्व्वाभावे प्रदातव्यं तुरगाय घृतान्वितम् ।
लघुकाशस्यमध्याय सर्व्वदोषोपशान्तये ॥
एवं ग्रीष्मसमये सम्यगुपचारं करोति यः ।
वयस्तु यदो नित्यं तस्य वर्द्धन्ति वाजिनः ॥
नीरोगाः पुष्टिसंयुक्ताः प्रकृष्टोत्साहसंयुताः ।
तर्पिता भूमिपैरश्वा भूमिमार्गक्रियाक्षमाः ॥
इति श्रीनकुलकृतेऽश्वचिकित्सिते ऋतुचर्य्याध्याय एकादशः ॥

अथ नस्यं ।

कासश्वासशमो नस्यो वातपित्तकफोद्भवः ।
नस्यं सनाभयेत्तस्मात्तु नस्यं योजयेद्धये ॥
पिप्पली सैन्धवं सारं नागरञ्च गुडान्वितम् ।
हस्तिकाक्षारमध्यास्य गर्ज्जनी श्लेष्मनाशनम् ॥
चूलिकालवणं नस्ये सदा रोगविनाशनम् ।
सिता चन्दनतोयानि मातुलुङ्गानि वाजिनाम् ।
नस्यकर्म्मणि शस्तानि नाडीवातप्रशान्तये ।
मद्रकैरार्द्रकं सार्द्धं वचाक्षारविमिश्रितम् ॥
नस्ये दत्तं वातशान्त्यै हयरोगविनाशनम् ।
शर्करा माक्षिकं सैरं पटोलं पललयुतम् ॥
नस्ये प्रदद्यात् सर्व्वेषां जायते रोगशान्तये ।
वचा चोशीरकं कुष्ठं शुण्ठी च कासमर्द्दिका ।
युक्तं शीतोदके स्तोके तेषां नस्येऽप्रयोजयेत् ।
गुडूची कौमुदी ताली मिश्रिता कूपवारिणा ।
नस्ये दत्ता वराश्वानां शिशिरे सुखदा सदा ।
अपामार्गं महानस्यं सर्व्वरोगविनाशनम् ।
कवलं कटुतैलं वा गोमूत्रं पाचितञ्च यत् ।
मैथुनादिक्षतक्षीणानां शीतोबलकरं विदुः ।
कण्ठरोगे तथा नस्यं गोमूत्रलवणान्वितम् ।
महद्गुणकरं प्रोक्तं सर्व्वदोषनिवारणम् ।
अपामार्गस्य मूलेन नस्ये मूत्रञ्च छागलम् ।
मुखरोगविनाशाय नस्यं मनस्वरसोद्भवम् ।
*लशुनं पिप्पलीमूलं शल्की नागकेशरम् ।*
दत्तं नस्येन रोगघ्नं कटुतैलेन वाजिनाम् ।
नस्यं पर्य्युषितैस्तोये प्रातरेव तु कवले ।
च्छ्वासाश्च नराणाञ्च चाक्षुष्यं बलवर्द्धनम् ।
पिप्पलीमिश्रतोयेन शशिताशलिलेन च ।
नस्यं यच्छति सर्व्वेषां सर्पिषा यच्छते बलम् ।
नस्यं स्निग्धं तथा रूक्षं तिक्तञ्च मधुरं तथा ।
चतुर्द्धा वाजिशास्त्रज्ञैर्वैद्यानां परिकीर्त्तितम् ।
देयं वाताधिके स्निग्धं रूक्षं तिक्तं कफाधिके ।
मधुरं चैव पित्तार्त्ते तुरङ्गे समयोचितम् ।
द्विपञ्चाशत्प्रमाणं वा श्रेष्ठं नस्यमुच्यते ।
पादोनं मध्यमं तत्र षड्विंशत्या तथाधमम् ।
नस्याभ्यां वाजिनो रक्तं सन्तं पुष्टं प्रजायते ।
नस्यदानात् क्षतं तस्य विनाशमुपगच्छति ।
दाडिमं पुष्करं शीकं श्वेतदूर्व्वाङ्कुरास्तथा ।
शीतोदकेन संयुक्तं रक्तं दुष्टं न जायते ।
धातकी गोक्षुरं रोध्रं कुसुम्भं सिन्धुवारकम् ।
शीतोदकेन संयुक्तं नस्यं रक्तविनाशनम् ।
धातकी गन्धकी चैव गोमूत्रं लवणं तथा ।
नस्ये दत्तं कफं हन्ति तमः सूर्य्योदये यथा ।
शुण्ठी घृतञ्च दुग्धञ्च रसधारं तथैव च ।
वातरोगविनाशाय नस्यमेतत् प्रयोजयेत् ।
माणिकं शर्कराशुक्लं चन्दनं वैमराधि च ।
नस्योऽयं वारिणा सह पित्तनाशकरः परः ।
गुडूची शुण्ठी मुस्ता च तगरं सितशर्करा ।

सन्निपाते सपित्तेऽयं नस्यः स्याज्जीवरक्षकः ॥
अभया पुत्रिणी धात्री एला लाक्षा शतावरी ।
सन्निपातेऽनिलाधिक्ये नस्योऽयं क्षेमकारकः ॥
मरिचं पिप्पलीमूलं वचा भार्ङ्गिकाभया ।
सन्निपाते कफाधिक्ये नस्यं सर्पिः सुखप्रदम् ॥”

इति श्रीनकुलकृतेऽश्वचिकित्सिते नस्याधिकाराध्यायो द्वादशः ॥

अथ पिण्डः ।

“कटुका च जयन्ती च भ्रामरी सुरसा घनाः ।
पञ्चाम्लतमयः पिण्डो वाजिनामयमिष्टकृत ॥
एला शतघ्नी सुरसा काकजङ्घा शतावरी ।
माक्षिकं ससितं पिण्डः पित्तयुक्ते हि वाजिनि ॥
माक्षिकं सैन्धवं मुस्ता गोमूत्रञ्च हरीतकी ।
समभागेन पिण्डोऽयमुक्तो वह्निप्रदीपकः ॥
कंकोलं केतकी द्राक्षा शर्करा मधुयष्टिका ।
दत्तो घृतयुतः पिण्डः पुष्टिं नयति वाजिनः ।
मत्स्यमांसेन संयुक्तं माषचूर्णं घनश्रुतम् ।
बलहीनस्य वाहस्य पिण्डोऽयं बलवर्द्धनः ॥
यला मद्यं दधि क्षौद्रं भक्षयंस्तुरगो भवेत् ।
अनिरुद्धोऽपि सूक्ष्मोऽपि यथा षट्सप्तवार्षिकः ॥
मेथिका धातकी काली सारणी बीजपूरकः ।
पिण्डो दत्तो वराश्वानां तेजोवृद्धिकरः स्मृतः ॥
कटुका मद्यसंमिश्रा धात्री लोध्रगुडान्विता ।
दत्ता पिण्डविधानेन वाजिनां सुखवृद्धिदा ॥
त्रिफला कटुका मुस्ता विडङ्गानि च चित्रकम् ।
सदालस्यसमेतानां वाजिनां पिण्ड आर्त्तिहृत् ॥
वचा विदलिताः स्निग्धाः सघृताः क्षारभाविताः ।
पिण्डैर्दत्ताः प्रकुर्व्वन्ति वाजिनां व्याधिनाशनम् ॥
सैन्धवं नागरं श्यामा गुडूची सितसर्षपाः ।
अम्लवेतससम्भानां पिण्डोऽयं शूलनाशनः ॥
पिप्पली पिप्पलीमूलं कटुका सहदेविका ।
दूर्व्वापल्लवसंमिश्रः पिण्डोऽयं क्लीवनाशकः ॥
केशरं श्रीफलं तालं माक्षिकं गिरिकर्णिका ।
पिण्डोऽयं शयने शस्तो वाजिनां सुगतिप्रदः ॥
वचा लोध्रं सकर्पूरं गुहा श्यामा गुडं मधु ।
समांशकेन पिण्डोऽयं करोति लघुतां हये ॥
मद्यं मरिचसंयुक्तं लशुनं नागकेशरम् ।
द्विगुणं मेषमांसञ्च पिण्डो दत्तो जयेच्छ्रमम् ॥
जम्बीरं फलिनीपत्रं त्वचा किञ्जल्कमेव च ।
जातशोणितवाहानां पिण्डोऽयं रक्तनाशनः ॥
तमालं पुष्करं लोध्रमपामार्गं सतिन्दुकम् ।
पयसा पिण्डमेतद्धि वातकोपप्रणाशनम् ॥
आरनालं प्रविष्टा च पथ्यां नेपालिकाफलम् ।
पिण्डे दत्ते हये दध्ना निहन्त्याशु विजृम्भितम् ॥
मुस्तपूगं वचामिश्रं तथा सर्व्वरसान्वितम् ।
पिण्डे दत्ते निहन्त्याशु क्रमिसंघं व्रणोद्भवम् ॥
स्नुहीक्षीरं सकर्पूरं कूपोदकविभावितम् ।
पिण्डोऽयं हन्ति मध्यस्थान् रोगान् सर्व्वान् क्रमिव्रणान् ॥
सिता दुग्धं सकर्पूरमेलया पत्रसंयुतम् ।
क्रमिदाहार्त्तियुक्तानां पिण्डोऽयं वाजिनां स्मृतः ॥
श्रीघ्रासद्यप्रतप्तानामारनालं परिश्रुतम् ।
सक्रदिच्छन्ति पिण्डेन वाजिनां सुखकारकम् ॥
वृष्टिवातार्द्दितानाञ्च वाजिनां पुष्टिकृन्मतः ।
पिण्डः कृतः सतैलेन लशुनेन यवेन च ॥
महाघृतं सकर्पूरं शर्करा दुग्धमेव च ।
कफनाशकरः प्रोक्तः पिण्डोऽयं सुखदः स्मृतः ॥
रोचना च वरी धात्री तथा स्याद्बीजपूरकः ।
गुल्मं प्रशमयन्त्याशु वाजिनां हृदयोद्भवम् ॥
सहदेवी वचा कुष्ठं वरुणा चेन्द्रवारुणी ।
अतिश्वासं हरन्त्येते वाजिनां मधुना सह ॥
उदुम्बरफलं मांसं शौकरं माहिषं दधि ।
हयस्य चातिवृद्धस्य करोति परमं सुखम् ॥
विभीतकं प्रियङ्गुश्च सर्ज्जिका लवणं तथा ।
कासशोषोपशमनः पिण्डः सर्पिः सुखप्रदः ॥
तक्रं कर्पूरचूर्णञ्च शिवं सौवर्च्चलान्वितम् ।
पिण्डोऽयं वस्तिसंरोधे वाजिनः संप्रकीर्त्तितः ॥
सौवर्च्चलं हरिद्रा च पिप्पली चेन्द्रवारुणी ।
मूत्रकृच्छ्रे परीक्षन्ति पिण्डोऽयं तुरगस्य हि ॥
पिण्डीरसक्तवः क्षौद्रं भल्लातकफलं वृषम् ।
रक्तमूत्रे तु पिण्डोऽयं वाजिनां रक्तनाशनः ॥
अभया यष्टिका श्यामा देवदारु सगन्धकम् ।
पुरीषे रक्तसंमिश्रे सदा शंसति वाजिनः ॥
पटोलं धातकी मुस्ता यष्टिका गिरिकर्णिका ।
रक्ताधिके कृतः पिण्डः करोति रुधिरक्षयम् ॥
हरिद्राद्वयसंयुक्तं गन्धकं कटुतैलकम् ।
पिण्डकं स्रुतियुक्तानां सदाश्वानां प्रशस्यते ॥
अतसीपत्रकं निम्बं न्यग्रोधकलिकान्वितम् ।
अतीसारे सुशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
व्रणैः क्रमिभिरत्यर्थं सदा वाजी प्रपीड्यते ।
तदा पिण्डः प्रदातव्यः स्थूलैरण्डदलैरलम् ॥
कर्पूरशर्करालोध्रं माक्षिकं त्रिफलान्वितम् ।
तुरङ्गिण्याः प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
पत्रकं सिन्धुवारञ्च भ्रामरं चक्रकिंशुकम् ।
मांसवृद्धौ प्रशंसन्ति पिण्डोऽयं वाजिनः शुभः ॥
सैन्धवं चूलिकाक्षारं विडङ्गानि मधूनि च ।
शस्त्रपीड़ाभिभूतस्य पिण्डोऽश्वस्य प्रशस्यते ॥”

इति श्रीनकुलकृतेऽश्वचिकित्सिते पिण्डाध्यायस्त्रयोदशः ॥

अथ घृतविधानम् ।

“शिलाजतु विशाला च पद्मकं नागकेशरम् ।
लाक्षा पद्मकमूलञ्च निम्बद्वयसमन्वितम् ॥
घृतं माक्षिकसंयुक्तं सप्तविंशतिकं विदुः ।
अष्टांशं तु समादाय सुरामांसघृतस्य च ॥
पलमात्राणि सर्व्वाणि पूर्व्वद्रव्याणि निःक्षिपेत् ।
तेषां दानेन तत्सर्पिर्जायते सर्व्ववाजिनाम् ॥
बलपुष्टिकरं नित्यं सर्व्ववातविनाशनम् ।
सर्व्वरोगप्रशमनं कायाग्नेश्च प्रदीपनम् ॥
ओजस्करं यथानाशं श्लीहशोषप्रणाशनम् ।
धातकी केशरं कुष्ठं कुसुम्भं कुङ्कुमं नलम् ॥
दाड़िमं तिललोध्रञ्च पलमात्राणि निःक्षिपेत् ।
घृतञ्च पाचयेत् मानादभिमातान्वितो हयः ॥
जायते सर्व्वशुद्धाङ्गो महाप्राणेन संशयः ।
आरनालं वचा कुष्ठ पिङ्गला चित्रकं घृतम् ॥
एतैः पक्वं घृतं सम्यक् पित्तव्याधिविनाशनम् ।
हरिद्राद्वयसंयुक्तं गन्धकं तु मनःशिला ॥
क्वाथयेन्नवनीतेन त्रिगुणेन घृतेन च ।
अभ्यङ्गेनाथ पानेन सप्तरात्रेण वाजिनः ॥
कण्डूतिर्निःक्षयं याति तथोदरभवा रुजः ।
माक्षिकं निम्बपत्राणि नखं गुग्गुल एव च ॥
भृङ्गराजो विशाला च पाटा चैव पुनर्नवा ।
विल्वमारुष्ककं लोध्रं सैन्धवं तगरं तथा ॥”
एतैः पक्वा घृतं वाजी संप्राप्यार्त्तैर्विमुच्यते ॥

इति श्रीनकुलकृतेऽश्वचिकित्सिते घृताध्यायश्चतुर्द्दशः ॥

अथ क्वाथः ।

“पूर्व्वाणि समभागानि क्वाथयेत् कूपवारिणा ।
ततोऽष्टांशं समादाय तोयस्य क्वथितस्य च ॥
एतत् सिद्धार्थकं नाम गुल्मघ्नं सर्व्ववाजिनाम् ।
कायाग्निं वर्द्धयत्याशु नीरोगत्वं प्रयच्छति ॥
मुस्ता मधुकपत्राणि केशरं लवणं रुहा ।
शताह्वा शाल्मली धात्री त्रपुणं फलिनी तथा ॥
क्वाथयित्वा जलं कौपं दत्तैस्तुल्यैर्विचक्षणः ।
त्रिभागमेवमादाय ततो दद्याद्धयस्य च ॥
प्रकरोति सदा नाशं पित्तस्यागन्तुकस्य च ।
एकविंशद्दिनं यावत्कालिहोत्रमतं यथा ॥
शुण्ठी हरीतकी पाटा ब्राह्मी मुस्ता शिफालिका ।
हरिद्राद्वयसंयुक्ता हरितालं मनःशिला ॥
सिद्धस्त्रिभागशेषोऽयं क्वाथो हन्यात्त्रिरात्रिकम् ।
सन्निपातमशेषेण पलिकः पलमात्रकः ॥
मधुकं केशरं पत्रं भल्लातकविभीतकम् ।
शरपुष्पं रुहा सारं समभागेन मिश्रितम् ॥
कासार्त्तस्य समुद्दिष्टः क्वाथोऽयं त्रिफलात्मकः ।
उत्साहवर्द्धकः सद्यस्तथा कायाग्निदीपकः ॥
कुमारी शाल्मली पाटा मञ्जिष्ठा चेन्द्रवारुणी ।
काकोली समभागेन क्वाथयेत् समभागतः ॥
पलद्वयप्रमाणेन ततः पीतेन वाजिना ।
मोहयेच्छूलवं दोषं मूत्रदोषं च तत्क्षणात् ॥
यवानी माक्षिकं कासं सौवर्च्चलयुताभया ।
क्वाथयेदष्टमांशेन तत्पानाज्जायते हयः ॥
प्रदीप्ताग्निस्तु तेजस्वी सर्व्वरोगाद्विमुच्यते ।
स शीघ्रमार्गगामी च स्निग्धो रोगविवर्ज्जितः ॥
सेफालिका रुहानीवे वेणुका सिन्धुवारिका ।
एतैः क्वाथः कृतः सम्यक् क्रमिनाशकरः परः ॥
मातुलुङ्गस्य वीजानि चन्दनं सितसर्षपाः ।
उशीरं पुष्करं ब्राह्मी लक्ष्मणा च पुनर्नवा ॥
क्वाथोऽयं शुण्ठिचूर्णेन धावितक्लेशनाशनः ।
प्रकरोति तुरङ्गाणां सर्व्वदैव सुखं तथा ॥”

इति श्रीनकुलकृतेऽश्वचिकित्सिते क्वाथाध्यायः पञ्चदशः ॥

अथ विषम् ।

“वारुणी माक्षिकी गौरी श्रीतालीवीजपूरकम् ।
क्रमिक्लेदविनाशाय क्वाथो नित्यं रुजाहरः ॥
अश्वगन्धा घृतं क्षौद्रं विषदग्धस्य वाजिनः ।
विषनाशं करोत्येव सर्व्वगात्रेषु तत्क्षणात् ॥
सामान्येन प्रदिष्टोऽयमगदो विषनाशनः ।

पृथक् पृथग्विभागेन कथयेत् साम्प्रतं परम् ।
त्रिविधं कीर्त्तितं चैव कृत्रिमञ्च ततः परम् ।
त्रिविधं कीर्त्तितं प्राज्ञैर्विषशास्त्रविचक्षणैः ॥
स्थावरं कन्दजं प्रोक्तं जङ्गमं दंष्ट्रसंस्थितम् ।
कृत्रिमं योगजं प्रोक्तं त्रिविधं विषमुच्यते ॥
यत्र तिष्ठ भवन्ति कदाचित्तुरगोत्तमाः ।
तत्र कार्य्यं विधानज्ञैरगदस्य प्रयोजनम् ॥
केशरं पद्मनालञ्च सौपर्णी मदनोत्पलम् ।
तक्रमिश्रं हये दत्तं सर्व्वथा विषनाशनम् ॥
सौपर्णी सिन्धुवारञ्च नागपुष्पी जटा तथा ।
त्रिफलां प्राज्यसमिश्रं दुग्धे स्यादगदो वरः ॥
अश्वगन्धा वचा एला घृतमिश्रा प्रयोजिता ।
विषनाशं भवत्याशु जङ्गमं हयगात्रतः ॥
भल्लं चन्दनपाषाणं माक्षिकसम्परिप्लुतम् ।
जङ्गमस्य विषस्याशु प्रकरोति च संक्षयम् ॥
तक्रं कैथरसयुक्तं विषं सद्यो विनाशकम् ।
हयस्य जङ्गमं नाश्य विषमयति तत्क्षणात् ॥
सौपर्णी विषकङ्कोली पिष्टा मद्येन भाविता ।
जङ्गमं नाशनं क्षिप्रं विषं नयति तत्क्षणात् ॥
एला कङ्कोलिकामूलं सौपर्णीघृतमिश्रितम् ।
विषनाशं करोत्याशु नस्यदानेन वाजिनाम् ॥
कौसुम्भं कर्पूरं लाक्षा माक्षिका नाकुली तथा ।
कृत्रिमस्य विषस्याशु प्रकरोति च संक्षयम् ॥
चम्पकं मालतीमूलमुत्पलकरसं तथा ।
अश्वानां नाशयत्याशु विषं जङ्गमसाश्रितम् ॥'

इति श्रीनकुलकृतेऽश्वचिकित्सिते विषयोगाध्यायः षोडशः ॥

अथ अश्वशालाविधिः ।

नृपवेश्मवामभागे शुभदिने तु कारयेद्धयागारम् ।
पृथ्व्याञ्च प्रयत्नादूर्द्ध्वञ्च प्रतिष्ठाप्य ॥
सुशुभे भूमिविभागे पूर्व्वापरजलप्रवविधानात् ।
तस्मिन् शालां दिव्यां दृढघनसमुच्छ्रितां दृढां कुर्य्यात् ॥
खादनकोष्ठकमस्मिन् हस्ताद्वितयं समुच्छ्रितं कुर्य्यात् ।
संस्थाप्य हयभगावौ सप्राङ् वाजिशालायाम् ॥
अतः ऊर्द्ध्वन्तु तुरगान् प्रवेशयेद्वाजिनो यथा योग्यम् ।
कुम्भकैरकभेदैरनुकूले स्थानपालैश्च ॥
कृतमङ्गलस्वस्त्ययना बध्यास्तेऽत्र चोत्तराभिमुखाः ।
नात्यायता न शिथिला स्थाने वा दक्षिणाभिमुखम् ॥
वेद्यानां तुरगाय समीपं यत्र कारयेत् पूर्व्वम् ।
कार्प्पासिकेन सूत्रेण माक्षिकाणां निवारणम् ॥
गन्धैर्माल्यैर्धूपैः स्थानानि विभूषयेदलङ्कारैः ।
सविशेषं सम्पीतौ कुल्यामपि पूरयेद्विद्वान् ॥
स्वच्छन्दं नातियवसं यथा चरन्ति वाजिनः ।
स्थाने चैव पृथक् प्राश्य प्रबद्धं रात्रियां न वै ॥
कोष्ठी कुष्ठी ज्वरी यक्ष्मी परस्परं दूषयति वारे ।
तिथिवारे कर्प्पांस खुराश्च प्रशमन्ति दोषान् ॥
अश्वस्याङ्गं प्रलिपेद्धरिद्रया वरिष्ठया मङ्गस्यान्न ।
सर्पविषान् दोषैर्विभूषयेदलङ्कारैः ॥"

इति श्रीनकुलकृतेऽश्वचिकित्सितेऽश्वशालाविधिरष्टमोऽध्यायः । नवमाध्यायस्तु नाधिगम्यते ।

अथ ग्रहनामलक्षणानि ।

"दृश्यन्ते यानि चिह्नानि ग्रहग्रस्तेषु वाजिनाम् ।
तानि सम्यक् प्रवक्ष्यामि ग्रहनामानि यानि तु ॥
लोहिताक्षो विरूपाक्षो हरिर्विलिस्तथैव च ।
चक्राङ्गश्चैव विख्यातः शङ्खाक्षी च परः स्मृतः ॥
सुस्थितश्च कौशिको वेतालश्च ग्रहस्तथा ।
ऊर्द्ध्वञ्च शाल्मलश्चैव ग्रहविधो वरुणग्रहः ।
इन्द्रपातश्च मल्लश्च तथा सूर्य्यग्रहोऽपरः ।
एते प्रोक्ता ग्रहाः सर्व्वे दारुणा मुनिसत्तमैः ॥
एभिर्ग्रस्ताः स्फुटं वाहा नैव जीवन्ति सर्व्वशः ।
चिह्नं तेषां प्रवक्ष्यामि यथा शास्त्रे व्यवस्थितम् ॥
कम्पते पूर्व्वकायस्तु निश्चलो यस्य पश्चिमः ।
पश्चाङ्गी सकम्पश्च रिङ्गते हरिपीडितः ॥
भवन्ति विन्दवो रक्ता अकस्माद्यस्य चक्षुषः ।
हरिणाख्यग्रहगृहीतोऽश्वो धामहेशो च जायते ॥
मस्तिष्कगुह्याश्च शुष्कपङ्कमलक्रियः ।
मीलिताक्षीलमाक्षस्ता स्वभावान्निद्रयैव च ॥
विरूपाक्षग्रहीते तु कम्पः स्वेदश्च जायते ।
उत्थितः सहसा यस्तु मूर्च्छां पतति भूतले ॥
स्कन्धाक्षो मुच्यते कण्ठे तथा वाले खुरेऽपि ।
बालग्रहगृहीतोऽसौ स्तब्धकर्णशिरोधरः ॥
अकस्माद्यस्य लोमानि शीर्यन्ते यश्च लङ्घति ।
मृगपक्षिसमपादस्य तस्य कार्य्यग्रहं वदेत् ॥
सहसा कुपितो वाजी स्वानि गात्राणि खादति ।
क्रोधतः सततञ्चैव शङ्खाक्षिग्रहपीडितः ॥
तिर्य्यङ्गो वेपमानश्च जानुभ्यां यश्च तिष्ठति ।
कौशिकग्रहसंदुष्टं तं विद्यात् कष्टजीवितम् ॥
हेषते सततं यस्तु पश्चादात्मानमीक्षते ।
सुस्थितग्रहाविष्टः स विज्ञेयो मनीषिभिः ॥
स्तम्भेन गुरुणा चैव वेपमानेन पीडितः ।
गात्रेण विद्याद्वाहं तु वेतालग्रहसेवितम् ॥
ग्रीवां चैव तथा जिह्वां परिवर्त्त्य मुहुर्मुहुः ।
जृम्भते पूर्व्वकायेन शीतोच्छ्वासी विमोचनः ॥
कोष्ठिकैस्ताडितः पृष्ठे कशया यष्टिनापि वा ।
स वै दीर्घस्वरं यस्तु दृष्ट्वैव परिवर्ज्जयेत् ॥
क्षामजिह्वामुखं यस्य नष्टदृष्टिस्मृतिर्भवेत् ।
ऊर्द्ध्वग्रहकृतं दोषं तस्य दीनस्य निर्द्दिशेत् ॥
साश्रुजिह्वं च नेत्रं च वृषणौ मेढ्रमेव च ।
श्यावं रूपञ्च यस्य स्याद् गात्रगौरवमेव च ॥
तस्य स्वेदपरीतस्य बुद्धिमान् वरुणग्रहे ।
कृतं दोषं महाघोरं स्कन्धाङ्गस्य विनिर्द्दिशेत् ॥
हेषते सततं यस्तु हृष्टरोमा तुरङ्गमः ।
स्कन्धाक्षो जृम्भतेऽथ सस्नापि सलिलग्रहः ॥
सुविस्फारितसर्व्वाङ्गः सलिले निश्चलस्थितः ।
हेषते विस्वरं वाजी वरुणग्रहपीडितः ॥
सुहृद्भावस्थितस्तोये जानुभ्यां योऽवगच्छति ।
मुखपाकश्च यस्यास्ते स विद्यादुदकग्रहम् ॥
उद्वर्त्तिताक्षः खिन्नश्च सदृष्टीतहदुश्च यः ।
कम्पमानश्च यो वाजी स इन्द्रग्रहपीडितः ।
स्तब्धग्रीवो न जानाति कथ्याधानं मुहुर्म्मना ।
अन्यग्रहगृहीतोऽश्वो वामपार्श्वेन निश्चलः ।
मूत्रविकूटी दलाद तत्र स्रवति चासृक् ।
इन्द्रस्थितग्रहीतोऽसौ नैव जीवति तादृक् ॥
कम्पते पूर्व्वकायेन स्वस्थपाताग्रजश्च यः ।
शिरो प्रसार्य्य गात्राणि शीताङ्गः सोमपीडितः ।
स्कन्धान् शूलकण्ठश्च कम्पमानश्च श्वासयुक् ।
पिशनाशाग्रहैश्च यत्नः सूर्य्यग्रहेण सः ॥
उदकं तत्समीपं वा प्राप्य यत्नाति दारुणं ।
तुरङ्गं सम्यग्दीनस्तु न बुधो वारुणग्रहः ।
ग्रहभूमिचिह्नाच्चैव ग्रह्मान्यवामतुरालये ।
लोहिताद्यान्यो दोषाद् ग्रहा यतन्ति वाजिनः ।
एवं विधैर्निदानैस्तु ग्रहदोषं विनिर्द्दिशेत् ।
वातपित्तकफानान्तु निदानैर्व्याधिसम्भवः ।
एकाकारेण रोगश्च म्रियते वा हयो यतः ।
तुरङ्गाणां तदा ज्ञेया उपसर्गाः सुदारुणाः ॥
ग्रहदोषेषु सर्व्वेषु उपसर्गेस्तथैव च ।
अपोलाप्य महाशान्तिं शान्त्यर्थञ्च प्रयोजयेत् ॥
अश्वरक्षाविधानाय कृत्वा सम्भाव्य मादकम् ।
जुहुयादग्निमसंयुक्तं शुचिः स्नात्वा सुपूजितः ।
शान्तिकं कारयेत् कर्म बलिपाणि प्रयोजयेत् ।
ग्रहदोषेषु सर्व्वेषु शान्तिकर्म्माणि कारयेत् ।
दर्भाहतपञ्जिलगुरुस्थानान् यतोऽपि ।
लोहयेज्जोलमैर्नामैर्वैकस्रोकाश्चनाभिः ॥
रात्रौ शालासमीपे तु बलिं दद्यात् चतुर्दिशम् ।
मनुष्यमांसैश्च पक्वान्नैः सुरायै पायसाग्निभिः ॥
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा ।
नीराजनविधिं कृत्वा नयेदश्वान् पृथक् पृथक् ॥"

इति श्रीमहासामन्तजयदत्तकृतेऽश्वशास्त्रे ग्रहदोषचिकित्सिते सप्तदशतमोऽध्यायः ॥)

**घोटिका**, स्त्री, (घोटते परिवर्त्तते कण्टाग्निगुणैरिति । घुट + ण्वुल् । ततष्टापि अत इत्वम् ।) हयभेदः । तत्पर्य्यायः । ककटी २ तुरङ्गी ३ चतुरङ्गा ४ । अस्या गुणाः । कटुत्वम् । उष्णत्वम् । मधुरत्वम् । वातश्लेष्मकण्डुकुष्ठाश्मर्य्यशोनाशित्वञ्च । इति राजनिर्घण्टः ॥

**घोणा**, स्त्री, (घोणते गृह्णाति वस्तुगन्धम् । घुण + अच् टाप् च । घोणतेऽनया इति करणे घञ् वा ।) नासा । (यथा महाभारते । १ । १५६ । ३२ ।
'दीर्घघोणं महोरस्कं विकटोद्बद्धपिण्डिकम् ॥"
"घोणायां द्वे ॥' इति सुश्रुते शारीरस्थाने मर्म्माध्याये ॥) अश्वनासिका । तत्पर्य्यायः । प्रोथः २ । इत्यमरः । २ । ८ । ४८ ॥ (यथा अश्ववैद्यके । २ । ७ ।
नासाच्छिद्रान्तिमध्ये तु घोणायाः समुदाहृतः ।
घोणायामश्वगौ गण्डौ चीरिके च ततः परम् ॥)

**घोणी** [न्] पुं (प्रशस्ता घोणा अस्त्यस्य इति । ब्रीह्यादिभ्यश्च । ५ । २ । ११६ । इति इनिः ।) शूकरः । इत्यमरः । २ । ५ । २ ॥

**घोण्टा** स्त्री (घुण्यते गृह्यते भक्ष्यायेति । घुण + बाहुलकात् टः ।) पूगविशेषः । श्रियाकुल

इति भाषा ॥ तत्पर्य्यायः । बदरः २ गोपघोंटा ३ शृगालकोलिः ४ कर्कन्धुः ५ । इति काचित् रत्नमाला ॥ एरिकोलिः ६ बदरीच्छदा ७ कर्कन्धुः । इति रत्नकोषः ॥ पूगद्रुमः । इति मेदिनी । टे । १४ ॥ ( यथा, उत्तरस्थाने विंशेऽध्याये वाभटेनोक्तम् ।

"घोंटाफलत्वग्लवणं सलाक्षं
बूकस्य पत्रं वनितापयश्च ।
सगुडकेदुग्धान्वित एष कल्को
वर्त्मांकतो हन्त्यचिरेण गाढ्रीम् ॥")

घोनसः, पुं, ( गोनसः + पृषोदरादित्वात् साधुः । ) गोनसः । तिलित्सर्पः । इति हेमचन्द्रः । ४ । ३६२ ॥ ( क्वचित् स्त्रीत्वमध्योरपि दृश्यते ॥ )

घोरं, क्ली, ( हन्यते वध्यतेऽनेनेति । हन + "हन्तेरच् घुर च ।" उणां । ५ । ६४ । इति अच् धातोर्घुरादेशश्च ।) विषम् । इति राजनिर्घण्टः ।

घोरः, पुं, ( घोरयति भयानकरसनिमित्तीभवतीति । घुर + अच् । यद्वा, हन्ति विनाशयति रुद्ररूपेण इति । हन वधे + "हन्तेरच् घुर च ।" उणां । ५ । ६४ । इति अच् धातोर्घुरादेशश्च । ) शिवः । भयानके त्रि । इति हेमचन्द्रः ॥ ( यथा, मनुः । १२ । ५४ । [ क्षयात् ।

"बहून् वर्षगणान् घोरान्नरकान् प्राप्य तत्संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमान् ॥")

घोरदर्शनः, पुं स्त्री, ( घोरं भयानकं दर्शनं यस्य । ) उलूकः । इति राजनिर्घण्टः ॥ भयानकरूपे त्रि ॥ ( यथा, रामायणे । १ । १ । ५५ ।

"मार्गमाणो वने सीतां राक्षसं सन्ददर्श ह ।
कबन्धं नाम रूपेण विकृतं घोरदर्शनम् ॥" )

घोरपुष्पं, क्ली, कांस्यम् । इति राजनिर्घण्टः ॥ घोरपुष्पमपि पाठः ॥

घोररासनः, पुं, ( घोरं भयानकं रासनं शब्दो यस्य । ) शृगालः । इति शब्दरत्नावली ॥

घोरवाशी, [न्] पुं, (घोरं यथा तथा वाशति शब्दं करोतीति । वाश शब्दे + णिनिः । ) शृगालः । इति हेमचन्द्रः । ४ । ३५६ ॥

घोरा, स्त्री, ( घोरति भयानकरसनिमित्तीभवतीति । घुर + अच् + टाप् च । ) रात्रिः । इति त्रिकाण्डशेषः ॥ देवदाली लता । इति राजनिर्घण्टः ॥ ( गङ्गा । यथा, काशीखण्डे ।२६।५५।

"घण्टारवप्रिया घोराघौघविध्वंसकारिणी ॥"

रविसंक्रान्तिविशेषः । इति ज्योतिषम् ॥ यथा, तिथितत्त्वे रविसंक्रान्तिप्रकरणे ।

"मन्दा मन्दाकिनी ध्वांक्षी घोरा चैव महोदरी ।
राक्षसीमिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप ! ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रे ध्वांक्षी विजानीयादुग्रे घोरा प्रकीर्त्तिता ॥")

भयानका ॥ ( यथा, कालीध्याने ।

"करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम् ॥")

घोलं, क्ली, (घुल्यते आलोड्यते यत् । घुट + घञ् । पृषोदरादित्वात् साधुः ।) ससरं निर्जलं मथितं दधि । ( यथा, सुश्रुते सूत्रस्थाने ४५ अध्याये ।

"यत्तु सस्नेहमजलं मथितं घोलमुच्यते ॥" )

तत्पर्य्यायः । दण्डाहतम् २ कालसेयम् ३ अरिष्टम् ४ गोरसः ५ घलम् ६ मलिनम् ७ केवलम् ८ भग्नसन्धिकम् ९ । तस्य भेदाः ।

"तक्रं ह्युदश्वित् मथितं पादाम्ब्वर्द्धाम्बुनिर्जलम् ।
ससारं चड्डवेत्तक्रं कट्वरं तत् प्रकीर्त्तितम् ॥"

इति शब्दचन्द्रिका ॥

अस्य विशेषाः तक्रशब्दे द्रष्टव्याः ॥

घोली, स्त्री, पत्रशाकविशेषः । तत्पर्य्यायः । घोलिका २ घोलिः ३ कलम्बुः ४ क्षुद्रकालिका ५ । क्षेत्रजाताया अस्या गुणाः । लवणत्वम् । रुचिकारित्वम् । अम्लत्वम् । वातकफनाशित्वञ्च ॥ आरामघोलिकागुणाः । अम्लत्वम् । रूक्षत्वम् । रुच्यत्वम् । वायुनाशित्वम् । पित्तश्लेष्मकारित्वञ्च । तुष्याया जीर्णज्वरनाशित्वम् । इति राजनिर्घण्टः ॥

घोषं, क्ली, (घोषति शब्दायते इति । घुष विशब्दने + अच् ।) कांस्यम् । इति राजनिर्घण्टः ॥

घोषः, पुं, ( घोषन्ति शब्दायन्ते गावो यस्मिन् । घुषिर् विशब्दने + "हलश्च ।" ३ । ३ । १२१ । इति घञ् । ) आभीरपल्ली । (यथा, रघुः ।१।४५।

"हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥")

घोषति शब्दायते इति । घुष + कर्त्तरि अच् । ) गोपालः । ( घुष + भावे घञ् । ) ध्वनिः । ( यथा, मनुः । ७ । २२५ ।

"तत्र भुक्त्वा पुनः किञ्चित् तूर्य्यघोषैः प्रहर्षितः ।
संविशेत्तु यथाकालमुत्तिष्ठेच्च गतक्लमः ॥")

घोषकलता । कांस्यम् । मेघशब्दः । इति मेदिनी । षे । ११ ॥ मशकः । इति त्रिकाण्डशेषः ॥ ( वर्णोच्चारणबाह्यप्रयत्नविशेषः । यदुक्तं शिक्षायाम् । २० ।

"संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् ।
घोषा वा संवृताः सर्व्वे अघोषा विवृताः स्मृताः ॥")

कायस्थादीनां पद्धतिविशेषः । (यथा, कुलदीपिकायाम् ।

"वसुवंशे च मुख्यौ द्वौ नाम्ना लक्षणपूषणौ ।
घोषेषु च समाख्यातश्चतुर्भुजमहाकृती ॥")

घोषकः, पुं, (घोष एव । घोष + संज्ञायां कन् ।) घोषालता । तत्पर्य्यायः । धामार्गवः २ । इत्यमरः । २ । ४ । ११७ । घोषकाकृतिः ३ आदारानी ४ देवदानी ५ तुरङ्गकः ६ घोषः ७ घोषालता ८ । इति शब्दरत्नावली ॥ कोषकालः ९ । इति जटाधरः ॥ महाराष्ट्रे दक्षिणघोषातकी ॥ * ॥ पीतघोषायाः पर्य्यायः । धामार्गवः १ पीतघोषा २ राजघोषातकी ३ कर्कोटकी ४ महाजाली ५ चुँड़ः ६ कोषफला ७ कोषातकी ८ । इति च जटाधरः ॥ * ॥ श्वेतघोषायाः पर्य्यायः । घोषातकी १ मृदङ्गी २ जालिनी ३ क्षतवेधकः ४ श्वेतपुष्पा ५ आक्षतिच्छत्रा ६ ज्योत्स्ना ७ इति रत्नमाला ॥

घोषकाकृतिः पुं, ( घोषकस्य घोषलतायाः आकृतिरिवाकृतिर्यस्य । ) घोषकः । इति रत्नमाला ॥

घोषणा, स्त्री, ( घुषिर् विशब्दने + "ण्यासश्रन्थो युच् ।" ३ । ३ । १०७ । इति युच् । ) उच्चैःशब्दः । लोकविज्ञापनायोच्चैःशब्दितम् । (यथा, कथासरित्सागरे । २४ । ५० ।

"गच्छ भ्रमय सततं च पुरे पटहघोषणाम् ॥")

तत्पर्य्यायः । उच्चैर्घुष्टम् २ । इत्यमरः ।१।६।१२॥ निघुष्टम् ३ बुष्टघोषणम् ४ । इति शब्दरत्नावली ॥

घोषयित्नुः, पुं, ( घोषयतीति । घुष + णिच् + बाहुलकात् इत्नुच् । ) ब्राह्मणः । कोकिलः । वन्दी । इति शब्दरत्नावली ॥

घोषवती, स्त्री, ( घोषो विद्यतेऽस्याः । घोष + मतुप् मस्य वः । स्त्रियां ङीप् । ) वीणा । इति हेमचन्द्रः ॥ ( यथा, कथासरित्सागरे ।११।३।

"स बभूव शनैः राजा सुरिम्यैकान्ततत्परः ।
सदा सिषेवे मृगयां वीणां घोषवतीञ्च ताम् ।
दत्तां वासुकिना पूर्व्वं गतं दिनमवादयत् ॥"

तथाच तत्रैव । १२ । ३२ ।

"आङ्के घोषवती तस्य कण्ठे गीतश्रुतिच्छटा ॥")

शब्दविशिष्टे त्रि ॥ ( यथा, महाभारते । १ । २५ । ११ ।

"त्वं वज्रमतुलं घोरं घोषवांस्त्वं बलाहकः ॥")

घोषा, स्त्री, ( घोष्यन्ते मधुकारी यया । घुष + णिच् + घञ् । ) मधुरिकौषधिः । शौरी इति भाषा । इति मेदिनी ॥ ( यथा, गारुडे १९ अध्याये ।

"घोषाफलं सैन्धवञ्च तक्षिप्राशैः पतेत्तथा ॥" )

कर्कटशृङ्गी । इति राजनिर्घण्टः ॥ ( गङ्गा । यथा, काशीखण्डे । २९ । ५५ ।

"घ्राणतुष्टिकरी घोषा घनानन्दा घनप्रिया ॥"

गायत्त्रीरूपा भगवती । यथा, देवीभागवते । १२ । ६ । ४४ ।

"हरिमन्यमयी घोषा घनन्यात्तदायिनी ॥" )

घोषातकी, स्त्री, श्वेतघोषा । इति रत्नमाला ॥ (पर्य्यायोऽस्या यथा, वैद्यकरत्नमालायाम् ।

"घोषातकी मृदङ्गी आक्षालिनी क्षतवेधनः ।
श्वेतपुष्पा क्षतिच्छत्रा ज्योत्स्नाकोषातकी कचित् ॥")

घ्रा, गन्धोपादाने । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-अनिट् । ) जिघ्रति पुष्पं लोकः । इति दुर्गादासः ॥

घ्राणं, क्ली, ( जिघ्रत्यनेनेति । घ्रा + करणे ल्युट् । यद्वा, घ्रा + क्तः "नुदविदोन्दत्राघ्रेति ।" ८ । २ । ५६ । इति निष्ठातस्य नो वा ।) नासिका । इत्यमरः । २ । ६ । ८९ ॥ ( यथा रघुः । १६ । ११ ।

"घ्राणकान्तमधुगन्धकर्षिणी:
पानभूमिरचना: प्रियासखः ॥" )

घ्रायमते घ्राणेन्द्रियग्राह्यगन्धत्वादि । ( घ्रा + भावे ल्युट् । आघ्राणम् । यथा, देवीभागवते । १ । १४ । २४ ।

"आलिलिङ्ग सङ्घ्राय मूर्द्ध्नि तस्य चकार ह ॥")

घ्राते त्रि । इति मेदिनी । णे । ११ ॥

## छन्दः

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| प्रमिताक्षरा | प्रमिताक्षरा सजससैः कथिता ।।ऽ,।ऽ।,।।ऽ ।।ऽ | अमृतस्य शीकरमिवोद्गिरती<br>रदमौक्तिकांशुलहरीच्छुरिता ।<br>प्रमिताक्षरा सुररिपोर्भणिति-<br>र्व्रजसुभ्रुवामभिजहार मनः ॥ |
| द्रुतविलम्बितम् | द्रुतविलम्बितमाह नभौ भरौ ।।।,ऽ।।,ऽ।।,ऽ।ऽ | तरणिजापुलिने नववल्लवी<br>परिषदा सह केलिकुतूहलात् ।<br>द्रुतविलम्बितचारुविहारिणं<br>हरिमहं हृदयेन सदा वहे ॥ |
| मन्दाकिनी | ननररघटिता तु मन्दाकिनी ।।।,।।। ऽ।ऽ,ऽ।ऽ | बलिदमनविधौ बभौ सङ्गता<br>पदजलरुहि यस्य मन्दाकिनी ।<br>सुरनिहितसिताम्बुजस्रग्निभा<br>हरतु जगदघं स पीताम्बरः ॥ |
| कुसुमविचित्रा | नयसहितौ न्यौ कुसुमविचित्रा ।।। ।ऽऽ ।।। ।ऽऽ | विपिनविहारे कुसुमविचित्रा<br>कुतुकितगोपीमहितचरित्रा ।<br>मुररिपुमूर्तिर्मुखरितवंशा<br>चिरमवताद्वस्तरलवयस्या ॥ |
| तामरसम् | इह वद तामरसं नजजा यः ।।।,।ऽ। ।ऽ।,।ऽऽ | स्फुटसुषमामकरन्दमनोज्ञं<br>व्रजललनानयनालिनिपीतम् ।<br>तव मुखतामरसं मुरशत्रो<br>हृदयतडागविकाशि ममास्तु ॥ |
| मालती<br>यमुनेति कापि । | भवति नजावथ मालती जरौ ।।। ।ऽ। ।ऽ।,ऽ।ऽ | इह कलयाच्युत केलिकानने<br>मधुरससौरभसारलोलुपः ।<br>कुसुमकृतस्मितचारुविभ्रमा<br>मलिरपि चुम्बति मालतीं मुहुः ॥ |
| मणिमाला<br>अस्याः षड्वर्णैर्यतिः । | त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः<br>ऽऽ। ।ऽऽ ऽऽ। ।ऽऽ | प्रह्वामरमौलौ रत्नोपलक्लृप्ते<br>जातप्रतिबिम्बा शोणा मणिमाला ।<br>गोविन्दपदाब्जे राजी नखराणा<br>मास्तां मम चित्ते ध्वान्तं प्रशमयन्ती ॥ |
| जलधरमाला<br>अस्याश्चतुर्भिरष्टाभिश्च यतिः । | मो भ स्मौ चेज्जलधरमालाब्ध्यष्टैः<br>ऽऽऽ ऽ।। ।।ऽ ऽऽऽ | या भक्तानां कलिदुरितोत्तप्तानां<br>तापच्छेदे जलधरमाला नव्या ।<br>भव्याकारा दिनकरपुत्रीकूले<br>केलीलोला हरितनुरव्यात् सा वः ॥ |
| पुटः | वसुयुगविरतिर्नौ म्यौ पुटोऽयम् ।।। ।।। ऽऽऽ ।ऽऽ | |
| प्रमुदितवदना<br>प्रभेति मल्लिनाथः । गौरीति<br>कौमुदीकारः । | प्रमुदितवदना भवेन्नौ च रौ ।।।,।।। ऽ।ऽ ऽ।ऽ | |
| प्रियंवदा | भुवि भवेन्नभजरैः प्रियंवदा ।।। ऽ।। ।ऽ। ऽ।ऽ | |
| ललिता | धीरैरभाणि ललिता तभौ जरौ ऽऽ। ऽ।। ।ऽ। ऽ।ऽ | |
| उज्ज्वला | ननभरसहिता गदितोज्ज्वला ।।। ।।। ऽ।। ऽ।ऽ | |
| नवमालिका | इह नवमालिका नजभयैः स्यात् ।।।,।ऽ।,ऽ।। ।ऽऽ | |
| ललना | पञ्चमुनि भमौ सात् सयुता ललना<br>ऽ।।,ऽऽऽ ।।ऽ ।।ऽ | |
| ललितम् | ललितमभिहितं नौ म्रौ नामतः ।।। ।।। ऽऽऽ ऽ।ऽ | |
| द्रुतपदम् | द्रुतपदं भवति नभनयाश्चेत् ।।। ऽ।। ।।। ।ऽऽ | |
| विद्याधारः | सर्वे मा यस्मिन् सोऽयं विद्याधारः स्यात्<br>ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ | |
| पञ्चचामरम् | लघुर्गुरुर्वदन्ति पञ्चचामरम् ।ऽ।ऽ।ऽ।ऽ।ऽ | |
| सारङ्गम् | सारङ्गमेतत् समकैस्तकारैः ऽऽ।,ऽऽ। ऽऽ। ऽऽ | |
| मौक्तिकदाम | समस्तजमीरय मौक्तिकदाम ।ऽ।,।ऽ। ।ऽ।,।ऽ।, | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| मोटकम् | मोटकनाम समस्तभमीरय ऽ।।.ऽ।।,ऽ।।,ऽ।। | |
| तरलनयनम् | वरिलघु तरलनयनमिह ।।।।।।।।।।।। | |
| त्रयोदशाक्षरा वृत्तिः। अतिजगती। | | |
| प्रहर्षिणी<br>त्रिभिर्दशभिश्च यतिः। | त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्<br>ऽऽऽ,।।।,।ऽ।,ऽ।ऽ,ऽ | गोपीनामधरसुधारसस्य पाने-<br>रुत्तुङ्गस्तनकलसोपगूहनैश्च ।<br>आश्चर्य्यैरपि रतिविभ्रमैर्मुरारेः<br>संसारे मतिरभवत् प्रहर्षिणीह ॥ |
| रुचिरा<br>चतुर्भिर्नवभिश्च यतिः। | जभौ सजौ गिति रुचिरा चतुर्ग्रहैः<br>।ऽ।,ऽ।।,।।ऽ,।ऽ।,ऽ | पुनातु वो हरिरतिरासविभ्रमी<br>परिभ्रमन् व्रजरुचिराङ्गनान्तरे ।<br>समीरणोल्लसितलताकरालगो<br>यथा मरुत्तरलतमालभूरुहः ॥ |
| मत्तमयूरः<br>चतुर्भिर्नवभिश्च यतिः। | वेदैरन्ध्रैर्म्तौ यसगा मत्तमयूरः<br>ऽऽऽ,ऽऽ।,।ऽऽ,।।ऽ,ऽ | लीलानृत्यन्मत्तमयूरध्वनिकान्तं<br>नृत्यन्नीपामोदिपयोदानिलरम्यम् ।<br>कामक्रीडालम्पटमना गोपवधूभिः<br>कंसध्वंसी निर्जनवृन्दावनमाप ॥ |
| चण्डी | नयुगलसयुगलगैरिति चण्डी ।।।,।।।,।।ऽ,।।ऽ,ऽ | जयति दितिजरिपुताण्डवलीला-<br>कुपितकवलकरकालियमौलौ ।<br>चरणकमलयुगचापलचण्डी<br>मदनखररुचिजितभोगमणिश्रीः ॥ |
| मञ्जुभाषिणी<br>सुनन्दिनीति शम्भौ | सजसा जगौ च यदि मञ्जुभाषिणी<br>।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | अमृतोर्म्मिशीतलकरेण लाञ्छनं-<br>मनुकान्तिपोषितविलोचनो हरे ! ।<br>नियतं कलानिधिरसीति वल्लवी<br>मुदमच्युते व्यधित मञ्जुभाषिणी ॥ |
| चन्द्रिका<br>उत्पलिनीति क्वापि। विद्युदिति क्षमेति च क्वापि। सप्तभिः षड्भिश्च यतिः। | ननततगुरुभिश्चन्द्रिकाऽश्वर्तुभिः ।।।,।।।,ऽऽ।,ऽऽ।,ऽ | शरदमलतरचन्द्रिकाधावलिते<br>दिनकरतनयातीरदेशे हरिः ।<br>विहरति रभसाद्बल्लवीभिः समं<br>त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥ |
| कलहंसः<br>सिंहनादः क्वापि। | सजसाः सगौ च कथितः कलहंसः<br>।।ऽ,।ऽ।,।।ऽ,।।ऽ,ऽ | यमुनाविहारकुतुके कलहंसो<br>व्रजकामिनीकमलिनीकृतकेलिः ।<br>जनचित्तहारिकलकण्ठनिनादः<br>प्रमदं तनोतु तव नन्दतनूजः ॥ |
| प्रबोधिता | सजसा जगौ च भवति प्रबोधिता ।।ऽ,।ऽ।,।।ऽ,।ऽ।,ऽ | शयिता मया पटुलमाननिद्रया<br>रतिकेलिकुञ्जनिलये विलासिनी ।<br>मुरवैरिणा वदनचुम्बनादिना<br>स्मितमाततान सपदि प्रबोधिता ॥ |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | गुरुभुजवीर्य्यभरं हरिं मदान्धा<br>युधि समुपेत्य न दानवा जिजीवुः ।<br>क्षुधितमृगेन्द्रमुखं मृगा उपेत्य<br>क नु खलु बिभ्रति जीवनस्य योगम् ॥ |
| चञ्चरीकावली | यमौ रौ विख्याता चञ्चरीकावली गः<br>।ऽऽ,ऽऽऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| चन्द्ररेखा | नसरयुगगैश्चन्द्ररेखर्त्तुलोकैः ।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| कन्दुकम् | इदं कन्दुकं यत्र येभ्यश्चतुर्भ्यो गः ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,ऽ | |
| मृगेन्द्रमुखम् | भवति मृगेन्द्रमुखं नजौ जरौ गः ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | |
| उपस्थितम् | उपस्थितमिदं जसौ तसौ यदि गुरुः स्यात्<br>।ऽ।,।।ऽ,ऽऽ।,।।ऽ,ऽ | |
| मञ्जुहासिनी | जतौ सजौ गो भवति मञ्जुहासिनी<br>।ऽ।,ऽऽ।,।।ऽ,।ऽ।,ऽ | |
| नन्दिनी | इह नन्दिनी सजससैर्गसंयुक्तैः ।।ऽ,।ऽ।,।।ऽ,।।ऽ,ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
| --- | --- | --- |
| कुटजगति | कुटजगतिर्नजौ सभगुं भनौ गुरु<br>ऽ॥ ।ऽ। ऽऽऽ,ऽऽ।,ऽ | |
| प्रभावती । | यस्यां प्रिये । प्रथमकमन्तरद्वय<br>तुर्यं तथा गुरु नवमं न्यान्तिमम् ।<br>मान्यं भवद्गुणनिरपि चेद्गुणाढ्ये<br>सा लक्ष्यतामन्तरहिते । प्रभावती ॥ | |
| चतुर्दशाक्षरा वृत्तिः । शर्करी ।<br>असम्बाधा<br>पञ्चभिर्नवभिश्च यतिः । | मौ गौ गौ गौ मः शरनवभिरसम्बाधा<br>ऽऽऽ,ऽ,ऽ,॥।,॥। ऽऽऽ | वीर्याग्नौ येन ज्वलति रणवशात् क्षिप्ते<br>दैत्येन्द्रे जाता धरणिरियमसम्बाधा ।<br>धर्मस्थित्यर्थं प्रकटिततनुसम्बन्धः<br>साधूनां बाधां प्रशमयतु स कंसारिः ॥ |
| वसन्ततिलकम्<br>अष्टाभिः षड्भिश्च यतिः । सिंहोन्नता कापि । सिंहोन्नता इति काश्यप । उद्धर्षिणी इति मुनिमैतव ॥ | ज्ञेयं वसन्ततिलकं तभजा जगौ गः<br>ऽऽ। ऽ॥,।ऽ। ।ऽ। ऽ,ऽ | फुल्लं वसन्ततिलकं तिलकं वनान्ता<br>लीलापरं पिककुलं कलमत्र रौति ।<br>वात्येष पुष्पसुरभिर्मलयाद्रिवातो<br>यातो हरिः स मधुरां विधिना हता स्मः ॥ |
| अपराजिता<br>सप्तभिर्यतिः । | ननरसलघुगैः स्वरैरपराजिता ॥।,॥। ऽ।ऽ,॥ऽ । ऽ | यदनवधिभुजप्रतापफलाश्रया<br>यदुनिचयचमूः परैरपराजिता ।<br>अजयत समरे समस्तरिपुव्रज<br>स जयति जगतां गतिर्गरुडध्वजः ॥ |
| प्रहरणकलिका<br>सप्तभिश्च सप्तभिर्यतिः । | ननभनलगिति प्रहरणकलिका ॥। ॥। ऽ॥ ॥। । ऽ | व्यथयति कुसुमप्रहरण । कलिका<br>प्रमदवनभवा तव धनुषि सता ।<br>विरहविपदि मे शरणमिह ततो<br>मधुमथनगुणस्मरणमविरतम् ॥ |
| वासन्ती | मात्तो नो मो गौ यदि गदिता वासन्तीयम्<br>ऽऽऽ ऽऽ। ॥। ऽऽऽ ऽ ऽ | भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीते<br>श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला ।<br>लीलालोला पल्लवविलसद्वल्लोहस्तैः<br>कंसारातौ नृत्यति सदृशी वासन्तीयम् ॥ |
| लोला<br>अष्टाभिः सप्तभिर्यतिः । | द्विःसप्तच्छिद् लोला मसौ म्भौ गौ चरणे चेत<br>ऽऽऽ,॥ऽ ऽऽऽ ऽ॥ ऽ ऽ | मुग्धे यौवनलक्ष्मीर्विद्युद्विभ्रमलोला<br>त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः ।<br>तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे<br>श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥ |
| नान्दीमुखी<br>अष्टाभिः सप्तभिर्यतिः । | स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ<br>॥।,॥।,ऽऽ। ऽऽ।,ऽ ऽ | सरसनवमधुलालापनान्दीमुखीयं<br>लहरिभुजलता चारुफेनस्मितश्रीः ।<br>सुरहरकलयार्थसमासाद्य किन्ते<br>प्रमुदितहृदया भानुजा नृत्यतीह ॥ |
| इन्दुवदना | इन्दुवदना भजसनैः सगुरुयुग्मैः ऽ॥ ।ऽ। ॥ऽ ॥।,ऽ ऽ | |
| नदी<br>सप्तभिर्यतिः । | ननतजगुरुभिः सप्तयतिर्नदी स्यात<br>॥। ॥। ऽऽ। ।ऽ। ऽ ऽ | |
| लक्ष्मीः | लक्ष्मीरन्तविरामा मुखौ तभौ गुरुयुग्मम्<br>ऽऽऽ,॥ऽ ऽऽ।,ऽ॥ ऽ,ऽ | |
| सुपवित्रम् | निननगागति वसुयति सुपवित्रम्<br>॥। ॥। ॥। ॥। ऽ,ऽ | |
| मध्यक्षामा | मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ<br>ऽऽऽ ऽ॥ ॥।,।ऽऽ ऽ ऽ | |
| कुटिलम् | युगदिगभिः कुटिलमिति सभौ न्यौ गौ चेत<br>॥ऽ,ऽ॥ ॥। ।ऽऽ ऽ, | |
| प्रमदा | नजभजला गुरुश्च भवति प्रमदा | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| मञ्जरी<br>पञ्चमे नवमे च यतिः । | सजसा यलौ गिति शरग्रहैर्मञ्जरी<br>\|\|ऽ,\|ऽ\|,\|\|ऽ,\|ऽऽ,\|,ऽ | |
| कुमारी<br>अष्टमे नवमे च यतिः । | नजभजगैर्गुरुश्च वसुयट् कुमारी<br>\|\|\|,\|ऽ\|,ऽ\|\|,\|ऽ\|,ऽ,ऽ | |
| सुकेसरम् | नरनरैर्लगौ च रचितं सुकेसरम्<br>\|\|\|,ऽ\|ऽ,\|\|\|,ऽ\|ऽ,\|,ऽ | |
| चन्द्रौरसः | म्भौ न्यौ लगौ चेदिह भवति च चन्द्रौरसः<br>ऽऽऽ,ऽ\|\|,\|\|\|,\|ऽऽ,\|,ऽ | |
| चक्रपदम् | चक्रपदमिह भनननलगुरुभिः<br>ऽ\|\|,\|\|\|.\|\|\|.\|\|\|,\|,ऽ | |
| वासन्ती | वासन्तीयं स्यादिह खलु मतौ न्यौ गौ चेत<br>ऽऽऽ,ऽऽ\|,\|\|\|,\|ऽऽ,ऽ,ऽ | |
| पञ्चदशाक्षरा वृत्तिः । अतिशर्करी । | | |
| शशिकला | गुरुनिधनमनुलघुरिह शशिकला<br>\|\|\|\|\|\|\|\|\|\|\|\|\|\|,ऽ | मलयजतिलकसमुदितशशिकला<br>व्रजयुवतिलसदलिकगगनगता ।<br>सरसिजनयनहृदयसलिलनिधिं<br>यतनुत विततरभसपरितरलम् ॥ |
| स्रक्<br>अस्याः षड्भिर्नवभिश्च यतिः । | सागयमपि च रसनव-रचितयतिः<br>\|\|\|\|\|\|,\|\|\|,\|\|\|\|\|,ऽ | अयि सहचरि ! रुचिरतरगुणमयी<br>स्रदिमवसतिरनपगतपरिमला ।<br>स्रगिव निवस विलसदनुपमरसा<br>सुसखि ! मुदितदनुजदलनहृदये ॥ |
| मणिगुणनिकरः<br>अष्टभिः सप्तभिश्च यतिः । | वसुमुनियतिरिति मणिगुणनिकरः<br>\|\|\|\|\|\|,\|,\|\|\|\|\|\|,ऽ | नरकरिपुरवतु निखिलसुरगति-<br>रमितमहिमभरसहजनिवसतिः ।<br>अनवधिमणिगुणनिकरपरिचितः<br>सरिदधिपतिरिव धृततनुविभवः ॥ |
| मालिनी<br>अष्टभिः सप्तभिश्च यतिः । | ननमयययुतेयं मालिनी भोगिलोकैः<br>\|\|\|,\|\|\|,ऽऽऽ,\|ऽऽ,\|ऽऽ | मृगमदकृतचर्चा पीतकौषेयवासा<br>रुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा ।<br>अनृजुनिहितमंशे वंशमुत्क्वाणयन्ती<br>धृतमधुरिपुलीला मालिनी पातु राधा ॥ |
| लीलाखेलः | एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेल<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,ऽऽऽ,ऽऽऽ,ऽ | पायाद्वो गोविन्दः कालिन्दीकूलच्चौर्यौचक्रे<br>रासोल्लासक्रीड़द्गोपीभिः सार्द्धं लीलाखेलः ।<br>मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीड़ाभिर्लोलो<br>यद्वद्देवानामीशः स्वर्वेश्याभिः खेलन्तीभिः ॥ |
| विपिनतिलकम् | विपिनतिलकं नसनरेफयुग्मैर्भवेन्<br>\|\|\|,\|\|ऽ,\|\|\|,ऽ\|ऽ,ऽ\|ऽ | विपिनतिलकं विकसितं वसन्तागमे<br>मधुकृतमदैर्मधुकरै रणद्भिर्वृतम् ।<br>मलयमरुता रचितलास्यमालोकयन्<br>व्रजयुवतिभिर्विहरति स मुग्धो हरिः ॥ |
| तूणकम् | तूणकं समानिकापदद्वयं विनान्तिमम्<br>ऽ,\|,ऽ\|ऽ,\|ऽ\|,ऽ,\|,ऽ\|ऽ,\|ऽ | सा सुवर्णकेतकं विकाशि भृङ्गपूरितं<br>पञ्चबाणबाणजालपूर्णहेमतूणकम् ।<br>राधिका वितर्क्य माधवाद्य मासि माधवे<br>मोहमेति निर्भरं त्वया विना कलानिधे ! ॥ |
| चन्द्रलेखा<br>सप्तमे अष्टमे च यतिः । | म्रौ मो यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा<br>ऽऽऽ,ऽ\|ऽ,ऽऽऽ,\|ऽऽ,\|ऽऽ, | विच्छेदे ते मुरारे ! पाण्डुप्रकाशा कृशाङ्गी<br>म्लानच्छायं दुकूलं न भ्राजते बिभ्रती सा ।<br>राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा<br>किन्त्वार्त्ता त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥ |
| चित्रा | चित्रा नामच्छन्दश्चित्रश्चेत् त्रयो मा यकारौ<br>ऽऽऽ,ऽऽऽ,ऽऽऽ,\|ऽऽ,\|ऽऽ | गोपाली लीलालोला यद्वत् कलिन्दात्मजान्ते<br>खेलन्मुक्ताहारा वन्यस्रक्सम्मूर्द्धचित्रा ।<br>कंसारातेर्मूर्त्तिस्तद्वन्मे हृदि क्रीड़तीयं<br>कोऽन्यः स्वर्गो मोक्षो वास्माद्विद्यते तन्न जाने ॥ |

| छन्दसां प्रतिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
| --- | --- | --- |
| प्रभद्रकम् | भवति नजौ भजौ रसहितौ प्रभद्रकम्<br>।।।,।ऽ। ऽ।।,।ऽ।,ऽ।ऽ | |
| एला<br>पञ्चभिर्दशभिश्च यतिः । | सजना नयौ शरदशयतिरियमेला<br>।।ऽ,।ऽ।,।।।,।।।,।ऽऽ | |
| कामक्रीडा | मा पञ्च स्युर्यस्यां सा कामक्रीडागंधा ज्ञेया<br>ऽऽऽ,ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ | |
| सुकेसरम् | नजभजरैर्विराजितमिदं सुकेसरम्<br>।।।, ।ऽ। ऽ।। ।ऽ।,ऽ।ऽ | |
| चन्द्रकान्ता<br>सप्तभिरष्टाभिः यतिः । | चन्द्रकान्ताभिधा रौ मसौ यो विरमः स्वराष्टौ<br>ऽ।ऽ,ऽ।ऽ,ऽऽऽ,।।ऽ,।ऽऽ | |
| उपमालिनी<br>अष्टाभिः सप्तभिश्च यतिः | ननभरसनाक्षमरैरुपमालिनी<br>।।।,।।।,ऽऽ।,ऽ।।,ऽ।ऽ | |
| ऋषभ | ऋषभागमेतदुदितं सजसाः सयौ चेत्<br>।।ऽ,।ऽ। ।।ऽ,।।ऽ ।ऽऽ | |
| मानसहंस | कथयन्ति मानसहंसनाम सजौ जभराः<br>।।ऽ,।ऽ।,।ऽ। ऽ।।,ऽ।ऽ | |
| नलिनी | सगणैः प्रथितक्रमिनैर्गदिता नलिनी<br>।।ऽ ।।ऽ,।।ऽ,।।ऽ ।।ऽ, | |
| निश्चिपालकम् | यत्र निश्चिपालकमिदं भजसनाश्च रः<br>ऽ।।,।ऽ। ।।ऽ,।।।,ऽ।ऽ | |
| षोडशाक्षरा वृत्तिः । अष्टिः ।<br>चित्रम् | चित्रसंज्ञमीरितं समानिका पदद्वयम्<br>ऽ,। ऽ।ऽ ।ऽ।,ऽ,। ऽ।ऽ,।ऽ। | विद्रुमारुणाधरोष्ठशोभिवेणुवाद्यहृष्ट-<br>बल्लवीजनाङ्गसङ्गजातपुलकोत्कटाङ्ग<br>त्वां सदैव वासुदेव । पुण्यलभ्यपादपद्म<br>बर्हपुष्पचित्रकेश । संस्मरामि गोपवेश ॥ |
| ऋषभगजविलसितम्<br>गजतुरगविलसितमिति शम्भौ ।<br>सप्तभिर्नवभिश्च यतिः । | भ्रनिनगैः स्वरर्तुऋषभगजविलसितम्<br>ऽ।।,ऽ।ऽ,।।।,।।।,।।।,ऽ | यो हरिरुच्चखान तरसा नखरखरैः<br>दुर्जयदैत्यसिंहसुविकटहृदयतटम् ।<br>किञ्चिदिव स्मितेन यदविलम्भपहृतवान्<br>कंसनिदेशहस्त्यृषभगजविलसितम् ॥ |
| चकिता<br>अष्टसु वसुषु यतिः । | भात् सभतनगैरष्टच्छेदे स्यादिह चकिता<br>ऽ।।,।।ऽ,ऽऽऽ,ऽऽ।,।।।,ऽ | दुर्ज्ञेयदुरधिगमा दुश्चेष्टाग्रतचकिता<br>यद्भुजपरिघहता याता साध्वसविगमम् ।<br>दीव्यति दिवि यशान्तः स्वेच्छं नन्दनविपिने<br>गच्छत शरणं शर्म्यं सं भीता भवरिपुतः ॥ |
| पञ्चचामरम् | प्रमाणिका पदद्वयं वदन्ति पञ्चचामरम्<br>।ऽ।,ऽ।ऽ,। ऽ,।ऽ ,ऽ।ऽ,।,ऽ | सुरद्रुमूलमण्डपे विचित्ररत्ननिर्मिते<br>लसद्वितानभूषिते सलीलविभ्रमालसम् ।<br>सुराङ्गनाभवल्लवीकरप्रपञ्चचामर<br>स्फुरत्समीरवीजितं सदाच्युतं भजामि तम् ॥ |
| मदनललिता<br>चतुर्थे षष्ठे च यतिः । | म्भौ नो म्नौ गो मदनललिता वेदैः षड्भुभिः<br>ऽऽऽ,ऽ।।,।।। ऽऽऽ,।।।,ऽ | विभ्रश्यद्गलितचिकुरा भीताधरपुटा<br>म्लायत्पत्रावलिकुचतटी स्वेदाम्बुसरला ।<br>राधात्यर्थं मदनललिताम्दोलालसवपुः<br>कंसारातेरतिरसमहो चक्रे तिमटुलम् ॥ |
| वाणिनी | नजभजरैर्यदा भवति वाणिनी गयुक्तैः<br>।।।,।ऽ। ऽ।।,।ऽ।,ऽ।ऽ ऽ | स्फुरतु ममाननेऽद्य ननु वाणि । नीतिरम्य<br>तव चरणप्रसादपरिपाकतः कवित्वम् ।<br>भवजलराशिपारकरणक्षमं मुकुन्द<br>सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम् ॥ |
| प्रवरललितम् | यमौ न सौ गश्च प्रवरललितं नाम वृत्तम्<br>।ऽऽ,ऽऽऽ,।।।,।।ऽ,ऽ।ऽ,ऽ | भुजोत्क्षेपः शून्ये चलवलयभङ्कारयुक्तो<br>मुधा पादन्यासः प्रकटिततुलाकोटिनादः ।<br>स्मितं वक्रोक्तिकलादृशि पटुकटाक्षोर्मिलीला<br>हरौ जीयाद्दीक्षु प्रवरललितं वल्लवीनाम् ॥ |

<table>
<tr><th>छन्दसां वृत्तिनामानि ।</th><th>छन्दसां लक्षणानि ।</th><th>छन्दसामुदाहरणानि ।</th></tr>
<tr><td>हारिणी<br>अस्याश्चतुर्थे षष्ठे सप्तमे च यति ।</td><td>वेदत्वैश्वैर्मभनमयला गश्चेत्तदा हारिणी<br>ऽऽऽ,ऽ।।,।।।,ऽऽऽ,।ऽऽ,।,ऽ</td><td>यस्या नित्ये श्रुतिकुवलये शोभालिनी लोचने<br>राग स्वीयोऽधरकिसलये लाक्षारसारञ्जनम् ।<br>गौरी कान्ति प्रकृतिरचिरा रम्याङ्गरागच्छटा<br>सा कंसारेरजनि न कथं राधा मनोहारिणी ॥</td></tr>
<tr><td>भाराक्रान्ता<br>चतुर्थे षष्ठे सप्तमे च यति ।</td><td>भाराक्रान्ता मभनरसला गुरु श्रुतिषड्हयैः<br>ऽऽऽ,ऽ।।,।।।,ऽ।ऽ,।।ऽ,।,ऽ</td><td>भाराक्रान्ता मम तनुरिय गिरीन्द्रविधारणात<br>कम्पं धत्ते श्रमजलकणं तथा परिसुष्यति ।<br>इत्याश्वसन् जयति जलदस्वनाकुलवल्लवी<br>गर्बेषोत्थ स्मरविलसितं विलोक्य गुरुं हरिः ॥</td></tr>
<tr><td>हरि</td><td>रसयुगहययुङ् नौ म्रौ स्लो लगौ हि यदा हरिः<br>।।।,।।।,ऽऽऽ,ऽ।ऽ,।।ऽ ।,ऽ</td><td></td></tr>
<tr><td>कान्ता</td><td>भवेत कान्ता युगरसहयैर्यभौ नरसा लगौ<br>।ऽऽ,ऽ।। ।।।,ऽ।ऽ ।।ऽ ।,ऽ</td><td></td></tr>
<tr><td>चित्रलेखा<br>नवमे सप्तमे च यति ।</td><td>ससजा भजगा स दिकस्वरैर्भवति चित्रलेखा<br>।।ऽ,।।ऽ,।ऽ।,ऽ।।,।ऽ। ऽ,ऽ</td><td></td></tr>
<tr><td>अतिशायिनी</td><td>ससजैरतिशायिनी मता भजपरैर्गुरुभ्याम्<br>।।ऽ,।।ऽ,।ऽ।,ऽ।।,।ऽ।,ऽ,ऽ</td><td></td></tr>
<tr><td>पञ्चचामरम्</td><td>अवेहि पञ्चचामरं जरौ जरौ जगौ लघुश्च<br>।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ,।</td><td></td></tr>
<tr><td>अष्टादशाक्षरा वृत्तिः । धृति ।<br>कुसुमितलतावेल्लिता<br>पञ्चमे षष्ठे सप्तमे च यति ।</td><td>स्यादूत्वैश्वैः कुसुमितलतावेल्लिता मतौ नयौ यौ<br>ऽऽऽ,ऽऽ।,।।।,।ऽऽ,।ऽऽ,।ऽऽ</td><td>क्रीडत्कालिन्दीललितलहरीवारिभिर्दाक्षिणात्यैर्<br>वाते खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम् ।<br>भृङ्गालीगीतैः किसलयकरोल्लासितोल्लासलक्ष्मीं<br>नन्वाना चेतो रभसतरलं चक्रपाणेश्चकार ॥</td></tr>
<tr><td>नन्दनम<br>एकादशे सप्तमे च यति । इद<br>मेव वदरैश्छिन्ना महामालिका<br>चाधिकन्यभिलारका दश्यवस<br>मिर्लसा इति कुत्रापि ।</td><td>नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽ।ऽ,ऽ।ऽ</td><td>तरणिसुतातरङ्गपवनैः सलीलमान्दोलित<br>मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम् ।<br>सुरहरचित्रचेष्टितकलाकलापसंस्मारकं<br>क्षितितलनन्दनं व्रज सखे । सुखाय वृन्दावनम् ॥</td></tr>
<tr><td>नाराचम</td><td>इह ननरचतुष्कसृष्टन्तु नाराचमाचक्षते<br>।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ</td><td>दिनकरतनयातटीकानने चारुसञ्चारिणो<br>श्रवणनिकटकृष्टमेघच्छया श्यामा । राधा त्वयि ।<br>ननु विकिरति नेत्रनाराचमेषातिदुर्भेदनं<br>तदिह मदनविभ्रमोद्भ्रान्तचित्तावधानस्य हन्तम् ॥</td></tr>
<tr><td>चित्रलेखा<br>चन्द्रलेखा इति क्वचित् ।</td><td>मन्दाक्रान्ता नयरलघुयुता कीर्तिता चित्रलेखा<br>ऽऽऽ,ऽ।।,।।।,।,ऽऽ।,ऽऽ।,ऽ ऽ</td><td>शुभ्रेऽस्मिन् जगति मृगदृशां साररूपं यदासी<br>दाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि ।<br>मैत्राढ्कं चेत ५ यमुदधिसुतामन्तरेणाच्युतस्य<br>प्रीत तस्यां नयनयुगमभूच्चित्रलेखाकुलायाम् ॥</td></tr>
<tr><td>शार्दूलललितम<br>द्वादशे षष्ठ्यान्ते च यति ।</td><td>म सौ ज सतसा दिनेशऋतुभिः शार्दूलललि-<br>तम्<br>ऽऽऽ,।।ऽ,।ऽ।,।।ऽ,ऽऽ।,।।ऽ</td><td>हत्वा कंसमृगे पराक्रमविधिं शार्दूललालित<br>यश्चक्रे क्षितिभारकारिषु सुराराति ष्वनिदरम् ।<br>सन्तोष परमन्तु दवनिवहे त्रैलोक्यग्रास्य<br>श्रेयो व स तनोत्वपारमहिमा लक्ष्मीप्रियनम ॥</td></tr>
<tr><td>हरिणप्लुतम्<br>हरिणप्लुतेति कुत्रापि ।</td><td>मात सो जौ भरसयुतौ करिवाजिखैर्हरिणप्लुतम्<br>ऽऽऽ,।।ऽ,।ऽ।,।ऽ।,ऽ।।,ऽ।ऽ</td><td></td></tr>
<tr><td>अश्वगति</td><td>पञ्चभकारयुताऽश्वगतिर्यदि चान्त्यगरचिता<br>ऽ।।,ऽ।।,ऽ।।,ऽ।। ऽ।।,।।ऽ</td><td></td></tr>
<tr><td>सुधा</td><td>सुधा सकैर्लकैर्भवति ऋतुभिर्यो मो नसतगाः<br>।ऽऽ,ऽऽऽ,।।। ।।ऽ,ऽऽ।,।।ऽ</td><td></td></tr>
<tr><td>चित्रलेखा</td><td>वस्वश्वैर्मनननतमकैः कीर्तिता चित्रलेखेयम्<br>ऽऽऽ,।।।,।।।,ऽऽ।,ऽऽ।,ऽऽऽ,</td><td></td></tr>
</table>

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
| --- | --- | --- |
| भ्रमरपदकम् | भाद्रनना नसौ भ्रमरपदकमिदमभिहितम्<br>२।।,२।२,।।।,।।।,।।।,।।२ | |
| शार्दूलम् | शार्दूलं वद मासषट्कयति मः सो जसौ रो मश्चेत्<br>२२२,।।२,।२।,।।२,२।२,२२२ | |
| केसरम् | अर्णाश्वाश्वैर्मभनयरयुगैर्वृत्तं मतं केसरम्<br>२२२,२।।,।।।,।२२,२।२,२।२ | |
| चलम् | म्भौ नजौ भ्रौ चेच्चलमिदमुदितं युगैर्मुनिभिः स्वरैः<br>२२२,२।।,।।।,।२।,२।।,२।२ | |
| ललिता | सैका वसुविरतिस्तनौ रैश्चतुर्भिर्युता लाबसा<br>२२।,।।।,२।२,२।२,२।२,२।२ | |
| लता | भवति नयुगलं रभौ रौ दशभिर्गजेन्द्रैर्लता<br>।।।,।।।,२।२,२।।,२।२,२।२ | |
| सिंहविस्फूर्जितम् | तद्वृत्तर्षैश्वैर्मौ भमौ विरतिश्चेत् सिंहविस्फूर्जितं यौ<br>२२२,२२२,२।।,२२२,।२२,।२२ | |
| हरनर्त्तनम्<br>विबुधप्रिया इति च कुत्रापि । | रसौ जजौ भरसंयुतौ करिवाणखैर्हरनर्त्तनम्<br>२।२,।।२,।२।,।२।,२।।,२।२ | |
| क्रीड़चक्रम् | इदं क्रीड़चक्रं सदीर्घं समस्तैर्यकारैः समेतम्<br>।२२,।२२,।२२,।२२,।२२,।२२, | |
| चीरकम् | चीरकमुदितं भसनजनैरिह रगणोऽन्ततः<br>२।।,।।२,।।।,।२।,।।।,२।२ | |
| ऊनविंशत्यक्षरा वृत्तिः । अतिधृतिः । | | |
| मेघविस्फूर्जिता<br>षष्ठे षष्ठे सप्तमे च यतिः । | रसर्त्वश्वैर्य् मौ नसौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात् ।<br>।२२,२२२,।।।,।।२,२।२,२।२,२ | कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेका<br>विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः ।<br>निशा नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्जिता चेत्<br>प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात् किमन्यत् ॥ |
| छाया<br>षष्ठे द्वादशे अन्ते च यतिः । | भवेत् सैवच्छाया तयुगगयुता स्यात् द्वादशान्ते यदा<br>।२२,२२२,।।।,।।२,२२।,२२।,२ | अभीष्टं जुष्टो यो वितरति लसद्दोश्चारुशाखोज्ज्वलः<br>स्फुरन्नानारत्नस्तवकितततुश्चित्रांशुकालम्बितः ।<br>न यस्याङ्घ्रिच्छायासुभगतवतां संसारतीव्रातप-<br>स्तनोति श्रोत्तापं स जगदवतात् कंसारिकल्पद्रुमः ॥ |
| शार्दूलविक्रीड़ितम्<br>द्वादशे ऊनविंशतौ च यतिः । | सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितम्<br>२२२,।।२,।२।,।।२,२२।,२२।,२ | गोविन्दं प्रणमोत्तमाङ्ग ! रसने ! त्वं घोषयाहर्निशं<br>पाणी ! पूजयतं मनः ! स्मर पदे ! तस्यालयं गच्छतम् ।<br>एवञ्चेत् कुरुताखिलं मम हितं शीर्षादयस्तद् ध्रुवं<br>न प्रेक्षे भवतां कृते भवमहाशार्दूलविक्रीड़ितम् ॥ |
| सुरसा<br>सप्तमे चतुर्दशे अन्ते च यतिः । | म्रौ भ्नौ यो नो गुरुश्चेत् स्वरमुनिकरणैराह सुरसाम्<br>२२२,२।२,२।।,।।।,।२२,।।।,२ | कामक्रीड़ासतृष्णो मधुसमयसमारम्भरभसात्<br>कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः ।<br>गोविन्दो वल्लवीनामधररससुधां प्राप्य सुरसां<br>शङ्के पीयूषपानप्रभवकृतसुखं विस्मरदसौ ॥ |
| फुल्लदाम<br>पञ्चमे द्वादशे अन्ते च यतिः ।<br>पुष्पदाम इति केचित् । | मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम प्रसिद्धम्<br>२२२,२,२,।।।,।।।,२२।,२२।,२,२ | शश्वल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं<br>हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विसृष्टम् ।<br>सुग्धामोदेन स्थगितदशदिगाभोगमाहूतभृङ्गं<br>मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम ॥ |
| पञ्चचामरः | नयुगलगलघू रजौ रलगा यदा स पञ्चचामरः<br>।।।,।।।,२,।,२।२,।२।,२।२,।,२ | |
| बिम्बम् | वृत्तं बिम्बाख्यं शरसनितुरगैर्म्तौ नमौ ततौ चेद्गुरुः<br>२२२,२२।,।।।,।।२,२२।,२२।,२ | |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| भद्रकम् | भौ नरना रनावथ गुरुर्दिगर्कविरमं हि भद्रकमिदम्<br>ऽ।।,ऽ।ऽ,।।।,ऽ।ऽ,।।।,ऽ।ऽ,।।।,ऽ | |
| लालित्यम् | लालित्यं भुजगेन्द्रेण भाषितमेतच्चेन् मसः सजनगुभिः<br>ऽऽऽ,।।ऽ,ऽ।ऽ,।।ऽ,ऽऽ।,।ऽ।,।।।,ऽ | |
| महास्रग्धरा | सजता नसौ ररौ गः फणितुरगहयैः स्यान्महास्रग्धराख्या<br>।।ऽ,।ऽ।,ऽऽ।,।।।,।।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ | |
| त्रयोविंशत्यक्षरा वृत्तिः। विकृतिः। | | |
| अद्रितनया<br>अश्वललितमित्यन्यत्र। | नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयमद्रितनया<br>।।।,।ऽ।,ऽ।।,।ऽ।,ऽ।।,।ऽ।,ऽ।।,।,ऽ | खरतरशौर्यपावकशिखापतङ्गनिभमग्नदृप्तदनुजो<br>जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा।<br>भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह हि<br>क्षितिवलयेऽस्ति कंसशमनस्त्ववेति तमवोचदद्रितनया॥ |
| मत्ताक्रीडम्<br>अष्टमे त्रयोदशे त्रयोविंशतौ च यतिः। मत्ताक्रीडा इति क्वचित्॥ | मत्ताक्रीडं वस्विष्वाशायति मयुगगयुगमनुलघुगुरुभिः<br>ऽऽऽ,ऽऽऽ,ऽ,ऽ,।।।।।।।।।।।।,ऽ | मुग्धोन्मीलन्मत्ताक्रीडं मधुसमयसुलभमधुरमधुरसात्<br>गाने याने किञ्चित्स्पन्दत्पदमरुणनयनयुगलसरसिजम्।<br>रासोल्लासक्रीडत्कन्दव्रजयुवतिवलयरचितभुजरसं<br>सान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनवचरणपरिचयम्॥ |
| सुन्दरिका | इह सुन्दरिका पिङ्गलमुनिनोक्ता वदयतो भसता नजभगाः<br>।।ऽ,।।ऽ,ऽ।।,।।ऽ,ऽऽ।,।ऽ।,।,ऽ।।,ऽ | |
| चतुर्विंशत्यक्षरा वृत्तिः। संस्कृतिः। | | |
| तन्वी<br>पञ्चमे द्वादशे चतुर्विंशतौ च यतिः। | भूतमुनीनैर्यतिरिह भतनाः सभौ भनयाश्च यदि भवति तन्वी<br>ऽ।।,ऽऽ।,।।।,।।ऽ,ऽ।।,ऽ।।,।।।,।ऽऽ | माधव मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः<br>कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यधिगततनुदाहा।<br>पद्मपलाशैर्विरचितशयना देहजसंज्वरभरपरिदूने<br>निःश्वसती सा मुहुरतिपरुषं ध्यानलये तव निवसति तन्वी॥ |
| किरीटम् | नाम किरीटमिदं भगणा यदि पिङ्गलनागमुनीन्द्रमतं किल<br>ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।।,ऽ।। | |
| दुर्मिलम् | सगणैरिह वृत्तधरं वसुभिः किल दुर्मिलमुक्तमिदं कविभिः<br>।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ,।।ऽ | |
| पञ्चविंशत्यक्षरा वृत्तिः। अतिकृतिः। | | |
| क्रौञ्चपदा<br>पञ्चमे दशमे अष्टादशे पञ्चविंशतौ च यतिः। | क्रौञ्चपदा स्यात् भो मसभाश्चेदिषुशरवसुमुनियति ननुलघुगैः<br>ऽ।।,ऽऽऽ,।।ऽ,ऽ।।,।।।।।।।।।।।।,ऽ | क्रौञ्चपदालीचित्रिततीरा मदकलखगकुलकलकलरुचिरा<br>फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरवरभसकरी।<br>फेनविलासप्रोज्ज्वलहासा ललितलहरिभरपुलकिततनुः<br>पश्य हरेऽसौ कस्य न चेतो हरति तरलगतिरहिम-<br>किरणजा॥ |
| षड्विंशत्यक्षरा वृत्तिः। उत्कृतिः। | | |
| भुजङ्गविजृम्भितम्<br>अष्टमे ऊनविंशतौ षड्विंशतौ च यतिः। | वस्वीशाश्वैश्छेदोपेतं ममतननयुगरसलगै-<br>र्भुजङ्गविजृम्भितम्<br>ऽऽऽ,ऽऽऽ,ऽऽ।,।।।,।।।,।।।,ऽ।ऽ,।।ऽ,।,ऽ | हेलोद्यन्नृत्यत्पादप्रकटविकटनटनभरो रणत्करतालक<br>श्चारुप्रेङ्खच्चूडाबर्हः श्रुतितरलनवकिसलयसरञ्जित-<br>हारधृत्।<br>त्रस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुति-<br>रच्युतः<br>पायाद्भिन्दन् कालिन्दीह्रदकृतनिजवसतिरहिभुजङ्ग-<br>विजृम्भितम्। |
| अपवाहम् | मो नाः षट् सगाविति यदि नवरसरसशर-<br>यतियुतमपवाहाख्यम्<br>ऽऽऽ,।।।,।।।,।।।,।।।,।।।,।।।,।।ऽ,ऽ,ऽ | |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| अथ दण्डकाः ।<br>सप्तविंशत्यक्षरा इति ।<br>चण्डवृष्टिप्रपातः | यदिह नयुगलं ततः सप्तरेफास्तदा चण्ड<br>वृष्टिप्रपातो भवेद्दण्डकः<br>111 1 1 212 212 212 212 212 212 212, | प्रलयघनघनाघटारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं<br>सपदि समवलोक्य सव्येन हस्तेन गोवर्द्धनं नाम शैलं<br>न्यधत्त लीलया ।<br>कमलनयन । रक्ष रक्षेति गव्याकुलस्मेरमुग्धगोपाङ्गनाभिः<br>शानन्दितो<br>गलदभिनवधातुधाराविचित्राङ्गरागो सुरारातिरस्तु<br>प्रमोदाय वः । |
| प्रचितकः | प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको<br>नद्वयादुत्तरैः सप्तभिर्यैः<br>111 111,122 122 122 122,122 122,122 | सुरहर । यदुकुलाम्भोधिचन्द्र । प्रभो । देवकीनन्दन ।<br>त्रिलोकैकनाथ<br>प्रचितकपटमुरारिव्रजोद्दामभन्नावलक्षोमविद्रावणे<br>कप्रवीण ।<br>चरणनखरसुधांशुच्छटोन्मथनिःशेषितध्यायिचेतो<br>निविष्टान्धकार<br>प्रणतजनपरितापोग्रदावानलोच्छेदमेघ । प्रसीद प्रसीद<br>प्रसीद ॥ |
| कुसुमस्तवकम् | सगणाः सकला खलु यत्र भवन्तमिह प्रवदन्ति<br>बुधाः कुसुमस्तवकम्<br>112 112,112 112 112 112 112,112 112 | विरराज यदीयकरः कनकद्युतिबन्धुरदामवृतः<br>कुचकुड्मली<br>भ्रमरप्रकरेण यथात्र मनोहरशोकलताविलसत्कुसुमस्तवकः ।<br>स नवीनतमालदलप्रतिमच्छविरिन्दिरलोचनहारिरुचा<br>कमलाकमिरांशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुज<br>मध्यगतः ॥ |
| मत्तमातङ्गलीलाकरः | यत्र रेफाः परं स्वेच्छया गुम्फिताः स स्मृतो दण्डको<br>मत्तमातङ्गलीलाकरः<br>212 212 212 212 212 212 212 212 212 | हेमगौरं वसानः शुकं शक्रनीलासिते वक्षसि स्पष्टदिव्या-<br>नुलपाङ्किती<br>हारताराशुवक्षोनभश्चित्रमालाङ्किते भव्यभूषोज्ज्वलाङ्ग<br>मम शौरिणा ।<br>कम्बुनाभास्वरेणेन्दुकुन्दाभ दन्तेन लीलापरीहास<br>हासोर्मिकौतूहले<br>कंसरङ्गाङ्गणे पातु वश्चक्रपाणिर्गनिक्रीडया मत्तमातङ्ग<br>लीलाकरः |
| षड्विंशत्यक्षरा इति ।<br>अशोकपुष्पमञ्जरी | यत्र दृश्यते गुरोः परो लघुः क्रमात् स उच्यते<br>बुधैरशोकपुष्पमञ्जरीति<br>21212121212121212121212121 | मल्लिं चारुचम्पकस्रजा सलालवदन लसल्लवङ्गचारु<br>चन्द्रिका कचेषु<br>अशोकपुष्पमञ्जरी चलत्सका मनोज्ञ कामकेसरी<br>चकाश्चयाम ।<br>फुल्लनागकेसरादिपुष्परेणुरूषितं तनौ विचित्रमित्यपास्त<br>वेश एष<br>केशवः पुनातु वः सुपुष्पभूषितः स मन्मथाभिमानितो<br>मधुर्विहङ्गमश्च ॥ |
| अनङ्गशेखरः | लघुर्गुरुर्निजेच्छया यदा निवेश्यते सदैव दण्डको<br>भवत्यनङ्गशेखरः<br>12121212121212121212121212 | उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके । विजृम्भ<br>माणगौरदीधितिः<br>रतिस्वहस्तनिर्मितं कलाकुतूहलेन चारुचम्पकैरनङ्ग<br>शेखरं शिरः ।<br>इति प्रमोदकारिणीं प्रियाप्रमोदनक्षमां गिरं समुद्गिरन्<br>मुरारिरद्भुतां<br>प्रदोषकालसङ्गमोल्लसन्मना मनोजकेलिकौतुकी करोतु वः<br>कृतार्थताम् ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणगणाः । | छन्दसामुदाहरणानि । |
|---|---|---|
| त्रिंशदक्षरा वृत्तिः । अर्णः | प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामशङ्खादयः प्रतिचरणं चण्डवृष्टिप्रपातस्त्वयं । ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ. | जय जय जगदीश विष्णो हरे राम दामोदर श्रीनिवासाच्युतानन्त नारायण त्रिदशगणगुरो मुरारे मुकुन्दासुरारे हृषीकेश पीताम्बर श्रीपते माधव । गरुड़गमन कृष्ण वैकुण्ठ गोविन्द विश्वम्भरोपेन्द्र चक्रायुधाधोक्षज श्रीनिधे बलिदमन नृसिंह शौरे । भवाम्भोधिघोरार्णवे त्वं निमज्जन्तमभ्युद्धरोपेन्द्र माम् ॥ |
| सिंहविक्रीड़ः | यकारैः कवीच्छानुरोधाभिबद्धैः प्रसिद्धो विशुद्धो ऽपरो दण्डकः सिंहविक्रीड़नामा ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | |
| त्रयस्त्रिंशदक्षरा वृत्तिः । अर्णवः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | अर्णार्णवादीनामप्युदाहरणानि बोद्धव्यानि |
| अशोकमञ्जरी | स्वेच्छया रजौ क्रमेण संनिवेशयत्युदारधीः कविः स दण्डकः स्मृतो जयत्यशोकमञ्जरी ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽ।,ऽ।ऽ | |
| षट्त्रिंशदक्षरा वृत्तिः । व्यालः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| ऊनचत्वारिंशदक्षरा वृत्तिः । जीमूतः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ, ऽ।ऽ | |
| द्विचत्वारिंशदक्षरा वृत्तिः । लीलाकरः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ.ऽ।ऽ.ऽ।ऽ.ऽ।ऽ.ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ, ऽ।ऽ,ऽ।ऽ | |
| पञ्चचत्वारिंशदक्षरा वृत्तिः । उद्दामः | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ.ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ, ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| सिंहविक्रान्तः | नयुगलगुरुयुगेयं यकाराः कवीच्छानुरोधाद्यदा यत्र बध्यन्त एषोऽपरो दण्डकः पण्डितैरीरितः सिंहविक्रान्तनामा ।।।,।।।,।,ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ.।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ.।ऽऽ, ।ऽऽ,।ऽऽ,।ऽऽ,।ऽऽ | |
| अष्टचत्वारिंशदक्षरा वृत्तिः । शङ्खः इत्यादयः । | ।।।,।।।,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ.ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ, ऽ।ऽ.ऽ।ऽ,ऽ।ऽ,ऽ।ऽ,ऽ।ऽ | |
| इति समवृत्तानि समाप्तानि ॥*॥ | | |
| अथार्द्धसमवृत्तानि । | | |
| उपचित्रम् ११ । ११ वृत्तिः । | विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम् । द्विरावृत्त्या श्लोकः पूरयितव्यः | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।।ऽ,।।ऽ,।,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | सुरवैरिवपुस्तनुतां मुदं हेमनिभांशुकचन्दनलिप्तम् । गगनस्थमलामिलितं यथा शारदनीरधरैरुपचित्रम् ॥ |
| वेगवती १० । ११ वृत्तिः । | विषमे प्रथमाक्षरहीनं दोधकमेव हि वेगवती स्यात् | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।।ऽ,।।ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽ।।,ऽ।।,ऽ।।,ऽ,ऽ | स्मर वेगवती व्रजरामा केशववंशरवैरतिमुग्धा । रभसान्न गुरून् गणयन्ती केलिनिकुञ्जगृहाय जगाम ॥ |

| छन्दसां वृत्तिनामानि । | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|
| भद्रविराड् १०।११ इति । | ओजे तपरौ जरौ गुरुश्चेत् मसौ जगौ ग भद्रविराड् भवेदनोजे | |
| प्रथमपादे तृतीयपादे च | ऽऽ।।ऽ।,ऽ।ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽऽऽ,।।ऽ,।ऽ।,ऽ,ऽ | |
| केतुमती १०।११ इति । | असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद् गः | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।ऽ।,।।ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽ।। ऽ।ऽ,।।।,ऽ ऽ | |
| विपरीतपूर्वा ११।११ इति । | जसौ जगौ गो विषमे समे चेत् तौ जगौ ग एषा विपरीतपूर्वा | |
| प्रथमपादे तृतीयपादे च | ।ऽ।,ऽऽ।,।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ऽऽ।,ऽऽ।,।ऽ। ऽ,ऽ | |
| आख्यानकी ११।१२ इति । | आख्यानकी तौ जगुरू ग ओजे जतावनोजे जगुरू गुरुश्चेत् | |
| प्रथमपादे तृतीयपादे च | ऽऽ।,ऽऽ। ।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।ऽ। ऽऽ। ।ऽ।,ऽ ऽ | |
| हरिणप्लुता ११।१२ इति । | अयुजि प्रथमेन विवर्जितं द्रुतविलम्बितकं हरिणप्लुता | |
| प्रथमपादे तृतीयपादे च | । ऽ।।,ऽ।। ऽ।ऽ | स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता।<br>कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः॥ |
| द्वितीयपादे चतुर्थपादे च | ।।। ऽ।। ऽ।।,ऽ।ऽ | |
| अपरवक्त्रम् ११।१२ इति । | अयुजि ननरला गुरु समे तदपरवक्त्रमिदं नजौ जरौ | |
| प्रथमे तृतीये च पादे | ।।। ।।ऽ।ऽ,।ऽ | स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमवेत्य माधवम्।<br>मृगयुवतिगणैः समं स्थिता व्रजवनिता धृतचित्तविभ्रमाः॥ |
| द्वितीये चतुर्थे च पादे | ।।। ।ऽ। ।ऽ।,ऽ।ऽ | |
| द्रुतमध्या ११।१२ इति । | भत्रयमोजगतं गुरुणी चेद् युजि च नजौ ज्यवुतौ द्रुतमध्या | |
| प्रथमपादे तृतीयपादे च | ऽ।। ऽ।। ऽ।।,ऽ ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।।,।ऽ। ।ऽ। ।ऽऽ | |
| मालभारिणी ११।१२ इति । | विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम् | |
| प्रथमपादे तृतीयपादे च | ।।ऽ,।।ऽ ।ऽ।,ऽ,ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।ऽ ऽ।। ऽ।ऽ,।ऽऽ | |
| कौमुदी १२।१२ इति । | अयुजि ननभभा समकेऽपि तु नयुगरयुगलं सदा कौमुदी | |
| प्रथमपादे तृतीयपादे च | ।।। ।।। ऽ।।,ऽ।। | |
| द्वितीयपादे चतुर्थपादे च | ।।, ।।,ऽ।ऽ,ऽ।ऽ | |
| पुष्पिताग्रा १२।१३ इति । | अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा | |
| प्रथमपादे तृतीयपादे च | ,।।। ऽ।ऽ ।ऽऽ | करकिसलयशोभया विभान्ती कुचफलभारविनम्रदेहयष्टिः।<br>क्षितरुचिरविकाशपुष्पिताग्रा व्रजयुवतिर्नवतो हरेर्मुदेऽभूत्॥ |
| द्वितीयपादे चतुर्थपादे च | ।।।,।ऽ।,।ऽ।,ऽ।ऽ,ऽ | |
| यवमती १२।१३ इति । | स्यादयुग्मके रजौ रजौ समे चेन्न जरौ जरौ गुरुश्चैवात भरा यवमतीयम् | |
| प्रथमपादे तृतीयपादे च | ऽ।ऽ,।ऽ।,ऽ।ऽ,।ऽऽ | |
| द्वितीयपादे चतुर्थपादे च | ।ऽ। ऽ।ऽ,।ऽ। ऽ।ऽ,ऽ | |
| मञ्जुसौरभम् १२।१३ इति । | यदि विषमे भवतो नजौ जरौ सजसा- समे तु जगौ मञ्जुसौरभम् | |
| प्रथमपादे तृतीयपादे च | ।। ।ऽ।,।ऽ।,ऽ।ऽ | |
| द्वितीयपादे चतुर्थपादे च | ।।ऽ,।ऽ।,।ऽऽ,।ऽ।,ऽ | |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणगणाः। | छन्दसामुदाहरणानि। |
|---|---|---|
| सुन्दरी १०।११ वृत्तिः। | अयुजोर्यदि सौ जगौ युजोः सभरा: लगौ यदि सुन्दरी तदा | |
| प्रथमे तृतीये पादे च | ॥ऽ,॥ऽ,।ऽ।,ऽ | यदवोचदवेक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा। |
| द्वितीये चतुर्थे पादे च | ॥ऽ,ऽ॥,ऽ।ऽ,।,ऽ | अपि कंसहरस्य दुर्वचं पचनस्तद्विदधीत विस्मयम् ॥ |
| इत्यर्द्धसमवृत्तानि समाप्तानि ॥ * ॥ | | |
| अथ विषमवृत्तानि। | | |
| उद्गता | प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम्। यद्यथ भनभगाः स्युरथो सजसा जगौ च भवतीयमुद्गता ॥ | |
| प्रथमे पादे १० | ॥ऽ,।ऽ।,॥ऽ,। | विललास गोपरमणीषु नरपतिनयाप्रभोद्गता। |
| द्वितीये १० | ॥।,॥ऽ,।ऽ।,ऽ | कृष्णनयनचकोरयुगे दधती सुधांशुकिरणोर्म्मिविभ्रमम् ॥ |
| तृतीये १० | ऽ॥,॥।,ऽ॥,ऽ | |
| चतुर्थे १३ | ॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ | |
| अन्यविधोद्गता | प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरम्। यद्यथ भनजलगाः स्युरथो सजसा जगौ च भवतीयमुद्गता ॥ | |
| प्रथमे पादे १० | ॥ऽ,।ऽ।,॥ऽ,। | अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम्। |
| द्वितीये १० | ॥।,॥ऽ,।ऽ।,ऽ | क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः ॥ |
| तृतीये ११ | ऽ॥,॥।,।ऽ।,।,ऽ | इति भारवाबुद्गताभेदः। १२। १॥ |
| चतुर्थे १३ | ॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ | |
| सौरभम् | चयमुद्गता सदृशमेव पदमिह तृतीयमन्यथा। जायते रनभगैर्ग्रथितं कथयन्ति सौरभकमेतदीदृशम् ॥ | |
| प्रथमे पादे १० | ॥ऽ,।ऽ।,॥ऽ,। | परिभूतफुल्लशतपत्रवर्गविहितगन्धविभ्रमा। |
| द्वितीये १० | ॥।,॥ऽ,।ऽ।,ऽ | अस्य हृम हरतीह हरे सलपद्मसौरभकला तवाङ्गता ॥ |
| तृतीये १० | ऽ।ऽ,॥।,ऽ॥,ऽ | |
| चतुर्थे १३ | ॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ | |
| ललितम् | नयुगं सकारयुगलञ्च भवति चरणे तृतीयके। तदुदितसुरमतिभिर्ललितं यदि शेषमस्य सकलं यथोद्गता। | |
| प्रथमे पादे १० | ॥ऽ,।ऽ।,॥ऽ,। | व्रजसुन्दरी समुदयेन मुदितमनसा स पीयते। |
| द्वितीये १० | ॥।,॥ऽ,।ऽ।,ऽ | हिमकरगलितमिवामृतकं ललितं मुरारिमुखचन्द्रविच्युतम्। |
| तृतीये १२ | ॥।,॥।,॥ऽ,॥ऽ | |
| चतुर्थे १३ | ॥ऽ,।ऽ।,॥ऽ,।ऽ।,ऽ | |
| वक्त्रम् | वक्त्रं युग्भ्यां मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्। | |
| प्रथमे पादे ८ | ऽऽऽऽ।ऽऽऽ | वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम्। |
| द्वितीये ८ | ऽऽऽऽ।ऽऽऽ | वल्लवीनां मुरारातेश्चेतोभृङ्गं चकाराेच्चैः ॥ |
| तृतीये ८ | ऽ।ऽऽ।ऽऽऽ | |
| चतुर्थे ८ | ऽऽऽऽ।ऽऽऽ | |
| पथ्यावक्त्रम् | युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम्। | |
| प्रथमे पादे ८ | ऽ।ऽ॥ऽऽ। | रासकालनटव्यास्य कृष्णस्य मधुवासरे। |
| द्वितीये ८ | ऽऽ॥।ऽ।ऽ | आसीन्नोपन्यगाचीर्णा पथ्या वक्त्रमधुस्रुतः ॥ |
| तृतीये ८ | ऽऽऽ॥ऽऽऽ | |
| चतुर्थे ८ | ऽऽऽ॥ऽ।ऽ | |

| छन्दसां वृत्तिनामानि । | | छन्दसां लक्षणानि । | छन्दसामुदाहरणानि । |
|---|---|---|---|
| जघनचपला | | प्राक्प्रतिपादितमर्द्धे प्रथमे प्रथमेतरे च चपलायाः । लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ | |
| प्रथमे चरणे | १२ | ऽऽऽऽ।।ऽ | कृष्णः शृङ्गारपटुर्यौवनमदचञ्चलः सुललिताङ्गः । |
| द्वितीये | १८ | ऽ।।।ऽ।ऽ।।।ऽऽ | आसीद्व्रजाङ्गनानां मनोहरो जघनचपलानाम् ॥ |
| तृतीये | १२ | ऽऽ।ऽ।ऽऽ | |
| चतुर्थे | १५ | ।ऽ।ऽ।।।।ऽऽ | |
| गीतिः | | आर्य्याप्रथमार्द्धसमं यस्या अपरार्द्धमाह तां गीतिम् । | |
| प्रथमे चरणे | १२ | ऽ।।ऽऽऽऽ | केशववंशीगीतिर्लोकमनोहरिधारिणी जयति । |
| द्वितीये | १८ | ऽ।।ऽ।।।ऽ।ऽ।।ऽ | गोपीमानग्रन्थेर्विमोचनी दिव्यगायनाचार्य्या ॥ |
| तृतीये | १२ | ऽऽऽऽऽऽ | अत्र द्वितीयचरणान्तलघोर्गुरुत्वम् ॥ |
| चतुर्थे | १८ | ।ऽ।ऽऽऽ।ऽ।ऽऽऽ | |
| उपगीतिः | | आर्य्यापरार्द्धतुल्ये दलद्वये प्राहुरुपगीतिम् । | |
| प्रथमे चरणे | १२ | ।।ऽ।ऽ।ऽऽ | नवगोपसुन्दरीणां रासोल्लासे मुरारातिम् । |
| द्वितीये | १५ | ऽऽऽऽ।ऽऽऽ | अस्मारयदुपगीतिः स्वर्गकुरङ्गीदृशां गीतिम् ॥ |
| तृतीये | १२ | ऽऽ।।।।ऽऽ | |
| चतुर्थे | १५ | ऽ।।ऽऽ।ऽऽऽ | |
| उद्गीतिः | | आर्य्याशकलद्वितये विपरीते पुनरिहोद्गीतिः । | |
| प्रथमे चरणे | १२ | ऽऽ।ऽ।ऽ।। | नारायणस्य सन्ततमुद्गीतिः संस्मृतिर्भक्त्या । |
| द्वितीये | १५ | ऽऽऽऽ।ऽऽऽ | अर्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः ॥ |
| तृतीये | १२ | ऽऽऽऽऽऽ | |
| चतुर्थे | १८ | ऽ।।ऽऽ।ऽ।ऽ।।ऽ | |
| आर्य्यागीतिः | | आर्य्याप्रागर्द्धसमन्तेऽधिकगुरु तादृगपरार्द्धमार्य्यागीतिः । | |
| प्रथमे चरणे | १२ | ऽऽऽ।।।।ऽ | हर्षाश्रुस्तिमितदृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः । |
| द्वितीये | २० | ।ऽ।ऽऽ।ऽ।ऽ।।ऽऽ | आर्य्यागीतिं भक्त्या गायन्ति श्रीपतेश्चरितसम्बद्धाम् ॥ |
| तृतीये | १२ | ऽऽऽऽऽऽ | लघुगुरुविपर्य्ययरूपप्रस्तारभेदेन बहुविधा आर्य्या भवन्ति ॥ |
| चतुर्थे | २० | ऽऽऽऽ।ऽ।।।ऽऽऽ | |
| पूर्व्वार्द्धे विंशत्या चतुर्विंशत्या वा मात्राणां परार्द्धे षोड़शमात्राणां परे लघुवर्णचतुष्टये सति प्रथमं द्वितीयं वा लघ्वक्षरं प्राप्य आर्य्यायाः सामान्येन यतिनियमः ॥ | | | |
| वैतालीयम् । अपरवक्त्रमित्येके । | | षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तरा । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ | |
| प्रथमे चरणे | १४ | ।।ऽ।।ऽ।ऽ।ऽ | कुसुमेन मदेन चर्चितं तव यन्निन्दति राधिके कुचम् । |
| द्वितीये | १६ | ।।ऽऽ।।ऽ।ऽ।ऽ | मुदमातनुतेऽत्र पञ्चमं तद्वैतालीयं फलं हरेः ॥ |
| तृतीये | १४ | ।।ऽ।।ऽ।ऽ।ऽ | लघुगुरुव्यत्ययेनापि बहुधा भवति ॥ |
| चतुर्थे | १६ | ऽऽऽऽऽ।ऽ।ऽ | |
| औपच्छन्दसकम् | | तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसकं कवीन्द्रहृद्यम् । | |
| प्रथमे चरणे | १६ | ऽऽऽऽ।ऽ।ऽऽ | आतन्वानं सुरारिकान्तास्वौपच्छन्दसकं रुदा विनोदम् । |
| द्वितीये | १८ | ऽऽऽ।।ऽ।ऽ।ऽऽ | कंसं यो निर्जघान देवो वन्दे तं जगतां स्थितिं दधानम् ॥ |
| तृतीये | १६ | ऽऽऽऽ।ऽ।ऽऽ | |
| चतुर्थे | १८ | ऽऽऽ।।ऽ।ऽ।ऽऽ | |
| एतद्वैतालीयभेदः ॥ | | | |

| छन्दसां वृत्तिनामानि। | छन्दसां लक्षणानि। | छन्दसामुदाहरणानि। |
|---|---|---|
| पज्झटिका | प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा। पज्झटिकावपुरत्र विवेकः क्वापि न मध्यगुरुर्गण एकः॥ | |
| प्रथमे चरणे १६ | \|\| \|ऽऽऽऽऽऽ | तरणिसुताविहरत्सुखलालस पज्झटिकाकटिबन्ध। |
| द्वितीये १६ | \|\|\|\|ऽ\|\|ऽ\|\|ऽऽ | मौलिचपलशिखिचन्द्रकवृन्द कालियशिरसि नटत मुकुन्द॥ |
| तृतीये १६ | ऽ\|\|\|\|\|ऽ\|\|ऽऽ | इयं प्रतिपदयमकितषोडशमात्रा लघुगुरुव्यत्ययेनापि बहुधा |
| चतुर्थे १६ | ऽ\|\|\|\|\|\|ऽ\|\|ऽऽ | अस्या नवमी मात्रा च क्वाचित् लघ्वी भवति॥ |
| दोधकिका | मात्रा चतुर्दशक यदि पूर्वं लघुकविरामि। पश्चादेकादशकन्तु दोधकिका द्विगुणेन॥ | |
| प्रथमे चरणे १४ | ऽऽऽ\|\|\|\|\|\| | माई दोधकिपठन शुनि कामिनी काया गोयाल। |
| द्वितीये १२ | ऽ\|ऽऽ\|ऽऽ\| | वृन्दावनघनकुञ्ज चलितो कमलरसाल॥ |
| तृतीये ११ | ऽऽ\|\|\|\|ऽ\| | अस्यार्थः। हे मातः। दोधकिकापाठं श्रुत्वा कश्चित् |
| चतुर्थे ११ | \|\|ऽ\|\|\|ऽ\| | गोपाङ्गना हर्षिता काममपि रसाल चलित कुत्र वृन्दावनघन |
| अस्या अन्त्या मात्रा लघ्वी अयं भ्रष्टभाषया प्रचारः॥ | | कुञ्जे वृन्दावनस्य निविडनिकुञ्जे। राई इति क्वचित् पाठः तत्पक्षे राधिकाया दोधकिकापाठं श्रुत्वा॥ |
| इति मात्रावृत्तानि समाप्तानि॥*॥ | | गुरुलघुव्यत्ययेन बहुधा भवति॥ |

अत्र समवृत्तानि (२४७) सप्तचत्वारिंशदधिकं द्विशतं, अर्द्धसमवृत्तानि (१५) पञ्चदश, विषमवृत्तानि (७) सप्त, मात्रावृत्तानि च (१५) पञ्चदश समुदायेन (२८४) चतुरशीत्यधिकद्विशतसंख्यकानि छन्दांसि लिखितानीति॥*॥

छन्दकपातनः, पुं, (छन्दकेन छद्मना पातयति लोकानिति। पत+णिच्+ल्यु।) छद्मतापसः। इति जटाधरः॥

छन्दोगः, पुं, (छन्दो वेदविशेषं सामेत्यर्थः गायतीति। गै+"गापोष्टक्।" ३।२।८। इति टक्।) सामगः। सामवेदी। इति जटाधरः॥ (यथा, मनुः। ३। १४५।

"यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम्।
शाखान्तगमथाध्वर्य्युं छन्दोगन्तु समाप्तिकम्॥")

छन्दोगपरिशिष्टं, क्ली, (छन्दोगेभ्यः सामगेभ्यः कात्यायनेन मुनिनेत्यर्थः। प्रणीतं यत् परिशिष्टम्। यद्वा छन्दोगस्य कृतं परिशिष्टम्।) कात्यायनमुनिकृतसामवेदिकर्म्मबोधकगोभिलसूत्राणां परिशिष्टशास्त्रम्। इति स्मृतिः॥

छन्दोविचितिः, स्त्री, (छन्दसां विचितिर्यत्र।) श्रुतिच्छन्दसां प्रज्ञापकशास्त्रम्। इत्यमरटीकायां भरतः॥ (यथा बृहत्संहितायाम्। १०४। ६४।

"निपुणमपि बुद्धा छन्दोविचितिं भवति काव्यमेवायतः।
श्रुतिसुखवृत्तमयं मममाह वराहमिहिरोऽत्र॥")

छन्नं, क्ली, (छद्+क्त।) रहः। निर्जनस्थानम्। इति मेदिनी। ने ५॥

छन्नः, त्रि, (छद्+क्त।) छादितः। इति मेदिनी। ने ५॥ (यथा, महाभारते। ४। २०। ८४।

"न यथा न क्षो वीरः न यन्ता मम रक्षकः।
आहतश्च घटेनैवाज्यपात्रे मेनिकाय मे॥")
रहः। इत्यमरः। २। ८। २२॥

छप इ क सर्पे। इति कविकल्पद्रुमः॥ (चुरां-परं-सक-सेट्।) इ क छम्पयति। सर्पो गतिः। इति दुर्गादासः॥

छम, उ अदने। इति कविकल्पद्रुमः। (भ्वां-परं-सक-सेट्। उदित्वात् क्त्वावेट्।) छमति। उ, छमित्वा छान्त्वा। इति दुर्गादासः॥

छमण्डः, पुं, (छमति भक्षयति अन्यदत्तमाहारं पितरं नाशयतीत्यर्थः। छम+बाहुलकात् अण्डन्।) अपितृकः। इत्युणादिकोषः॥ छैमण्डा इति भाषा॥ बन्धुहीनः। इति संक्षिप्तसारे उणादिवृत्तिः॥

छर्द्द क वमने। इति कविकल्पद्रुमः। (चुरां-परं-सक-सेट्।) वमनं वान्तिः। क, छर्द्दयति अन्नं लोकः। इति दुर्गादासः॥ (तथाच, महाभारते। ५। ६६। ४२।

"स्वपन्ति च प्रवर्त्तन्ते च छर्द्दयन्ति च मानवाः॥")

छर्द्दः, क्ली, (छर्द्द+भावे घञ्।) वमनम्। इति हेमचन्द्रः। ३। १३३॥

छर्द्दनं, क्ली, (छर्द्द+भावे ल्युट्।) वमनम्। इति हेमचन्द्रः॥ (यथा, सुश्रुते। ४। १०।

"तथाश्मन्मानापुवितोकोग्रातकीफलैः।
छर्द्दनं मधुरान्विश्च मयका तण्डुलाम्बुना॥")

छर्द्दनः, पुं, (छर्द्दयति नरं पञ्चाङ्गं पीत्वा पुनरुद्गिरतीति। छर्द्द+ल्यु।) अलम्बुषवृक्षः। (छर्द्दयति कटुगन्धेन उद्गिरयतीति। छर्द्द+ल्युट्।) निम्बवृक्षः। इति हेमचन्द्रः॥ मदनवृक्षः। इति भावप्रकाशः॥

छर्द्दापनिका, स्त्री, (छर्द्दिं वमनं आपयति प्रापयतीत्यर्थः। आप+णिच्+ल्यु। ततः स्वार्थे कन्। टापि अत इत्वम्।) ककटी। इति राजनिर्घण्टः॥

छर्द्दिः, स्त्री, (छर्द्द्यतेऽनेनेति। छर्द्द वमने+इन्।) वमिरोगः। वाँति इति भाषा॥ तत्पर्य्यायः। प्रच्छर्द्दिका २ छर्द्दनं ३ वमथुः ४ वमनम् ५ वमिः ६। इति हेमचन्द्रः। ३। १३३॥ छर्द्दिका ७ छर्द्दीका ८ वान्तिः ९ उद्गारः १०। इति राजनिर्घण्टः॥ उत्कासिका ११ छर्द्दनम् १२। इति शब्दरत्नावली॥ तस्या निदानादि यथा —

"दुष्टैर्दोषैः पृथक् सर्व्वैर्बीभत्सालोकनादिभिः।
छर्द्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति।
अकाले चातिमात्रैश्च तथासात्म्यैश्च भोजनैः॥
श्रमाद्भयात्तथोद्वेगादजीर्णात् क्रिमिदोषतः।
नार्य्याश्चापन्नसत्त्वायास्तथातिद्रुतमश्नतः॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात्।
छादयन्नाननं वेगैरर्द्दयन्नङ्गभञ्जनैः॥
निरुच्यते छर्द्दिरिति दोषो वक्त्रं प्रधावितः॥"

तस्याः पूर्व्वरूपं यथा —

"हृल्लासोद्गाररोधौ च प्रसेको लवणस्तनुः।
द्वेषोऽन्नपाने च भृशं वमीनां पूर्व्वलक्षणम्॥"

वातजायास्तस्या रूपं यथा —

"हृत्पार्श्वपीडामुखशोषमूर्द्ध-
नाभ्यर्त्तिकासस्वरभेदतोदैः।
उद्गारशब्दप्रबलं सफेनं
विच्छिन्नकृष्णं तनुकं कषायम्॥
कृच्छ्रेण चाल्पं महता च वेगे-
नार्त्तोऽनिलाच्छर्द्दयतीह दुःखम्॥"

तथा पित्तजायास्तद्रूपं यथा —

"मूर्च्छा पिपासा मुखशोषमूर्द्ध-
ताल्वक्षिसन्तापतमोभ्रमार्त्तः।"

तमस्ततिः, स्त्री, ( तमसस्ततिः समूहः । ) अन्ध-कारसमूहः । इति तमिस्राशब्दार्थे मेदिनी ॥
तमस्विनी, स्त्री, ( तमो विद्यतेऽस्यामिति विनिः ङीप् च । ) रात्रिः । ( यथा, महाभारते । ४ । २१ । ३८ ।
"अद्यप्रमानस्तस्माद् तमस्विन्यामनिन्दिते ! ।
नागोविलमिवाक्रम्य पोथयिष्याम्यहं गिरः ॥")
हरिद्रा । इत्यमरः । २ । ६ । ४१ ॥
तमा, स्त्री, ( तमोऽस्त्यस्यामिति । तम + अच् टाप् च । ) रात्रिः । इति हेमचन्द्रः ॥ तमाल-वृक्षः । इति शब्दचन्द्रिका ॥
तमाः, [ स् ] पुं, राहुः । इति मेदिनी । से, २३ ॥
तमालं, क्ली, (तम्यते काङ्क्ष्यते इति । तमु काङ्क्षा-याम् + "तमिविशिविडिभ्यः कालन् ।" उणां ।१।११७। इति कालन् । ) पत्रकम् । इति राजनिर्घण्टः ॥
तमालः, पुं, ( तमु काङ्क्षायाम् + कालन् । ) वृक्ष-विशेषः । तत्पर्य्यायः । कालस्कन्धः २ तापिच्छः ३ । इत्यमरः । २ । ४ । ६८ ॥ तापिञ्छः ४ । इति भरतः ॥ नीलतालः ५ तमालकः ६ नीलध्वजः ७ कालतालः ८ महाबलः ९ । ( यथा, भागवते । ३ । १३ । ३३ ।
"तमालनीलं सितदन्तकोट्या
क्ष्मामुत्क्षिपन्तं गजलीलयाङ्ग ॥")
अस्य गुणाः । मधुरत्वम् । बल्यत्वम् । हृद्यत्वम् । शिशिरत्वम् । गुरुत्वम् । कफपित्ततृष्णादाह-श्रमभ्रान्तिकरत्वञ्च । इति राजनिर्घण्टः ॥ तिलकम् । ( यथा, कुट्टनीमते । १६ ।
"यस्यास्तुपवनवीथ्यां तमालपत्राणि युवतिवदने च ।
नखरप्रहाररचितं तत्त्वीवादीषु सुरतकलहेषु ॥"
तमालस्तापिच्छवृक्षः युवतिवदनपक्षे तिलक-मिति ॥ ) खड्गः । वरुणवृक्षः । इति मेदिनी । ले, ६७ ॥ श्वेतखदिरः । इति शब्दचन्द्रिका ॥ वृक्षभेदे वंशत्वचि च पुं क्ली । इति लिङ्गादि-संग्रहे अमरभरतौ ॥
तमालकं, क्ली, ( तमालपत्रवत् वर्णेन कायतीति । कै + कः । ) सुनिषण्णशाकम् । इति त्रिकाण्ड-शेषः ॥ ( तमालमेव । स्वार्थे कन् । ) पत्रकम् । इति राजनिर्घण्टः ॥ तेजपात इति भाषा ॥
तमालकः, पुं, क्ली, ( तमाल एव । स्वार्थे कन् ।) तमालवृक्षः । ( यथा, रामायणे । २ । ९१ । ५० ।
"ततः सरलतालाश्च तिलकाः सतमालकाः ।
प्रहृष्टास्तत्र सम्पेतुः कुब्जा भूत्वाथ वामनाः ॥")
वंशत्वक् । इति शब्दरत्नावली ॥
तमालपत्रं, क्ली, ( तमालस्य पत्रमिव वर्णोऽस्या-स्तीति । अर्श आदित्वात् अच् । ) तिलकम् । पत्रकम् । ( यथास्य पर्य्यायाः ।
"पत्रन्तमालपत्रञ्च तथा स्यात् पत्रनामकम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)
तमालवृक्षः । इति मेदिनी । रे, ३०२ ॥ ( तमा-लस्य पत्रम् । यथा, रघुः । ६ । ६४ ।
"तमालपत्रास्तरणासु रन्तुं
प्रसीद शश्वन्मलयस्थलीषु ॥" )

तमालिका, स्त्री, ( तमालाः सन्त्यत्र । तमाल + ठन् । ) ताम्रलिप्तदेशः । इति त्रिकाण्डशेषः ॥ ताम्रवल्ली । भूम्यामलकी । इति राजनिर्घण्टः ॥
तमालिनी, स्त्री, ( तमालो तमालवर्णोऽस्त्यस्या इति । इनिः ततो ङीप् ।) भूम्यामलकी । इति राजनिर्घण्टः ॥ ताम्रलिप्तदेशः । इति हेम-चन्द्रः ॥
तमाली, स्त्री, ( तम + कालन् । गौरादित्वात् ङीप् । ) ताम्रवल्ली । वरुणवृक्षः । इति राज-निर्घण्टः ॥
तमिः, स्त्री, ( तम्यते ग्लायतेऽत्र । तम + "सर्व्व-धातुभ्य इन् ।" उणां । ४ । ११७ । इतीन् । ) रात्रिः । इत्यमरटीकायां भरतः ॥
तमिस्रं, क्ली, (तमोऽस्त्यत्र । "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ । इति निपातनात् साधुः । यद्वा, तमिसा अस्याश्रयत्वेनास्य अच् ।) अन्धकारम् । इत्यमरः ॥ (यथा, महाभारते । ४ । २१ । १७ ।
"यदेतन्नर्त्तनागारं मत्स्यराजेन कारितम् ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् ॥
तमिस्रे तत्र गच्छेथा गन्धर्व्वास्तत्र जानते ॥" )
क्रोधः । इति मेदिनी । रे, ६१ ॥ (नरकविशेषः । यथा, भागवते । ४ । ७ । ४४ ।
"अमङ्गलानाञ्च तमिस्रमुल्वणं
विपर्य्ययः केन तदेव कस्यचित् ॥" )
तमिस्रपक्षः, पुं, ( तमिस्रमन्धकारं तत्प्रधानः पक्षः । ) कृष्णपक्षः । यथा, तमिस्रपक्षत्रुटि-कूटभक्षितमिति श्रीहर्षः ॥
तमिस्रा, स्त्री, ( तमोबहुलमस्ति यस्याम् । "ज्योत्स्नातमिस्रेति ।" ५ । २ । ११४ । इति निपातनात् साधुः । ) अन्धकाररात्रिः । कृष्ण-पक्षनिशा । इत्यमरः ॥ तमोयुक्तरात्रिमात्रम् । इति रायमुकुटः ॥ दर्शरात्रिः । इति वाच-स्पतिः ॥ तमस्ततिः । इति मेदिनी । रे, १६१ ॥ ( यथा, रघुः । ५ । १३ ।
"स्थर्य्ये तपस्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ॥")
तमी, स्त्री, ( तमिः कृदिकारादिति वा ङीप् । ) रात्रिः । ( यथा, माघे । ९ । २३ ।
"दहशेऽपि भास्करकरैर्न यः
स तमी तमोभिरभिगम्य ततान् ॥")
हरिद्रा । इत्यमरः । २ । ६ । ४१ ॥
तमोघ्नः, पुं, ( तमोऽन्धकारं मोहमज्ञानं वा हन्तीति । हन + टक् ।) वह्निः । सूर्य्यः । (यथा, महाभारते । ७ । १४४ । १३६ ।
"स देवशत्रूनिव देवराजः
किरीटमाली व्यधमत् समन्तात् ।
यथा तमांस्यभ्युदितस्तमोघ्नः
पूर्व्वप्रतिज्ञां समवाप्य वीरः ॥" )
चन्द्रः । बुद्धः । केशवः । शम्भुः । इति मेदिनी । ने, ७१ ॥
तमोज्योतिः, [ स् ] पुं, ( तमसि ज्योतिर्यस्य ।) ज्योतिरिङ्गणः । इति शब्दरत्नावली ॥

तमोनुत्, [ द् ] पुं, ( तमोऽन्धकारं नुदतीति । नुद + क्विप् ।) अग्निः । सूर्य्यः । चन्द्रः । दीपः । इति शब्दरत्नावली ॥ (तमोनाशके, त्रि । यथा महाभारते । १३ । १६६ । ८ ।
"एवमुक्तस्तदाचिर्वे तमोनुदभवत्प्रभो ।
अभवत् सौम्यभावाच्च सोमवत् प्रियदर्शनः ॥")
तमोनुदः, पुं, ( तमोऽन्धकारं नुदतीति । नुद + "इगुपधज्ञेति ।" ३ । १ । १३५ । इति कः । ) सूर्य्यः । इति शब्दरत्नावली ॥ (अग्निः । चन्द्रः । इति विश्वः ॥ यथा, रघुः । ३ । ३३ ।
"नरेन्द्रकन्यास्तमवाप्य सत्पतिं
तमोनुदं दक्षसुता इवाबभुः ॥"
प्रकाशविप्रेरकः । यथा, मनुः । १ । ६ ।
"ततः स्वयम्भुर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥")
तमोपहः, पुं, (तमोऽन्धकारं अपहन्तीति । अप + हन् + "अपे क्लेशतमसोः ।" ३ । २ । ५० । इति डः । ) सूर्य्यः । चन्द्रः । बुद्धः । अग्निः । इति मेदिनी । है, ३० ॥ ( अज्ञाननाशके, त्रि । यथा, किरातार्ज्जुनीये । ५ । २२ ।
"आगमादिव तमोपहादितः
सम्भवन्ति मतयो भवच्छिदः ॥" )
तमोभित्, [ द् ] पुं, ( तमस्तिमिरं भिनत्ति खण्डयति प्रकाशनेन नाशयतीति । भिद + क्विप् । ) खद्योतः । इति शब्दमाला ॥
तमोमणिः, पुं, ( तमसि अन्धकारे मणिरिव । ) खद्योतः । इति त्रिकाण्डशेषः ॥ गोमेदकमणिः । इति राजनिर्घण्टः ॥
तमोलिप्ती, स्त्री, ( तमसा लिप्यते इति । लिप + क्तः निपातनात् ङीप् । ) देशविशेषः । तमो-लुक इति भाषा ॥ तत्पर्य्यायः । ताम्रलिप्तः २ वेलाकूलम् ३ तमालिका ४ । इति शब्दरत्ना-वली ॥ ताम्रलिप्तम् ५ ताम्रलिप्ती ६ । इति त्रिकाण्डशेषः ॥ दामलिप्तम् ७ तमालिनी ८ स्तम्बपूः ९ विष्णुगृहम् १० । इति हेमचन्द्रः ॥
तमोविकारः, पुं, (तमसैव विकारो यत्र ।) रोगः । इति राजनिर्घण्टः ॥
तमोहरः, पुं, ( तमो हरतीति । हृ + अच् । तमसः हर इति वा ।) चन्द्रः । इति शब्दरत्ना-वली ॥ ( अग्निः । सूर्य्यः । इति युक्तिकल्पत-रुः ॥ )
तम्पा, स्त्री, ( तम्पति गच्छतीति । तम्प + अच् । पृषोदरादित्वात् साधुः । ) गौः । इति हेम-चन्द्रः । ४ । ३३ ॥
तम्ब, गतौ । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) ओष्ठ्यवर्गशेषोपधः । तम्बति । इति दुर्गादासः ॥
तम्बा, स्त्री, ( तम्बति गच्छतीति । तम्ब + अच् ।) गौः । इति हेमचन्द्रः । ४ । ३३२ ॥
तय, ङ गतौ । रक्षे । इति कविकल्पद्रुमः ॥ ( भ्वां-आत्मं-सकं-सेट् । ) ङ, तयते । इति दुर्गा-दासः ॥

यः खड्गे जायते शब्दो नखदण्डादिनाहते ।
स ध्वनिस्तुलनामानं ज्ञानमस्त्वविशन्विदम् ॥
मध्वाद्या निपुणैः खड्गे सम्भाषन्तेऽपि कत्रिमाः ।
अन्त्यावक्रत्रिमौ ज्ञेयौ तावेव सहजाविति ॥
शतमङ्गानि चत्वारि रूपाणि जायतस्तथा ।
त्रिंशन्नेत्राणि जानीयादरिष्टानि तथैव च ॥
भूमिश्च द्विविधा ज्ञेया ध्वनिरष्टविधो मतः ।
मानन्तु द्विविधं प्रोक्तमित्येषां संग्रहो मतः ॥"
अथ खड्गस्य शताङ्गगणना लौहार्णवे ।
"रूप्यस्वर्णगजोरुवृकदमनस्थूलाङ्गच्छायारुण-श्वेता-
म्भोजगदातिलानलकणग्रन्थिस्थिरातित्तिराः ।
मालाजीरकषट्पदोर्द्ध्वमरिचधालाश्ववर्हाञ्जन-
चौद्रचुद्रकमण्डिकातुषयवव्रीहिक्षुमाषर्षपाः ॥
सिंहीलखलगोशिराशिवनखयाद्याचि केशोपल-
श्रोणीकाककपालमन्तुवरीविम्बीफलौसर्षमाः ।
नीलीरक्तवचारखोनसुमनाजिह्नीशमीरोहित-
प्रोष्ठीमारिषमार्कवाखरतडिन्नादिशृङ्गाशराः ॥
दूर्व्वाविल्वमसूरटुण्डुकाश्टीमार्जारिकाकेतकी-
म्नर्वाचकलायचम्पकचलान्यग्रोधवंशाग्नगाः ।
व्यैष्ठीजालपिपीलिकानलरजः कुशाण्डरोम-
स्पृहो
कर्कन्धुर्वकुलारनालमहिषखड्गांसुवक्रा इति ॥
प्रोक्ता लौहविशारदेन मुनिना खड्गस्य भेदाः
क्रमात् ॥"
अथ तस्य चत्वारि रूपाणि ।
"नीलः कृष्णः पिशङ्गश्च धूम्रश्चेति चतुर्विधः ।
वर्णप्रकर्षः खड्गानां कथितो मुनिपुङ्गवैः ॥"
अथ चतस्रो जातयः ।
"ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति चतुर्विधः ।
घातिभेदो विनिर्द्दिष्टः खड्गानां मुनिपुङ्गवैः ॥"
अथ त्रिंशन्नेत्राणि ।
"चक्रं पद्मं गदा शङ्खो डमरुर्वज्रस्रुक्स्रुवः ।
छत्रं पताका वीणा च मत्स्यलिङ्गध्वजेन्दवः ॥
कुम्भः शूलश्च शार्दूलः सिंहः सिंहासनं गजः ।
हंसो मयूरो जिह्वा च दशनः खड्ग एव च ॥
पुत्त्रिका चामरं शैलः पुष्पमाला भुजङ्गमः ।
त्रिंशदेतानि नेत्राणि खड्गानां कथितानि वै ॥"
अथ त्रिंशदरिष्टानि ।
"छिद्रं काकपदं रेखा भिन्नं भेकश्च सूचिकाः ।
विड़ालः शर्करा नीली मशको भृङ्गसूचिके ॥
त्रिविन्दुः कालिका दारी कपोतः काक एव च ।
खर्परः शकली क्रोड़ी कुशपत्र कजालिके ॥
करालकङ्कखर्जूरश्टङ्गपुच्छखनित्रकम् ।
लाङ्गलं वड़िशाखाश्च मुनिना तत्त्ववेदिना ॥
प्रोक्तान्येतान्यरिष्टानि खड्गानां त्रिंशदेव हि ॥"
अथ द्विविधा भूमिः ।
"दिव्यभौमविभागेन भूमिस्तु द्विविधा भवेत् ।"
अथाष्टधा ध्वनिः ।
"हंसकांस्याब्धशङ्खानां काकतन्त्रीखराशनाम् ।
ध्वनयोऽष्टविधाः प्रोक्ता नागार्जुनमुनेर्मताः ॥"
अथ द्विविधं मानम् ।
"उत्तमाधमभेदेन मानं तद्द्विविधं भवेत् ।

इति प्रोक्तानि सूत्राणि खड्गानां ज्ञानहेतवे ॥
एतानि तत्त्वतो ज्ञात्वा भवेन्नृपतिपूजितः ॥"
इति सूत्राध्यायः ॥ * ॥
तत्र प्रथमतोऽङ्गानां लक्षणानि निबोधत ॥
लौहप्रदीपे ।
"रूप्यपत्त्रसमा भूमिरङ्गं श्वेतं प्रतीयते ।
जर्द्धं तत्तु महाम्लेच्छं रूप्यवज्रमुदन्ति तम् ॥
एष खड्गवरो दद्याल्लक्ष्मीमायुर्यशो वलम् ॥१॥
स्वर्णरेखा वली तन्वी यद्भूमौ निकषोपमा ।
स्वर्णवज्रमिति प्राहुरायुर्लक्ष्मीजयप्रदम् ॥२॥
गजशुण्डाकृतिर्भूमौ छायायामङ्गसम्भवः ।
गजवज्रमिति प्राहू रक्तसर्पं तु तद्दिशेत् ॥
ज्वरादियाधिशमनं तस्य प्रक्षालनाम्भसा ।
अपि क्षीणोऽपि भूपालस्तद्धीर्य्यात् साधयेन्
महीम् ॥३॥
एरण्डवीजप्रतिममङ्गं भूमिः सितेतरा ।
वृहद्वज्रमिदं नाम्ना शत्रुदर्पक्षयङ्करः ॥
एतस्य स्पर्शमात्रेण नरः सम्यग्विसुच्यते ।
महिषाखरमिदं वज्रं केचिदाहुर्मनीषिणः ॥४॥
अङ्गं दमनपत्त्राभं खड्गे यस्मिन् प्रतीयते ।
विद्याद्दमनवज्रञ्च तज्ज्ञेयं द्विविधं बुधैः ॥
नीला शुभ्रा भवेद्भूमिस्तत्र नीला गरीयसी ।
तस्मिन् पर्य्युषितं तोयं गन्धे दमनकोपमम् ॥
तत्प्रभावान्महीपालः कृत्स्नां पृथ्वीं हि साध-
येत् ॥५॥"
शार्ङ्गधरस्य ।
"एका स्थूला चिता रेखा भूमिर्नीला दृढ़ा यदि ।
स्थूलाङ्गमङ्गवज्रं तद्विद्याल्लक्ष्मीयशःप्रदम् ॥
एतत्तुच्छते भवेच्छ्रीयः स्थूलश्चिरतरस्थितिः ।
एतं महान्तमपरे वदन्ति खड्गकोविदाः ॥६॥
छायायां दृश्यते भूमौ अङ्गञ्च प्रतिविम्बितम् ।
अङ्ग॰ . भवेत्तस्य द्विधाभूमिः सितासिता ॥७॥"
लौहप्रदीपेऽपि ।
"निरङ्गं रूप्यपत्त्राभमीषन्मणिनिभञ्च यत् ।
दुर्लभं तन्महाम्लेच्छं कान्तलौहं प्रचक्षते ॥
छाया भूमिर्भवेत् स्वच्छा पीता वज्राङ्गसङ्गता ।
छायावज्रमिति प्राहुस्तत्तुच्छते मोह उच्यते ॥"
प्रदीपेऽपि ।
"छाया भूमिः सुवर्णाभमीषच्छुक्लाङ्गसङ्गतम् ।
डाहुलीवज्रकं विद्यात् कालसंज्ञमथापरे ॥८॥
अरुणं सूक्ष्ममूर्द्धचेदङ्गं भूमिः सितेतरा ।
अरुणाखरमिदं वज्रं शत्रुदर्पनिसूदनम् ॥
सूर्य्यांशुस्पर्शमात्रेण वह्निरूपां वमेत् शिखाम् ।
तस्य स्पर्शनमात्रेण महाकोषः स्फुटेन्निशि ॥
दुर्लभं तन्मनुष्याणां भाग्यैः क्वापि लभ्यते ।
तद्योजनसहस्रस्य रिष्टं नाशयति ध्रुवम् ॥९॥
श्वेताश्चितो यदा रेखा चाम्लाद्दुपलक्ष्यते ।
श्वेताङ्गमिति तद्विद्यादृयशोलक्ष्मीवलप्रदम् ॥१०॥
अम्भोजदलसङ्काशमङ्गं भूमिः सितेतरा ।
अम्भोजवज्रं तज्ज्ञेयं कथितं मनिपुङ्गवैः ॥११॥
अङ्गं यस्य गदाकारं भूमिश्चैव सितेतरा ।
गदावज्रमिदं ब्रूयात् तत्तुच्छते मूलसम्भवः ॥१२॥

अङ्गं छायातिलाकारं भूमिश्चैव सितासिता ।
तिलवज्रमिदं ज्ञेयं लक्ष्मीवलयशःप्रदम् ॥
तत्तुच्छते तिलतैलाभा वसा प्रच्यवतेऽधिकम् ॥१३॥
धूम्रवर्णा भवेद्भूमिरङ्गं वह्निशिखोपमम् ॥
अग्निवज्रमिदं ज्ञेयं शत्रूणां दाहकारकम् ।
अत्र शीतोदकं न्यस्तं तप्तं भवति च क्षणात् ॥
शाणे वह्निं वमेद्वस्तु तथा सूर्य्यांशुसङ्गमात् ।
तत्तुच्छते वलवान् दाहो दग्धवच्च व्रणो भवेत् ।
एतत् परमभाग्येन लभ्यते धरणीतले ॥१४॥
भूमिः चिता तिला वापि अङ्गञ्चेत् पिप्पली-
प्रभम् ॥
कणावज्रमिदं ज्ञेयमन्तर्दाहस्तु तत्तुच्छते ॥१५॥
छायाभूमिर्यदैवाङ्गं दृश्यते ग्रन्थिसञ्चयः ॥
ग्रन्थिवज्रमिदं ज्ञेयं वैरिपक्षविनाशनम् ।
तत्तुच्छते वलवान् दाहस्तृषा च ज्वर एव च ॥१६॥
शालपर्णीदलाकारमङ्गं छायासिपुत्त्रिका ।
स्थिरावज्रमिदं प्राहुस्तत्तुच्छते वेपथुर्भवेत् ॥१७॥
यदा तित्तिरिपक्षाभमङ्गं भूमिः सितेतरा ।
एतत्तित्तिरिवज्रं स्यात् तत्तुच्छते वहुवेदनम् ॥१८॥
घनमालासमा यस्मिन् माला खड्गे प्रदृश्यते ।
मालाङ्गमिति तद्विद्यात्तत्तोयं गन्धवद्भवेत् ॥
अत्र तप्तोदकं न्यस्तं शीतं भवति तत्क्षणात् ।
एष दाहमपीतानाम्रते पित्तदाहातुराणाम् ॥
भवेत् परमभैषज्यं भाग्यैनैतद्धि लभ्यते ॥१९॥
यदा जीरकसङ्काशमङ्गं भूमिः सितासिता ॥
एतज्जीरकवज्रं स्यात्तत्तुच्छते तत्क्षणाज्ज्वरः ॥२०॥
भूमिः सितासितश्चेत्रा अङ्गं भृङ्गाभमिष्यते ॥
तत्र चेन्मध्यमन्यस्तं शैत्यमाप्नोति केवलम् ।
एतद्भ्रमरवज्रं स्यात्तत्तुच्छते स्याद्विसूचिका ॥२१॥
जर्द्धगं कपिलाभासमङ्गं यस्मिन् प्रतीयते ।
जर्द्धवज्रमिदं प्राहुर्विषवेगनिसूदनम् ॥"
लौहप्रदीपेऽपि ।
"जर्द्धगं कपिलाभासमङ्गं यस्मिन् प्रतीयते ।
लाङ्गलाङ्गन्तु तद्विद्यात् स्पर्शे तस्याहिनाशनम् ॥
२२ ॥
अङ्गं मरीचसङ्काशं भवेद्भूमिः सितेतरा ।
मरीचाङ्गमिदं वज्रं तत्तुच्छते कटुरसता ॥
तत्प्रक्षालनतोयेन नश्यन्ति मीनसादयः ॥२३॥
यदा सर्पफणाकारमङ्गं भूमिस्तु निर्म्मला ॥
भुजङ्गवज्रं तद्विद्यात्तत्तुच्छते विषवह्नता ।
तस्य स्पर्शनमात्रेण भेकः प्राणैर्विसुच्यते ॥
एकस्यास्य प्रसादेन कृत्स्नां शास्ति महीं नृपः ।
२४ ।
यदाश्वखुरसङ्काशमङ्गं भूमिस्तु निर्म्मला ॥
अश्वाङ्गमिति तं विद्यात् खड्गं परमदुर्लभम् ।
तस्य संयोगमात्रेण वाजी मन्दोऽपि धावति ॥
तस्य क्षालनतोयेन ह्यानां रोगनाशनम् ।
एतत्तुच्छते भ्रमः मूर्च्छा दाहश्च भ्रम एव च ॥२५॥
मयूरपिच्छसदृशमङ्गं भूमिः सितेतरा ।
वर्हाङ्गमिति तं विद्यात्तत्तुच्छते वान्तिरिष्यते ॥
सर्पाणामिह सर्व्वेषामस्य स्पर्शाद्विच्युता ।
एतदेव नृपतिभिर्भाग्यैः क्वापि लभ्यते ॥२६॥

विद्यात् केतकवज्रं तत् वाराणससमुद्भवम् ॥”७७
लौहप्रदीपस्य ।
“अङ्गं सूत्रातन्तुनिभं भूमिर्मूर्वादलच्छविः ।
घ्राणेन वमते शुक्ला शिखां मौर्वी भवेत्ततः ॥
मौर्व्याङ्गमिदसतुष्टं यशःकीर्त्तिबलावहम् ॥७८॥
लिङ्गं तीक्ष्णं खरं गाढ़ं घ्राणे वह्निर्व्वमेत् कणम् ॥
छिनत्त्यन्यविधं लौहं वज्राङ्गमिति तद्वदेत् ॥७९॥
कलायपुष्पसदृशमङ्गं भूमिः सितासिता ।
कलायवज्रं जानीयात् तत्क्षते पाकः दृश्यते ॥८०॥
अङ्गं चम्पकपुष्पाभं भूमिः कृष्णा तथा सिता ।
शिखां घ्राणे वमेच्छीतं तिक्तं तस्य जलं भवेत् ।
इदं चम्पकवज्रं स्यात् सर्व्वत्र विजयप्रदम् ॥८१॥
अङ्गं बलाहलसमं भूमिः शुक्ला तथेतरा ।
बलावज्रमिदं ज्ञेयं नानाभावं भवेद्द्रुतम् ॥
इत्ययं वातरोगाणां नाशने परमौषधम् ॥८२॥
अङ्गं पटारोहसमं भूमिर्व्वटदलच्छविः ।
वटवज्रमिदं ज्ञेयं खरं खड्गाधमं बुधैः ।
एतस्य स्पर्शमात्रेण नरो मुच्येत सम्पदा ॥८३॥
वंशनीलीसमा भूमिः खरधारा सिताकृतिः ।
वंशाङ्गमिति जानीयाद्वंशवृद्धिकरं परम् ॥८४॥
भूमिः शालदलाकारा अङ्गं लघु सितासितम् ।
शालाङ्ग एष खड्गः स्यात् पूज्यः सर्व्वार्थदायकः ।
अयं घ्राणे वमेद्वह्निं धारा चाप्यथवा भवेत् ॥८५॥
भूमिः सितासिता वापि अङ्गं ज्येष्ठीसमं लघु ।
ज्येष्ठीवज्रमिदं निन्द्यं न स्पृश्यं वा हितेच्छुभिः ॥
८६ ॥
पुराणजालसदृशमङ्गं भूमिः सितासिता ॥
जालवज्रमिदं पूज्यं शत्रुसम्पत्तिनाशनम् ।
यदि घ्राणे वमेन्नीलां शिखां वह्निं वमेच्च वा ॥
तदैव दुर्लभः खड्गो नान्यथा भयहेतुकः ॥८७॥
अङ्गं पिपीलिकाकारं भूमिर्धूम्रा तथासिता ॥
पिपीलिकाङ्ग इत्येष तत्क्षते कण्डुसम्भवः ।
स्वयं यदि भवेद्धूम्रः घ्राणे पूज्यतमस्तदा ॥८८॥
नलपत्रसमा भूमिरङ्गन्तत्कुसुमोपमम् ।
नलाङ्गमिति जानीयाद्भर्त्तुः सर्व्वार्थसाधकः ॥
८९ ॥
निरङ्गा निर्म्मला भूमिर्घृष्टं दृष्टं वमेद्व्रणः ।
दृढ़ा धारा भृशं स्थूला आघातं सहते न च ॥
रजोवज्रमिदं निन्द्यं शत्रूणां विजयावहम् ॥९०॥
कुष्माण्डबीजसदृशमङ्गं भूमिः सितासिता ॥
कुष्माण्डवज्रं जानीयात्तत्क्षते वेगनिग्रहः ॥९१॥
अङ्गं शरोमसदृशं भूमिर्धूम्रा सितासिता ।
रोमाङ्गमिति जानीयात्तत्क्षते पिड़कोद्गमः ॥९२॥
भूमिः स्नुहीदलसमा अङ्गं तत्कण्टकोपमम् ॥
धारा तीक्ष्णा रवस्तीक्ष्णो लघुमानं खरा स्पृशा ।
सुधाङ्गः खड्ग इत्येष तत्क्षते दाहतृड्भ्रमाः ॥
मुखाक्षिकर्णनासानां दाहः पाकश्च जायते ।
अयं यदि च सर्पाणां फणास्वपरि विश्यते ॥
फणाविदारमाप्नोति सर्पो लोटयते शिरः ।
अस्य धावनतोयेन कुष्ठरोगविनाशनम् ॥९३॥
कर्कन्धुदलपृष्ठाभा भूमिरङ्गन्तु तत्समम् ।
कर्कन्धुवज्रं जानीयात्तत्क्षते दाहनाशनम् ॥
एष खड्गाधमस्त्याज्यो धेतया यदि विद्विषः ॥
९४ ॥
रङ्गं वकुलपुष्पाभं भूमिस्तत्फलसन्निभा ॥
वकुलाङ्गमिदं पूज्यं घ्राणे सुरभिगन्धवत् ।
तन्नास्ति जगतीमध्ये यदनेन न साध्यते ॥९५॥
अङ्गं संमिश्रितं यस्मिन्न किञ्चिद्व्यक्तमीक्ष्यते ।
सर्व्वेषां दर्शनं वापि तीक्ष्णधारः खरस्वरः ॥
एष काञ्जिकवज्रः स्याद्यत्नाद्देवोपलभ्यते ।
नैनं प्राप्यापि वर्द्धन्ते श्रेयाश्चित्रादयोऽपि च ॥
९६ ॥
भूमिः कृष्णा निरङ्गा चेद्धारा तीक्ष्णा दृढ़ापि च ।
आघातं सहते घोरं रक्तं स्पर्शेन यो विशेत् ॥
घ्राणेन वह्निं वमति ध्रुवं वाप्यतिपर्य्ययात् ।
महिषाङ्गः स वै खड्गः पृथिव्यां नातिदुर्लभः ॥
९७ ॥
अत्यन्तनिर्म्मला भूमिः शरीरं प्रतिविम्बितम् ।
धारा तीक्ष्णा स्वरस्तीक्ष्णः स्वच्छाङ्गं तद्विनि-
र्द्दिशेत् ॥९८॥
तस्मिन् यदा भवेद्रेखा ऊर्द्ध्वा शतवारणकं तदा ॥९९
अस्मिन्नपि भवेद्वक्रा रेखा वक्राभिधन्तु तत् ॥१००॥
एतच्चितयमुद्दिष्टं खड्गानां प्रवरं बुधैः ।
प्रायशो लभ्यते लोके यदि सर्व्वगुणावहम् ॥
इतीदं निखिलं प्रोक्तं वज्राणां लक्षणं मया ।
प्रयत्नैर्लिखितं यत्तं सर्व्वेषां हितकाम्यया ॥
इतः परन्तु लौहानां लक्षणं यत्र लक्ष्यते ।
तस्य दासी भवाम्येष प्रतिज्ञेति कृता मया ॥
द्विलिङ्गमिश्रमालोक्य मिश्राङ्गमिति निर्द्दिशेत् ।
सर्व्वेषामङ्गमालोक्य सर्व्वाङ्गमिति निर्द्दिशेत् ॥”
इति खड्गपरीक्षायामङ्गाध्यायो द्वितीयः ॥*॥
खड्गस्य रूपाणि यथा,—
“नीलीकलायकुसुमच्छविशङ्खनाभा
या चन्द्रनीलमणिकाचमणिप्रभा च ।
भूमिश्च या मरकतप्रतिमावभासा
खड्गस्य नीलमिति रूपमिदं वदन्ति ॥
तत्र चेन्निन्दितान्यङ्गान्यरिष्टानि वहून्यपि ।
दृश्यन्ते वहुदोषापि तथापि गुणवत्तरम् ॥१॥
या कालकाम्बुदमसीरसकालसर्प-
शृङ्गान्धकारकचभारसमा विभाति ।
भूमिश्च या भ्रमरवन्धुसमावभासा
खड्गस्य कृष्णमिति रूपमिदं वदन्ति ॥
अत्र नेत्राणि सम्पत्तेर अरिष्टान्यशुभानि च ।
साधारणमिदं रूपं प्राह नागार्ज्जुनो मुनिः ॥२॥
या प्राहृषेण्यनवभेकसमानवर्णा
गोमेदरत्नसदृशापि च यस्य भूमिः ।
खड्गस्य पिङ्गमिति रूपमिदं वदन्ति
भर्त्तुर्य्यशोबलधनक्षयकारणाय ॥३॥
या मन्दधूमसदृशा च शिरीषपुष्प-
तुल्या विभाति मलिनापि च खड्गभूमिः ।
नागार्ज्जुनो वदति धूम्रमिदं हि रूपं
भर्त्तुर्य्यशोबलधनावलिवर्द्धनाय ॥४॥
द्विरूपं मिश्रितं कृत्वा शङ्करं प्रवदेद्बुधः ।
त्रिभी रूपैः समेतन्तु खड्गं त्रिपुरसञ्ज्ञितम् ॥
रूपैश्चतुर्भिः संयुक्तं चतुरं खड्गमुत्तरम् ॥”
इति लौहार्णवस्य खड्गपरीक्षायां वर्णा-
ध्यायस्तृतीयः ॥ * ॥
“जातिश्चतुर्व्विधा प्रोक्ता खड्गानां या पुरा मया ।
सम्प्रत्यपि प्रयत्नेन तासां लक्षणमुच्यते ॥
शुद्धाङ्गः शुद्धवर्णश्च सुनेत्रः सुस्वरश्च यः ।
मृदुस्पर्शः सुसन्धेयस्तीक्ष्णधारो महागुणः ॥
खड्गं ब्राह्मणजातिं तं प्राह नागार्ज्जुनो मुनिः ।
अस्य क्षते भवेच्छोथो घोरः सर्व्वाङ्गगोचरः ॥
मूर्च्छा पिपासा दाहश्च ज्वरो मृत्युश्च जायते ।
अदृष्टं निष्फलाकारकृताहैरात्रिन्दिवोषितम् ।
मलिनत्वं न सम्प्राप्तं निर्म्मलं कुरुते परम् ।
तरुणादित्यकिरणस्पर्शादिव दृशि स्थितः ॥
दहेत् सर्व्वं न तु करं पुरुषस्य हि धारिणः ।
नायकप्रकारमात्रेण खरतां व्रजति स्फुटम् ॥
एष खड्गवरः सर्व्वमरिष्टं नाशयेद्ध्रुवम् ।
अस्य प्रसादात् पुरुषस्त्रिलोकामपि साधयेत् ॥
तस्मादेष मनुष्याणां सुलभो न हि भूतले ।
दृश्यन्ते प्रायशः सर्व्वे कुशद्वीपे हिमालये ॥१॥
धूम्रवर्णं महासारं तीक्ष्णधारं खरस्वरम् ।
सर्व्वाघातसहं सर्व्वनेत्रवर्ण्यस्वराकारम् ॥
खड्गं क्षत्त्रियजातिं तं जानीयात् खड्गकोविदः ।
अस्य क्षते भवेद्दाहतृष्णानाशो ज्वरो भ्रमः ॥
मृत्युश्च जायते घ्राणे वमेद्वह्निकणान् बहून् ।
संस्कारे चाप्यसंस्कारे नैर्म्मल्यं तस्य लक्ष्यते ॥
घ्राणेऽप्यघ्राणे खरता कर्हि चात्यन्ततीक्ष्णता ।
रक्तस्पर्शनमात्रेण विशेदन्तरमन्तरम् ॥
अयं खड्गवरः पूज्यो मनुष्यैरपि लभ्यते ॥२॥
नीलवर्णः कृष्णवर्णः संस्कारे निर्म्मलो भवेत् ॥
घ्राणेन खरता चास्य घाततुल्यं निहन्ति ।
वैश्यजातिरयं खड्गः क्षते त्वक्कान्तदर्शनम् ॥
नात्युत्कृष्टो नातिहीनं सर्व्वत्रैवोपलभ्यते ॥३॥
सजलाम्भोदसङ्काशः स्थूलधारो मृदुस्वरः ॥
संस्कारे चैव मलिनः घ्राणे चापि खरेतरः ।
शूद्रजातिरयं खड्गः क्षते नाल्पापि वेदना ॥
दूरादेषोऽधमस्त्याज्यो यदीच्छेद्धितमात्मनः ।
प्रायशः सर्व्वलोकेषु स्वयमेवोपदृश्यते ॥४॥
द्वयोर्लक्षणमालोक्य जारजं खड्गमादिशेत् ।
त्रयाणां लक्षणेनैव त्रिजातिं खड्गमादिशेत् ।
चतुर्णां लक्षणेनैव जातिसङ्करमुच्यते ॥”
इति लौहार्णवस्य खड्गपरीक्षायां जात्य-
ध्यायः ॥ * ॥
अथ त्रिंशन्नेत्राणां लक्षणानि ।
“चक्राकारं यदा नेत्रं खड्गस्याङ्के प्रदृश्यते ।
तं चक्रनेत्रं जानीयात् भर्त्तुः सर्व्वार्थसाधनम् ॥
अनेनैकेन खड्गेन कृत्स्नां साधयते महीम् ॥१॥
प्रफुल्लपद्मसङ्काशं नेत्रं पद्मदलोपमम् ॥
यदि वा दृश्यते खड्गे पद्मनेत्रं समादिशेत् ।
अयं खड्गवरो यत्र तत्रैव कमलालया ॥२॥
ऊर्द्ध्वा स्थूला यदा रेखा गदाकारा प्रतीयते ।
गदानेत्रमिदं विद्धि सर्व्वशत्रुनिसूदनम् ॥३॥
शूलाकारं यदा नेत्रं खड्गमध्ये विदृश्यते ।

अरिष्टमेकमेव स्यादिररिष्टं शुभावहम् ।
अन्योन्यमशुभं हन्याद्विषस्य हि विषं यथा ॥
एकमारभ्य सप्तान्तमरिष्टं ग्राह्य नान्यथा।
यथोत्तरं द्विगुणितं फलमाहुर्मनीषिणः ॥
इति खड्गपरीक्षायामरिष्टाध्यायः षष्ठः ॥६॥
अथ द्विविधा भूमिः ।
दिव्यभौमविभागेन भूमिर्या द्विविधा मता ।
दिव्या दिवि समुद्भूता भौमा भूमिसमुद्भवा ॥
तल्लक्षणमशेषेण लिख्यते तन्निबोधत ।
देवदानवयोर्मध्ये खड्गास्त्वरिभृत् पुरा ॥
ते खड्गाः पुण्यदेशेषु केषु केषु प्रतिष्ठिताः ॥
दिव्यलक्षणं यथा,—
ये खड्गाः स्थूलधारा भृशमतिलघवो निर्म्मलाङ्गाः सुनेत्रा
ये दिव्याखास्त्ररूपाः सुविमलतनवश्चाप्यसंस्कारयोगात् ।
दुर्भेद्या दुर्घटाश्च ध्वनिगुणगुरवो यत्पतते दाहपाकौ
ते दिव्याः कुर्वतेऽमी कुलधनविजयश्रीयशोवृद्धिमायुः ॥१॥
अथ भौमलक्षणं वृद्धहारीते ।
पूर्व्वं महेशेन विषाणि यानि
भुक्तानि तेषां पतितास्तु विन्दवः ।
यस्मिन् प्रदेशे च स स एव देशः
कालायसाभाकरतां जगाम ॥
पुरान्तं क्षीरसमुद्रमध्या-
दुत्पाद्य संगृह्य यशः सुरेन्द्राः ।
तद्विन्दवो यत्र निपेतुरेव
शुद्धायसाभाकरतां जगाम ॥
ये विषोत्था भृशङ्काला: खराङ्गाः सम्भवन्ति हि।
मूर्च्छादाहज्वरानाहशोकहिक्कावमीकराः ॥
येऽस्तोत्थाः कर्वुराङ्गा मन्दाङ्गाः संभवन्ति च।
वलीपलितमालिन्यजरायाधिविनाशनाः ॥
यत्रैव पतितं यत्तु तत्तदाकरताङ्गताः ॥
तद्यथा,—
वाराणसीमगधसिंहलभूमिभागे
नेपालभूमिषु तथाङ्गमहीप्रदेशे ।
सौराष्ट्रिकेऽन्यतरधन्यमहीविभागे
शुद्धायसां हतिवराः प्रवदन्ति जन्म ॥
तद्यथा,—
वाराणसेयाः सुस्निग्धास्तीक्ष्णधाराः सदङ्गिनः ।
लघवः सुखसन्धेया ज्ञेयाश्चाभेद्यशालिनः ॥
मागधाः कर्कशाः स्थूलधारा गूढतराङ्गिनः ।
गुरवो दुःखसन्धेयाः खड्गा ज्ञेया विचक्षणैः ॥
नेपालदेशप्रभवा निरङ्गा निश्चलाश्च ये ।
ज्ञेयाः सदङ्गा मलिना लघवः स्थूलधारिणः ॥
कालिङ्गा गुरवः खच्छा यत्ताङ्गास्तनुहेतवः ।
सौराष्ट्रा निर्म्मलाः स्निग्धाः सुयत्ताङ्गा भृशं खराः ॥
सिंहलद्वीपजातानां चतुर्द्धा भेद उच्यते ।
केचित् सदङ्गा गुरवः कर्कशाः स्निग्धधारिणः ॥
केचित् सदङ्गा लघवः सुस्निग्धा स्थूलधारिणः ।
तथा रूपेण मिश्रेण ज्ञेया हि द्विजसत्तमः ॥
सामान्यात् द्विगुणश्चोर्ड्ं कालिदेशगुणस्ततः ।
कलेः शतगुणं भद्रं भद्राच्च सहस्रधा ।
वङ्गात् षष्ठिगुणः पाञ्चिनिर्विदेशभिर्गुणैः ।
ततः कोटिसहस्रेण खयस्कान्तः प्रशस्यते ॥”
इत्यादिकं रसायनोपयौगिकमेव न तु खड्गे दृष्टफलम् ॥ यदाह ।
“आसान्तु लौहजातीनां वधं खड्गाय युज्यते।
तथाच ।
ये खड्गास्तीक्ष्णधारा भृशमतिगुरवः षड्गुणाढ्याः सुभेद्याः
केचित् साङ्गा निरङ्गाः कति च न समला निर्म्मलाः केचिदेव ।
ते भौमाः कुर्वतेऽमी धनविजयपलं षड्गुणा निर्गुणा वा
ते दुःखं शोकमुग्रं ददति बलकुलश्रीयशोनाशकाले ॥
इति खड्गपरीक्षायां भूम्यध्यायः सप्तमः ॥७॥
अथाष्टधा ध्वनिः ।
ध्वनिरष्टविधः प्रोक्तो यः पूर्व्वं ब्रह्मसंग्रहे ।
तेषामपि लिखाम्यत्र सगुणं लक्षणाष्टकम् ॥
तद्यथा,—
पूर्व्वं चत्वारः शुभदाः परे निन्द्यास्तथापरा।
विचार्य्य खड्गमानञ्च कर्त्तव्यं खड्गकोविदैः ॥
घोरस्तार इति ख्यातो द्विविधः खड्गकोविदैः ।
घोरः स्यात् सुखसम्पत्त्यै तार उच्चाटने मतः ॥
यत्र हंसरवस्येव खड्गे नखहते ध्वनिः ।
हंसध्वनिरयं खड्गः सकलार्थप्रसाधनः ॥१॥
कांस्यशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
कांस्यध्वनिरयं खड्गः प्राह नागार्ज्जुनो मुनिः ॥२॥
अभ्रस्य लक्षणं पतितम् ॥३॥
ढक्काशब्द इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
ढक्काध्वनिरयं खड्गः सर्व्वशत्रुनिसूदनः ॥४॥
काकस्वर इवाभाति यस्मिन् खड्गे हते ध्वनिः ।
काकस्वरोऽयं खड्गः स्यात् श्रीयशःकुलनाशनः ॥५॥
तन्त्रीस्वरसमो यस्मिन् भवेत् खड्गे हते ध्वनिः ।
तन्त्रीध्वनिरयं खड्गः कुलश्रीधननाशनः ॥६॥
खरस्येव ध्वनिर्यस्मिन् खरध्वनिरयं मतः ।
श्रीयशोज्ञानविज्ञानजयतेजोविनाशनः ॥७॥
प्रस्तरस्येव यः खड्गः स निन्द्यः खड्गलक्षणे ॥८॥
गम्भीरतारध्वनिता खड्गस्याशुभलक्षणम् ।
उच्चागमन्द्रध्वनिता खड्गस्याशुभलक्षणम् ॥
अपाङ्गनेत्रहीनोऽपि खड्गः सुध्वनिरुत्तमः ।
अन्धः कुरूपो मधुरो यथा भुवि सुगायनः ॥
सर्व्वलक्षणसम्पन्नः खड्गो यो ध्वनिवर्ज्जितः ।
स निन्द्यः सुन्दराङ्गोऽपि यथा वाक्यविवर्जितः ॥
नखेन वाथ दण्डेन तथा लौहशलाकया ।
लोष्टेन शर्कराभिर्व्वा ध्वनिविज्ञानमुच्यते ॥”
इति खड्गपरीक्षायां ध्वन्यध्यायोऽष्टमः ॥८॥
अथ द्विविधं मानम् ।
यन्मानं द्विविधं प्रोक्तं तस्य लक्षणमुच्यते ।
उत्तमाधमभेदेन भेदो हि द्विविधो मतः ॥
उत्तमं यद्विशालं स्यात्तत्प्रमानं प्रकीर्त्तितम् ॥१॥
अधमं तत्र यत् खर्व्वं गुरुमानं प्रकीर्त्तितम् ॥२॥
तत्पुनस्त्रिविधं प्रोक्तमादिमध्यान्तभेदतः ।
यो मुष्टिविंशतिसमायततीव्रधारो
भर्त्तुर्भवेत् प्रसरतोऽपि षडङ्गुलीभिः ।
मानेन चाष्टपलिकः स हि खड्गमध्ये
नातिप्रशस्तविकष्टफलप्रदः स्यात् ॥
यो द्वादशाष्टनवमुष्टिभिरायतः स्यात्
मन्दो भवेत् प्रसरतोऽपि चतुर्थभागः ।
तावत्पलैः परिमितस्तु ततोऽधिको वा
खड्गाधमो धनयशःकुलनाशनाय ॥
नागार्ज्जुनोऽपि ।
यावन्तो मुष्टयो दैर्घ्ये तदर्द्धाङ्गुलयो यदा ।
प्रसरे तच्चतुर्थांशमिति वै मानमुत्तमम् ॥
यावन्तो मुष्टयो दैर्घ्ये प्रसरे तत्त्रिभागिकः ।
पलैस्तदर्द्धैस्तुलितः स खड्गो मध्य उच्यते ॥
यावन्तो मुष्टयो दैर्घ्ये तुर्य्यांशः प्रसरे तु तत् ।
अधमः कीर्त्तितः खड्गस्तत्समो वाधिकः पलैः ॥
भौमानामिदमुद्दिष्टं दिव्यास्तु लघवो मताः ॥”
इति खड्गपरीक्षायां मानाध्यायः ॥ ९ ॥
भोजस्तु ।
“दीर्घता लघुता चैव खरविस्तीर्णता तथा ।
दुर्भेद्यता सुघटता खड्गानां गुणसंग्रहः ॥
खर्व्वता गुरुता चैव मन्दता तनुता तथा ।
सुभेद्यता दुर्घटता खड्गानां दोषसंग्रहः ॥
इति निखिलमुदारसूक्तमत्र
बहुतन्त्रेषु निरूप्य खड्गयष्टेः ।
नृपतिरिति विचिन्त्य यो विधत्ते
स चिरतरां श्रियमूर्ज्जितां लभेत ॥”
इति युक्तिकल्पतरूक्तखड्गपरीक्षा समाप्ता ॥
तरसं, क्ली, (तॄ + बाहुलकात् असच् ।) मांसम् । इत्यमरः । २ । ६ । ६३ ॥ ( यथा, कात्यायनश्रौतसूत्रे ।
“तरसमयाः पूर्व्वोक्तभागाः ॥”
“तरसमया मांसमयाः ।” इति कर्कः ॥)
तरस्थानं, क्ली, (तराय अवतरणाय यत् स्थानम् । तरस्य स्थानं वा । ) घट्टः । इति जटाधरः ॥
तरस्वान्, [ त् ] त्रि, ( तरो बलं वेगो वा अस्यास्तीति मतुप् । मस्य वः । ) शूरः । वेगी । इति धावारणम् ॥ ( चतुर्थमनुपुत्रविशेषः । यथा, हरिवंशे । ७ । ८८ ।
“तरङ्गभीरुर्व्वप्रश्च तरस्वानुग्र एव च ।
अभिमानी प्रवीरश्च जिष्णुः सङ्क्रन्दनस्तथा ॥”)
तरस्वी, [ न् ] त्रि, ( तरो वेगः बलं वास्त्यस्य । तरस् + “अस्मायामेधास्रजो विनिः ।” ५।२। १२१ । इति विनिः ।) शूरः । वेगी । इत्यमरः । ३।३।१२७ । ( यथा, भागवते । ८ । १० । ३१ ।
“राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः ।

तुङ्गः, पुं, (तुजि हिंसायाम् + घञ् ।) पुन्नागवृक्षः । (यथा, वैद्यकरत्नमालायाम् ।
"कुम्भीकः पुरुषस्तुङ्गः पुन्नागो रक्तकेशरः ॥")
पर्व्वतः । बुधग्रहः । इति हेमचन्द्रः । ६ । ६४ ॥ नारिकेलः । गण्डकः । इति राजनिर्घण्टः ॥ योगभेदः । इति शब्दरत्नावली ॥ स तु ग्रहाणां उच्चराशिः । यथा,—
"सूर्य्यादुच्चान् क्रियवृषमृगस्त्रीकुलीरान्त्ययुक्के दिग्वह्नीन्द्रहयतिथिशरान् सप्तविंशांश्च विंशान् । स्वांशानेतान् वदति जवनश्चान्यतुङ्गान् सुतुङ्गांस्तानेवांशान् मदनभवनेष्वाह नीचान् सुनीचान् ॥"
इति दीपिका ॥
"आदित्यमेषे वृषभे शशाङ्के
कन्यागते ज्ञे च गुरौ कुलीरे ।
मीने च शुक्रे मकरे महीजे
शनौ तुलायामिति तुङ्गगेहाः ॥"
इति समयामृतम् ॥ * ॥
अथ तुङ्गस्थग्रहफलम् ।
"तुङ्गेऽर्कः शुभसंयुतः शुभकरैर्मित्रैश्च दृष्टो यदा दैवात् पश्यति सौऽपि वा शुभकरानेकं द्विकं वा त्रिकम् ।
विख्यातः प्रथितो विमर्द्दितरिपुः शौर्य्यौशमान्यो यदा
क्ष्मापालार्च्चितपादपद्मयुगलो राजा त्रिकोणे यदा ॥
तुङ्गे चन्द्रमसि प्रसन्नवपुषि शुभादनष्टद्युतौ शस्यातोऽरिविमर्द्दकोऽगदतनू राजेश्वरो रूपवान् ।
क्ष्मापालार्च्चितपादपद्मयुगलो वा धर्म्मशीलो महान् सौख्यैरेव युतोऽथवा प्रियतमैर्दृष्टे त्रिकोणेऽपि च ॥
यदि भवति स्वगस्थो भूमिपुत्त्रस्तदा वै न दिनकरमयूखाद्भस्मरश्मिर्नरेन्द्रः ।
स्वगदतनुरभीतः शत्रुदर्पापहारी प्रस्तरिपुनरेन्द्रः स्वात्रिकोणेऽपि जातः ॥
कन्याख्ये शशलाञ्छनस्य तनयस्तिग्मांशुकैः संयुतो
दृष्टो वा यदि संयुतः शुभकरैर्ज्ञातस्तदा भूपतिः ।
याचायां तुरगोद्भमत्तकरिणां यातैर्मही कम्पते तस्माग्रहरणीरुहा विगलिता यान्ति त्रिकोणेऽपि च ॥
तुङ्गे गुरौ मित्रखगेन दृष्टो
राजा भवेदिन्द्रसमानमूर्त्तिः ।
गजाश्वनौकानरपूर्णलक्ष्मीः
पृथ्वीपतिः स्वस्य त्रिकोणगेऽपि ॥
तुङ्गे भृगौ शुभसुहृत्प्रयुते च दृष्टे
दैवात् पुनः स यदि पश्यति मित्रसंघात् ।
भूपाधिपो भवति कीर्त्तिकरप्रधानो
दीर्घायुरुग्रसुखसुग्भ्यगुणे त्रिकोणे ॥
तुङ्गे शनौ मित्रखगेन दृष्टे
प्रचण्डदण्डो नृपतिप्रधानः ।
न दृश्यते दिग्गमने च धुर्व्वो
त्रिकोणगे चापि नरेन्द्रमूर्त्तिः ॥
भवति धरणिपालो नीचबुद्धिः प्रतापी
हयगजधनपूर्णो जातिवर्गे विरक्तः ।
कुटिलमतिरनीतो भूरिभाण्डारयुक्तस्तमसि मिथुनसंस्थे जायते मानवेन्द्रः ॥
स्वगपतिनृपकन्याकर्कटस्थे च राहौ
भवति विपुललक्ष्मी राजराजाधिपो वा ।
हयगजनरनौकामण्डितः सार्व्वभौमो
नृपतिरमरपूज्यो राहुतुङ्गी चिराय ॥
अरिनिधनव्ययतुङ्गे कीर्त्तितमेतत् फलं व्यर्थम् ।
केन्द्रत्रिकोणे लाभे वा तुङ्गफलं यथोद्दिष्टम् ॥"
इति कोष्ठीप्रदीपः ॥

तुङ्गः, त्रि, (तुजि हिंसायाम् + घञ् ।) उग्रः । प्रधानम् । उन्नतः । इति शब्दरत्नावली ॥ (यथा, रघुः । ६ । ३ ।
"शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह ॥"
प्रचुरः । यथा, तत्रैव । ४ । ७० ।
"तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ॥")
किञ्जल्के क्ली । इति राजनिर्घण्टः ॥

तुङ्गकः, पुं, (तुङ्ग + स्वार्थे संज्ञायां वा कन् ।) पुन्नागवृक्षः । इति शब्दरत्नावली ॥ (अरण्यरूपतीर्थविशेषे, क्ली । यथा, महाभारते । ३ । ८५ । ४६-५३ ।
"तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः ।
वेदानध्यापयत् तत्र मुनीन् सारस्वतः पुरा ॥
तत्र वेदेषु नष्टेषु मुनेरङ्गिरसः सुतः ।
ऋषीणामुत्तरीयेषु सूपविष्टो यथासुखम् ॥
ओँकारेण यथान्यायं सम्यगुच्चारितेन च ।
येन यत् पूर्व्वमभ्यस्तं तत् सर्व्वं समुपस्थितम् ॥
ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः ।
हरिर्नारायणस्तत्र महादेवस्तथैव च ॥
पितामहश्च भगवान् देवैः सह महाद्युतिः ।
भृगुं नियोजयामास याजनार्थे महाद्युतिम् ॥
ततः स चक्रे भगवानृषीणां विधिवत्तदा ।
सर्व्वेषां पुनराधानं विधिदृष्टेन कर्म्मणा ॥
आज्यभागेन तत्राग्निं तर्पयित्वा यथाविधि ।
देवाः स्वभवनं याता ऋषयश्च यथाक्रमम् ॥
तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम ! ।
पापं प्रणश्यत्यखिलं स्त्रिया वा पुरुषस्य वा ॥
तत्र मासं वसेद्धीरो नियतो नियताशनः ।
ब्रह्मलोकं व्रजेद्राजन् ! कुलञ्चैव समुद्धरेत् ॥")

तुङ्गभद्रः, पुं, (तुङ्ग उच्चोऽपि भद्रः ।) मदोत्कटहस्ती । इति मेदिनी । रे, २६३ ॥

तुङ्गभद्रा, स्त्री, (तुङ्गा प्रधाना भद्रा निर्म्मला च ।) नदीविशेषः । सा दक्षिणे प्रसिद्धा । (यथा, मत्स्यपुराणे । ११३ । २६ ।
"तुङ्गभद्रा सुप्रयोगा बाह्या कावेरी चैव तु ।
दक्षिणापथनद्यस्ताः सह्यपादाद्विनिःसृता ॥")

तस्या जलस्य गुणाः । स्निग्धत्वम् । निर्म्मलत्वम् । स्वादुत्वम् । गुरुत्वम् । कफपित्तासदाहत्वम् । प्रायः साम्लत्वम् । मेधाकरत्वञ्च । इति राजनिर्घण्टः ॥

तुङ्गशेखरः, पुं, (तुङ्गान्युच्चानि शेखराणि शृङ्गाणि यस्य ।) पर्व्वतः । इति शब्दमाला ॥

तुङ्गा, स्त्री, (तुङ्ग + टाप् ।) वंशलोचना । शमी । इति राजनिर्घण्टः ॥ (अस्याः पर्य्याया यथा,—
"शमी शक्तुफला तुङ्गा केशहन्त्री शिवा फला ।
मङ्गल्या च तथा लक्ष्मीः शमीरः सामिका स्मृता ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

तुङ्गिनी, स्त्री, (तुङ्गो वृक्षविशेषस्तद्वदाकृतिरस्त्यस्याः । तुङ्ग + इनिः । ङीप् ।) महाशतावरी । इति राजनिर्घण्टः ॥

तुङ्गी, स्त्री, (तुङ्ग + गौरादित्वात् ङीष् ।) हरिद्रा । वर्व्वरी । इति मेदिनी । गे, ८ ॥ (अस्याः पर्य्याया यथा, भावप्रकाशस्य पूर्व्वखण्डे १भागे ।
"वर्व्वरी तुवरी तुङ्गी खरपुष्पाजगन्धिका ।
पर्णाशस्तत्र शुक्ले तु कठिञ्जरकुठेरकौ ॥"
रात्रिः । इति त्रिकाण्डशेषः ॥ )

तुङ्गी, [न्] पुं, (तुङ्गः उच्चस्थानं आश्रयत्वेन अस्त्यस्य । इनिः ।) तुङ्गस्थानस्थितः । उच्चस्थग्रहः । इति ज्योतिषम् ॥

तुङ्गीपतिः, पुं, (तुङ्ग्या निशायाः पतिः ।) चन्द्रः । इति त्रिकाण्डशेषः ॥

तुङ्गीशः, पुं, (तुङ्गी सर्व्वप्रधान ईशः प्रभुश्च ।) शिवः । कृष्णः । सूर्य्यः । इति शब्दरत्नावली ॥

तुच्छं, क्ली, (तौति असारत्वं गच्छतीति । तु + "छोऽदिकचिभ्यां शुतुभ्यान्तु कित् पीपूडोः स्वस्य ।" २ । ३३ । उणादिकोषटीकाधृतसूत्रात् छः स च कित् ।) पुलाकजम् । इत्युणादिकोषः ॥ भुषि इति भाषा ॥

तुच्छः, त्रि, (तुद् + क्विप् । तेन तं वा छ्यतीति । छो + कः ।) शून्यः । इत्यमरः । ३ । १ । ५६ ॥ हीनः । इत्युणादिकोषः ॥ (यथा, भागवते । ७ । ७ । ४५ ।
"किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः ॥")
अल्पः । इति हेमचन्द्रः । ६ । ६२ ॥

तुच्छद्रुः, पुं, (तुच्छो हीनो द्रुर्वृक्षः ।) एरण्डवृक्षः । इति शब्दचन्द्रिका ॥

तुच्छधान्यकं, क्ली, (तुच्छं धान्यम् । अल्पार्थे कन् ।) पलाकः । इति रत्नमाला ॥ आगडा इति भाषा ॥

तुच्छा, स्त्री, (तुच्छ + टाप् ।) तुत्था । नीलीवृक्षः । इति भावप्रकाशः ॥ (सूक्ष्मैला । गुजराट्देशीया एलाची । अस्याः पर्य्याया यथा,
"सूक्ष्मोपकुञ्चिका तुच्छा कोरङ्गी द्राविडी त्रुटिः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥)

तुज, हिंसे । इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-सेट् ।) तोजति । इति दुर्गादासः ॥

इ प्राणे । बले । इति कविकल्पद्रुमः । (भ्वा-पर अक सक च सेट ।) पञ्चमस्वरी । इ तुम्पते । प्राणो जीवनम् । हिंसायामनायामिति कश्चित् । इति दुर्गादासः ॥

तुण इ क भाषार्थे । इति कविकल्पद्रुमः ॥ (चुरा पर अक सक च सेट ।) पञ्चमस्वरी । इ क, तुण्ययति । भा दीप्तिः । षड्वर्थी निर्के तनदिप्तावलदानानि । इति दुर्गादासः ॥

तुट श्रि कलहे । इति कविकल्पद्रुमः ॥ (तुदा पर-अक सेट ।) श्रि, तुटति अतुटीत नीचः परस्परं वचसा । तुतोट । इति दुर्गादासः ॥

तुटम पु (तुटति नाशयति द्रव्यजातमिति । तुट+बाहुलकात उम ।) उन्दुरः । इति त्रिकाण्डशेषः ॥

तुड, इ ड वधे । इति कविकल्पद्रुमः ॥ (भ्वा आत्म सक सेट ।) पञ्चमस्वरी । इ, तुण्डते । ड तुडते । वधो निष्पीडनमिति रमानाथः । तुण्डते माध्य पिक । इति दुर्गादासः ॥

तुड ऋ वधे । इति कविकल्पद्रुमः ॥ (भ्वा पर सक सेट ।) पञ्चमस्वरी । ऋ अतुतोडत् । वधो हिंसाकरणमिति गोविन्दभट्टः । तोडति मल्लो मल्लाङ्गं भिनत्तीत्यर्थः । इति दुर्गादासः ॥

तुड, श्रि भेदे । इति कविकल्पद्रुमः ॥ (तुदा पर सक सेट ।) श्रि, तुडति अतुडीत् तुतोड । उपहनने इति कश्चित् । इति दुर्गादासः ॥

तुड्ड आदरे । इति कविकल्पद्रुमः ॥ (भ्वा पर सक सेट ।) पञ्चमस्वरी उड्डयात्य । नादर अनादरः । तुड्डति । पक्षाभावान्न अतुडुवत् । इति दुर्गादासः ॥

तुण श क्षेपे । इति कविकल्पद्रुमः ॥ (तुदा पर सक सेट ।) कौटिल्यमिह कुटिलीकरणम् । श, तुणति लय वायुः । तोणिता । इति दुर्गादासः ॥

तुणि, प (तुणति सङ्कोचयतीति । तुण कौटिल्ये + 'सर्व्वधातुभ्य इन् ।' उणां ४ । ११७ । इति इन् ।) कुणि । तुनउण । इत्यमरटीकायां भरतः । (अस्य पर्याया गुणाश्च यथा,—
'तुणिस्तुन्नक आपीनस्तुणिकः कच्छकस्तथा ।
कुबेरकः कान्तलको नन्दिवृक्षश्च नन्दकः ॥
तुणी हस्तः कटुः पाके कषायो मधुरो लघुः ।
तिक्तः वाती हिमो वृष्यो व्रणकुष्ठास्रपित्तजित् ॥'
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।)

तुण्ड न (तुण्डते निष्पीडयति अभ्यन्तरस्य द्रव्यमिति । तुड+पचाद्यच ।) मुखम् । इत्यमरः । २ । ६ । ८९ । (यथा, श्रीभागवते । ९ । १ । २६ ।
'धर्मार्थ न मु त्रियाय प्रीणमध्यचरत तामम् ।
तुण्डपुङ्खमयाकार्षी मातृर्मां समचकृत ॥'
पुं महादेवः । यथा महाभारते अनुशासनपर्व्वणि । १७ । १५ ।
'नमस्तुण्डाय तुण्याय नमस्तुण्डिनुताय च ॥'
शान्तनविष्व । यथा, महाभारते । ३ । २८ ।
[illegible] च महतश्च पटुम्पमधन च ।)

तुण्डकेरिका, स्त्री कार्पासी । इति राजनिर्घण्टः ॥

तुण्डकेरी, स्त्री, (प्रशस्तं तुण्डम् । प्रशस्तार्थे कन् । तदीरति ईरयति वा तत्तुल्यशोभाधारणात् । ईर+कर्म्मण्यण । स्त्रियां ङीष ।) बिम्बिका । इत्यमरटीकायां भरतः । तेलाकुचा इति भाषा ॥

तुण्डि, पु, (तुण्डते निष्पीडयति मध्यस्थद्रव्यमिति । तुण्ड+"सर्व्वधातुभ्य इन् ।" उणां ४ । ११७ । इतीन् ।) मुखम् । चञ्चुः । इत्युणादिकोषः ॥ नाभौ स्त्री । इति शब्दरत्नावली ॥

तुण्डिका स्त्री (तुण्डिरेव । तुण्डि+स्वार्थे कन् टाप च ।) नाभिः । बिम्बिका । इति शब्दरत्नावली ॥ (अस्या गुणा यथा —
"तुण्डिका वातविच्छिन्नातमिसतिनिवारणी ॥"
इति हारीते प्रथमे स्थाने दशमेऽध्याये ॥)

तुण्डिकेरी, स्त्री, कार्पासी । बिम्बिका । इत्यमरः । २ । ४ । ११६ ॥ (अस्या पर्याया यथा,
'तुण्डी रक्तफला बिम्बी तुण्डिकेरी च बिम्बिका ॥'
इति वैद्यकरत्नमालायाम् ॥)

अस्या रूपान्तराणि । तुण्डिकरिका तुण्डिकेरि तुण्डकेरी तुण्डिकशी । इत्यमरटीका ॥

तुण्डिकशी, स्त्री बिम्बिका । इति शब्दचन्द्रिका ॥

तुण्डिभ, त्रि, (तुण्डिर्वृद्धा नाभिरस्य । 'तुन्दिवलि वटेर्भः ।' ५ । २ । १४० । इति भ । "स्त्रर्द्धे लोमयो इय तुण्डि ।" इति माधवः ।) वृद्धनाभि । वृद्धनाभियुक्तः । इत्यमरः । २ । ६ । ४४ ॥

तुण्डिल, त्री, (तुण्डिरस्यास्तीति । सिध्मादित्वात् इलच ।) वृद्धनाभि । इत्यमरः । २।६।४४ ॥ मुखर । इत्युणादिकोषः ॥

तुत्थ, त क स्तुतौ । इति कविकल्पद्रुमः ॥ (अदन्त चुरा पर सक सेट ।) आद्यौ पञ्चमस्वरः प्रायो दन्त्यतगाद्युत्सम्पक्कारः । तुत्थयति तुत्थापयति । स्तुतिरात्त्वाख्यानम् । इति दुर्गादासः ॥

तुत्थ, क्ली (तुदति पीडयत्यनेन । तुद+"पातृ तुदीति ।" उणां २ । ७ । इति थक । यद्वा, तुत्थ आच्छादने+अच ।) खर्परीतुत्थम् । उपधातुभेदः । तुतिया इति भाषा । तत्पर्यायः । नीलाञ्जनम् २ हरितायाम् ३ तुत्थकम् ४ मयूरग्रीवकम् ५ ताम्रगर्भम् ६ अमृतोद्भवम् ७ मयूरतुत्थम् ८ शिखिकण्ठम् ९ नीलम् १० । इति राजनिर्घण्टः ॥ तुत्थाञ्जनम् ११ शिखिग्रीवम् १२ वितुन्नकम् १३ मयूरकम् १४ । इत्यमरः । २।९।१०१ ॥ मूलकम् १५ कर्परतुत्थम् १६ रूतामनम् १७ । इति शब्दचन्द्रिका ॥ अस्य गुणाः । कटुत्वम् । क्षारत्वम् । उष्णत्वम् । विषनाशित्वम् । सर्व्वविषदोषशमनत्वम् । वान्तिकारकत्वम् । इति राजनिर्घण्टः ॥ भेदकत्वम् । निर्म्मलत्वम् । लघुत्वम् । भेदकत्वम् । श्वित्रकण्डुकुष्ठकफनाशित्वञ्च । इति राजवल्लभः ॥ ॥

'तुत्थ वितुन्नकं चापि शिखिग्रीवं मयूरकम् ।
तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण किञ्चित्ताम्रगुणं तस्माद्दृश्यमायगुणञ्च
तुत्थकं कटुकं क्षारं कषायं वामकं लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत्
विषाश्मकुष्ठकण्डूघ्नं खर्परं चापि
इति भावप्रकाशस्य पूर्व्वखण्डे १
(अस्य शोधनविधिर्यथा,—
"ओतोर्विड्डासम तुल्यं यथोद [illegible]
विधा सुपुटितं शुद्धं [illegible]
अन्यच ।
"शम्बूकेन समं तुत्थं [illegible]
वालिधाम्नी यदा न [illegible]दा सिद्धि

शोधितस्यास्य गुणा यथा,—
"तुत्थं सकटुकं क्षारं कषायं विशदं लघु
लेखनं भेदि चक्षुष्यं
इति वैद्यकरसेन्द्रसारसंग्रहे १

रसाञ्जनम् । यावा । इत्युणादिकोषः ॥
इति संक्षिप्तसारे उणादिवृत्तिः ॥
इति हैमचन्द्रः ॥

तुत्थक, क्ली (तुत्थमेव । स्वार्थे कन् ।) इति शब्दचन्द्रिका ॥ (अस्य गुणाः
'तुत्थकं कटुकं क्षारं कषायं वामकं लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत्
विषाश्मकुष्ठकण्डूघ्नं खर्परश्चापि
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे

तुत्था, स्त्री (तुत्थ+टाप ।) नीलीवृक्षः । इत्यमरः । २ । ४ । ९५ ॥ महानीली राजनिर्घण्टः ॥

तुत्थाञ्जन क्ली, (तुत्थयति तुत्थ्यते वा । अच । तुत्थञ्च तदञ्जनञ्चेति उपधातुविशेषः । तुत्थम् । इत्यमरः । २।

तुद, न श औ व्यथे । इति कविकल्पद्रुमः ॥ (तुदा उभ सक अनिट ।) न श, तुदति औ तोत्ता । यथ इष आत्मस्य तुतोद गदया चारिम् । इति भट्टिः ॥ तुदः । इति दुर्गादासः ॥

तुन्द क्ली, (तुदतीति । तुद+उणां ४ । ९८ । इति दन् तुडेर्नुमुच लतो दस्य लोप ।) उदरम् । २ । ६ । ७७ ॥

तुन्दकूपिका, स्त्री, (तुन्दः कूप कूपिका । उदरस्य कूपिकेव ।) नाभि । इति ३ । २ । ७० ॥

तुन्दकूपी, स्त्री (तुन्दस्य उदरस्य कूपी इव ।) नाभिः । इति त्रिकाण्डशेषः ॥

तुन्दपरिमार्ज्ज, त्रि, (तुन्दमुदरं परि+मृज+अण ।) तुन्दपरिमृज । अमरटीकायां रमानाथः ॥ (परिमार्ष्टि यः ।" इति ३ । २ । ५ ।)

तुन्दपरिमृज:, त्रि, ( तुन्दमुदरं परिमार्ष्टीति । परि + मृज + "तुन्दशोकयो: परिमृजापनुदो: ।" ३ । २ । ५ । इत्यत्र "आलस्यसुखाहरणयो-रिति वक्तव्यम् ।" इति वार्त्तिकोक्त्या क: । ) अलस: । इत्यमर: । २ । १० । १८ ॥

तुन्दि, स्त्री, ( तुद + इन् बाहुलकात् नुम् च । ) उदरम् । इति हेमचन्द्र: । ३ । २६८ ॥ गन्धर्व्व-विशेषे, पुं । इति जटाधर: ॥

तुन्दि:, स्त्री, ( तुद् + इन् बाहुलकात् नुम् च । ) नाभि: । इति त्रिकाण्डशेष: ॥

तुन्दिक:, त्रि, ( अतिशयितं तुन्दमुदरमस्त्यस्य । "तुन्दादिभ्य इलच ।" ५ । २ । ११७ । इति चकारात् ठन् । ) विशालजठरी जन: । इति शब्दरत्नावली ॥

तुन्दिका, स्त्री, ( तुन्दमुदरं आश्रयत्वेनास्त्यस्या: । तुन्द + ठन् टाप् च । ) नाभि: । इति शब्द-रत्नावली ॥

तुन्दित:, त्रि, तुन्दिल: । इति भरतस्य द्विरूप-कोष: ॥

तुन्दिभ:, त्रि, (तुन्दिर्दृढा नाभिरस्त्यस्येति । तुन्दि + "तुन्दिवलिवटेर्भ: ।" ५ । २ । १३९ । इति भ: । ) तुन्दिल: । इति शब्दरत्नावली ॥

तुन्दिल:, त्रि, ( तुन्दं विशालमुदरमस्त्यस्येति । तुन्द + "तुन्दादिभ्य इलच ।" ५ । २ । ११७ । इतीलच् । ) विशालजठरो जन: । भुँड़े इति भाषा ॥ तत्पर्य्याय: । पिचिण्डिल: २ वृहत्-कुक्षि: ३ तुन्दिक: ४ तुन्दिभ: ५ तुन्दी ६ । इति शब्दरत्नावली ॥

तुन्दिलफला, स्त्री, ( तुन्दिलवत् फलमस्या: । ) त्रपुषी । इति राजनिर्घण्ट: ॥

तुन्दी, स्त्री, ( तुन्दि + वा ङीष् । ) नाभि: । इति शब्दरत्नावली ॥

तुन्दी, [ न् ] त्रि, (तुन्दं विशालमुदरमस्त्यस्येति । "तुन्दादिभ्य इलच ।" ५ । २ । ११७ । इति चकारात् इनि: । ) तुन्दिल: । इति शब्द-रत्नावली अमरश्च ॥

तुन्न:, पुं, (तुद्यते इति । तुद + क्त: । ) नन्दी-वृक्ष: । तुँद इति भाषा । इत्यमर: । २ । ४ । १२७ ॥ त्रि, व्यथित: । ( यथा, रामायणे । २ । १४ । २३ ।
"स तुन्न इव तीक्ष्णेन प्रतोदेन हयोत्तम: ।
राजा प्रचोदितोऽभीक्ष्णं कैकेयीमिदमब्रवीत् ॥"
छिन्ने । द्विधाकृते च ॥ )

तुन्नवाय:, पुं, ( तुन्नं छिन्नं वयतीति । वे + "ह्वावा-मश्च ।" ३ । २ । २ । इत्यण् । ) सौचिक: । इत्यमर: । २ । १० । ६ ॥ दरजी इति भाषा ॥ ( यथा, मनु: । ४ । २१४ ।
"शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च ॥")

तुन्प, वधे । इति कविकल्पद्रुम: ॥ (भ्वा-परं-सकं-सेट् । ) तुम्पति । इति दुर्गादास: ॥

तुन्प, श वधे । क्लेशे । इति कविकल्पद्रुम: ॥ ( तुदां-सकं-अकं च-सेट् । ) श, तुम्पति तुतुम्प । तुम प श तुनृप श क्लिशि वधे इत्येताभ्यामेव तुम्पति तुपतीति सिद्धौ तुनृप वधे इत्यस्य भ्वादौ पाठस्तु वेदे शवन्तस्य शान्तस्य चोभा-रूपभेदार्थ: । इति दुर्गादास: ॥

तुन्फ, वधे । इति कविकल्पद्रुम: ॥ ( भ्वा-परं-सकं-सेट् । ) तुम्फति । इति दुर्गादास: ॥

तुन्फ, श वधे । क्लेशे । इति कविकल्पद्रुम: ॥ ( तुदां-परं-सकं-अकं च-सेट् । ) श, तुफति तुतुम्फ । इति दुर्गादास: ॥

तुप, वधे । इति कविकल्पद्रुम: ॥ ( भ्वा-परं-सकं-सेट् । ) तोपति । इति दुर्गादास: ॥

तुप, इ क अर्द्दने । इति कविकल्पद्रुम: ॥ ( चुरां-परं-सकं-सेट् । ) पञ्चमस्वरी । इ क, तुम्प-यति । अर्द्दनं वध: । इति दुर्गादास: ॥

तुप, प श क्लेशे । वधे । इति कविकल्पद्रुम: ॥ (तुदां-परं-अकं-सकं च-सेट् । ) प श, तुम्पति तुतोप । इति दुर्गादास: ॥

तुफ, वधे । इति कविकल्पद्रुम: ॥ ( भ्वां-परं-सकं-सेट् । ) तोफति । इति दुर्गादास: ॥

तुफ, प श क्लेशे । वधे । इति कविकल्पद्रुम: ॥ ( तुदां-परं-अकं-सकं च-सेट् । ) प श, तुम्फति तुतोफ । इति दुर्गादास: ॥

तुब, इ कि अर्द्दे । इति कविकल्पद्रुम: ॥ ( चुरां-पक्षे भ्वा-परं-सकं-सेट् । ) तवर्गाद्यादि: । पञ्चम-स्वरी । इ, तुम्बति । कि, तुम्बयति तुम्बति । अर्द्दो वध: । इति दुर्गादास: ॥

तुभ, ऌ ङ हिंसे । इति कविकल्पद्रुम: ॥ ( भ्वा-आत्मं-सकं-सेट् । ) ऌ, अतुभत् । ङ, तोभते । इति दुर्गादास: ॥

तुभ, य ग हिंसे । इति कविकल्पद्रुम: ॥ (दिवां-क्र्यां च-परं-सकं-सेट् । ) य, तुभ्यति । ग, तुभ्नाति : तुतोभ । इति दुर्गादास: ॥

तुमर:, पुं क्ली, ( तुमुल: । रस्य ल: । ) तुमुल: ॥ इत्यमरटीकायां रायमुकुट: ॥ ( क्षत्त्रियजाति-विशेष: । यथा, मात्स्ये । ११३ । ५३ ।
"तुमरास्तुम्बराश्चैव पञ्चमा नैषधै: सह ॥")

तुमुलं, क्ली, ( तु सौत्रो धातु: + बाहुलकात् मुलक् । ) रणसङ्कुलम् । सङ्कीर्णयुद्धम् । इत्य-मरमेदिनीकरौ ॥ परस्परसम्बाधो रणसंघट्ट: । इति भरत: ॥ (यथा, देवीभागवते । ५।४१।२८।
"तत्राभूत्तुमुलं युद्धं देवदानवसैन्ययो: ॥")

तुमुल:, पुं, ( तु + बाहुलकात् मुलक् । ) कलि-वृक्ष: । इति मेदिनी । ले, ६८ ॥ व्याकुलो रण: । इति त्रिकाण्डशेष: ॥ ( प्रचण्डे उग्रे सङ्कुलमात्रे च त्रि । यथा, राजतरङ्गिण्याम् । ४ । ५४१ ।
"एकस्य करुणाक्रन्दै: सैन्यस्यान्यस्य गर्ज्जितै: ।
सरित्तरङ्गघोषैश्च बभूवुस्तुमुला दिश: ॥"
तथा, महाभारते । १ । ५३ । १२ ।
"ववौ गन्धश्च तुमुलो दह्यतामनिशं तदा ॥")

तुम्ब:, पुं स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुम्ब अर्द्दने + अच् । ) अलावु: । इत्यमर-टीकायां भरत: ॥ ( अलावो: शुष्कत्वक् । यथा, हरिवंशे । ६४ । ५ ।
"सद्भिवयतुम्बकरकौ गोपवेणुप्रवादकौ ॥")

तुम्बक:, पुं, (तुम्बति अरुचिमिति । तुम्ब + ण्वुल् । ) अलावु: । इति शब्दरत्नावली ॥ राजालावु: । इति राजनिर्घण्ट: ॥

तुम्बा, स्त्री, ( तुम्ब + टाप् । ) अलावु: । इति शब्दरत्नावली ॥ ( यथा, आर्य्याष्टके । ७ ।
"श्यामावतीसमविडम्बा गलेन नवतुम्बाभवीण-सविधा
शं बाहुलेयशशिबिम्बाभिरामसुखसंबाधित-स्तनभरा ॥")
गवी । इति त्रिकाण्डशेष: ॥

तुम्बि:, स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुबि अर्द्दने + "सर्व्वधातुभ्य इन् ।" उणां ४ । ११७ । इतीन् । ) अलावु: । इति शब्दरत्नावली ॥ ( अलावुशब्देऽस्या विवरणं ज्ञातव्यम् ॥)

तुम्बिका, स्त्री, (तुम्ब अर्द्दने + ण्वुल् । टापि अत इत्वम् । ) अलावु: । इति शब्दरत्नावली ॥ कटुतुम्बी । इति राजनिर्घण्ट: ॥

तुम्बिनी, स्त्री, ( तुम्बति नाशयत्यरुचिमिति । तुम्ब + णिनि: ङीप् । ) कटुतुम्बी । इति राज-निर्घण्ट: ॥

तुम्बी, स्त्री, ( तुम्बि + कृदिकारादिति वा ङीष् । ) अलावु: । इत्यमर: । २ । ४ । १५६ ॥ ( यथा, शान्तिशतके । ३ । १६ ।
"अरे चेतोमीन ! भ्रमणमधुना यौवनजले
त्यज त्वं स्वच्छन्दं युवतिषु चलधी पश्यसि न किम् ।
तनूजालीजालं स्तनयुगलतुम्बीफलयुगं
मनोभू: कैवर्त्त: क्षिपति परितस्त्वां प्रति सह: ॥"
"अलावु: कथिता तुम्बी द्विधा दीर्घा च वर्त्तुला ।
मिष्टं तुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु ॥
वृष्यं रुचिकरं प्रोक्तं धातुपुष्टिविवर्द्धनम् ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
कुलिकवृक्ष: । इति रत्नमाला ॥

तुम्बीपुष्प, क्ली, (तुम्ब्या: पुष्पमिव पुष्पमस्य । ) क्षारा-मुजम् । अलावुपुष्पम् । इति हारावली । २०२ ॥

तुम्बुकं, क्ली, (तुम्ब + बाहुलकात् उक: । ) अलावु-फलम् । इति हेमचन्द्र: ॥

तुम्बुक:, पुं, (तुम्ब + बाहुलकात् उक: । ) अलावु: । इति भरतधृतहेमचन्द्र: ॥

तुम्बुरी, स्त्री, ( तुम्बवदाकारं रातीति । रा + क: । ङीष् । पृषोदरादित्वादुत्वम् । ) कुक्कुरी । धन्या-कम् । इति मेदिनी । रे, १६३ ॥

तुम्बुरु, क्ली, कुस्तुम्बुरु । इत्यमरटीकायां भरत: ॥ ( यथा, वैद्यके ।
"तुम्बुरुश्टङ्गषड्ग्राङ्कन्दकं कटुरोहिणी ॥"
अस्य तैलगुणा: ।
"तुम्बुरुत्थं करञ्जोत्थं ज्योतिश्मत्युद्भवन्तथा ।
अर्श: कुष्ठकमिश्लेष्मशुक्रमेदोऽनिलापहम् ॥"
इति हारीते प्रथमे स्थाने नवमेऽध्याये ॥)

तुलसीं ये विचिन्वन्ति धन्यास्ते करपल्लवाः ॥”

इति ॥ * ॥

“संक्रान्त्यादौ निषिद्धोऽपि तुलस्यवचयः स्मृतः ।
परं श्रीविष्णुभक्तैस्तु द्वादश्यामेव नेष्यते ॥” * ॥

अथ तुलस्यवचयनिषेधकालः । विष्णुधर्म्मोत्तरे ।

“न छिन्द्यात् तुलसीं विप्रा द्वादश्यां वैष्णवः क्वचित् ॥”

गारुडे ।

“भानुवारं विना दूर्व्वां तुलसीं द्वादशीं विना ।
जीवितस्याविनाशाय न विचिन्वीत धर्म्मवित् ॥”

पाद्मे च ।

श्रीकृष्णसत्यासंवादीयकार्त्तिकमाहात्म्ये ।

“द्वादश्यां तुलसीपत्रं धात्रीपत्रञ्च कार्त्तिके ।
लुनाति स नरो गच्छेन्निरयानतिगर्हितान् ॥”

अतएवोक्तम् ।

“देवार्थे तुलसीच्छेदो होमार्थे समिधाम्तथा ।
इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च ॥
एवं कृत्वा महापूजामङ्गोपाङ्गादिकं प्रभोः ।
क्रमादृयया सम्प्रदायं तत्तत्स्थानेषु पूजयेत् ॥”

इति श्रीहरिभक्तिविलासे ७ विलासः ॥ * ॥

अथ तुलसीविवाहः प्रतिष्ठाविधिश्च ।

श्रीवशिष्ठ उवाच ।

“विवाहं संप्रवक्ष्यामि तुलस्यास्तु यथाविधि ।
यथोक्तं पञ्चरात्रे वै ब्रह्मणा भाषितं पुरा ॥
आरादेव वनेऽवाप्य तुलसीं स्वगृहेऽपि वा ।
वर्षत्रयेण पूर्णेन ततो यजनमारभेत् ॥
सौम्यायने प्रकर्त्तव्यं गुरुशुक्रोदये तथा ।
अथवा कार्त्तिके मासि भीष्मपञ्चदिनेषु च ॥
वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः ।
मण्डपं कारयेत्तत्र कुण्डवेदीं तथा पुनः ॥
शान्तिकञ्च प्रकर्त्तव्यं मातॄणां स्थापनं तथा ।
मातृश्राद्धादिकं सर्व्वं विवाहवत् समाचरेत् ॥
ब्राह्मणांश्च शुचिस्नातान् वेदवेदाङ्गपारगान् ।
ब्रह्मा चाचार्य्यकश्चैव चत्वारश्च तथर्त्विजः ॥
वैष्णवेन विधानेन वर्द्धनीकलसं न्यसेत् ।
मण्डपं कारयेत्तत्र लक्ष्मीनारायणं शुभम् ॥
ग्रहयज्ञं पुरः कृत्वा मातॄणां यजनं तथा ।
कृत्वा नान्दीमुखं श्राद्धं सौवर्णं स्थापयेद्धरिम् ॥
कृत्वारोप्य च तुलसीं लग्ने लक्ष्मीमिते रवौ ।
वासः शतेन मन्त्रेण वस्त्रयुग्मेन वेष्टयेत् ॥
यदा वध्नेति मन्त्रेण कङ्कणं पाणिपल्लवे ।
कोऽदादिति च मन्त्रेण पाणिग्राहो विधीयते ॥
ततः कुण्डे समागत्य आचार्य्यः सह तां द्विजैः ।
आचार्य्यो वेदिकाकुण्डे जुहुयाच्च नवाहुतीः ॥
विवाहकर्म्मवत् सर्व्वं वैष्णवं देशिकोत्तमैः ।
कर्त्तव्यश्च ततो होमो विधिवाद्विधिपूर्व्वकम् ॥”

ॐ नमो भगवते केशवाय नमः स्वाहा । नारायणाय स्वाहा । माधवाय । गोविन्दाय । विष्णवे । मधुसूदनाय । त्रिविक्रमाय । वामनाय । श्रीधराय । हृषीकेशाय । पद्मनाभाय । दामोदराय । उपेन्द्राय । अनिरुद्धाय । अच्युताय । अनन्ताय । गदिने । चक्रिणे । विष्वक्सेनाय । वैकुण्ठाय । जनार्द्दनाय । मुकुन्दाय । अधोक्षजाय स्वाहा । इति होमः ॥

“यजमानः सपत्नीको ह्यन्ये ये गोत्रबान्धवाः ।
प्रदक्षिणाश्च कर्त्तव्याश्चत्वारो विष्णुना सह ॥
तुलस्याः पाणिग्रहणे वेदिकायां विभावरीम् ।
घृतकुम्भं न्यसेत् स्वस्तं पायसान्नं विशेषतः ॥
तथैव शान्तिकाध्यायं नवसूक्तं तथैव च ।
श्रीसूक्तं पुनर्ब्रह्मा तथा वैष्णवगर्हितम् ॥
[illegible]दिनिर्घोषैर्गीतनृत्यैस्तु निस्वनैः ।
गायन्ते मङ्गला नार्य्यो माङ्गल्यं विधिमाचरेत् ॥
दद्यात् पूर्णाहुतिं पश्चादभिषेकविधिं ततः ।
ब्राह्मणे वृषभं दद्यादाचार्य्यं परिधाप्य च ॥
गां पटञ्च तथा धन्यामाचार्य्याय प्रदापयेत् ।
ऋत्विग्भ्यो दापयेद्द्रव्यमन्येभ्यो दद्याच्च दक्षिणाम् ॥
एवं प्रतिष्ठितां देवीं विष्णुना च समर्च्चयेत् ।
आजन्मोपार्ज्जितं पापं दर्शनेन प्रणश्यति ॥
रोपयेत्तुलसीं यस्तु सेवयेच्च प्रयत्नतः ।
प्रतिष्ठाप्य यथोक्तेन विष्णुना सह मानवः ॥
स मोक्षं लभते जन्तुर्विष्णुलोकं तथाव्ययम् ।
प्राप्नोति विपुलान् भोगान् विष्णुना सह मोदते ॥
प्रतिष्ठा श्रीतुलस्यास्तु लिखिता विष्णुयामले ॥”

इति श्रीहरिभक्तिविलासे २० विलासः ॥

**तुलसीदेवा**, स्त्री, (तुलसीं देवि तुलागमनात् जानीते इति । दिव + अच् । ततष्टाप् ।) चर्व्वरी । इति रत्नमाला ॥ (चर्व्वरीशब्देऽस्या गुणादिकं ज्ञेयम् ॥)

**तुला**, स्त्री, (तोल्यतेऽनया । तुल उन्माने भिदादङ् । अतुलोपमाभ्यामिति निर्द्देशात् गुणाभावः ।) सादृश्यम् । (यथा, रघुः । ८ । १५ ।

“नभसा निभृतेन्दुना तुलामुदितार्केण समारुरोह तत् ॥”)

मानम् । (यथा, पञ्चतन्त्रे । २ । ८४ ।

“सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य ।
हस्ततुलयापि निपुणाः पलपरिमाणं विजानन्ति ॥”)

गृहाणां दारुबन्धाय पीठिका । पलशतम् । (यथा, अमरकोषे । २ । ९ । ८७ ।

“तुला स्त्रियां पलशतं भारः स्यात् विंशतिस्तुला ॥”)

भाण्डम् । इति मेदिनी । ले, २५ ॥ मेषादिद्वादशराश्यन्तर्गतसप्तमराशिः । तत्पर्य्यायः । धूकः २ युक् ३ धटः ४ तौली ५ तुलाभृत् ६ । इति ज्योतिषम् ॥ सा चित्राशेषपादद्वयस्वातीसमुदाययुक्तविशाखाप्रथमपादत्रयेण भवति । तदधिष्ठातृदेवता तुलाधारिपुरुषः । अस्याः शिरस उदयः नानावर्णः उष्णस्वभावः । सा पश्चिमदिक्स्वामिनी वायुराशिः स्निग्धा चिक्कणा निःशब्दा वनचारिणी अल्पसन्ताना अल्पस्त्रीसङ्गा शूद्रवर्णा समानाङ्गा च । तत्र जातस्य फलम् । वक्ता विद्यावरः क्षीणदुःखितः । इति जातकम् ॥ जन्मकालीनचन्द्राश्रिततद्राशिफलम् ।

“वृषतुरङ्गगजक्रयविक्रयो
द्विजसुरार्च्चनदानमनाः पुमान् ।
शशिनि तौलिगते बहुदारभा-
गिभवसञ्चितवित्तविक्रमः ॥”

इति कोष्ठीप्रदीपः ॥

तस्या उदये तन्नामकलग्नं भवति । तस्य गणितप्राणपरिमाणं दशाधिकशताधिकपञ्चाङ्गुलप्रभे देशे वर्त्तमानेनविंशतिचत्वारिंशत् पलाधिकपञ्चदण्डाः । इति ज्योतिषम् ॥ तत्र जातफलम् ।

“तुलालग्ने पुमान् जातः सुधीः सत्कर्म्मतत्परः ।
विद्वान् सर्व्वकलाभिज्ञो धनाढ्यो जनपूजितः ॥”

इति कोष्ठीप्रदीपः ॥ * ॥

परीक्षाविशेषः । यथा नारदः ।

“ब्राह्मणस्य घटो देयः क्षत्त्रियस्य हुताशनः ।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु ॥
साधारणः समस्तानां कोषः प्रोक्तो मनीषिभिः ।
विषवर्ज्जं ब्राह्मणस्य सर्व्वेषान्तु तुला स्मृता ॥” *

अथ तस्या उत्पत्तिविधिः । यज्ञियं वृक्षं यूपवच्छेदनपूर्व्वकं छित्त्वा लौकपालेभ्यः प्रणम्य चतुर्हस्ता चतुरस्रा ऋज्वी तुला कार्य्या तत्र चिह्नस्थानेषु वलयानि दातव्यानि । तत्र पञ्चहस्तौ स्तम्भौ कृत्वा हस्तद्वयखननेन दक्षिणोत्तरयोर्दिशोर्हस्तद्वयनिखननं कृत्वा पट्टधारकतोरणकाग्रस्तम्भयोरुपरि अग्रद्वयच्छिद्रमध्यनिवेशितलौहाङ्कुशपट्टकं निधाय तत्पट्टकस्य मध्यस्थिताङ्कुशेन तुलामध्यवलयस्थलौहं संयुञ्ज्यात् । एवञ्च सति स्तम्भयोरन्तरतिर्य्यक् तुलादण्डस्तिष्ठति तुलाग्रस्थिताभ्यामायसकीलकाभ्यां शिक्यद्वयरज्जुबन्धनं कुर्य्यात् । तुलायाः पार्श्वयोः प्राक्प्रत्यग्दिशोस्तोरणस्तम्भौ तुलातो दशाङ्गुलोच्छ्रायौ कार्य्यौ तोरणयोरुपरिस्थसंनद्धौ लम्बमानावधोमुखौ घटमस्तकचुम्बिनाववलम्बौ कार्य्यौ । तुलादण्डः पूर्व्वपश्चिमयोर्धार्य्यः । पूर्व्वशिक्ये शिलां तोलयेत् पश्चिमे कर्त्तारं तुलाया उपरि जलं देयं यदि जलं न प्रवते तदा तुला समा ज्ञेया ॥ * ॥ अथैतत्प्रयोगः । कृतोपवासः कृतस्नानादिः प्राड्विवाको ब्राह्मणः कार्य्यं दृष्ट्वेतु निवेदितं विवेचयेत् । ततोऽभियुक्तं तोलयित्वावतार्य्य धर्म्मावाहनादिकं कुर्य्यात् । ॐ तत् सदित्युच्चार्य्य ब्राह्मणत्रयं गन्धादिना पूजयित्वा तान् स्वस्तिपुण्याहम्ऋद्धिं प्रत्येकं निर्व्वाचयित्वा दिशाङ्गभूतहोमार्थं ब्रह्मचतुष्टयं ऋत्विक्चतुष्टयञ्च माल्यादिभिरभ्यर्च्च्य वृणुयात् । अशक्तावेकं ब्राह्मणमेकं ऋत्विजञ्च । ततस्तुलां सपताकां ध्वजालङ्कृतां भूमौ निधाय तस्यां प्राङ्मुखः प्राड्विवाकः पुष्पाक्षतमादाय ॐ भूर्भुवः स्वरित्युच्चार्य्य ।

एह्येहि भगवन् धर्म्म ! दिशे ह्यस्मिन् समाविश ।

"मित्राणामुपकाराय दुर्हृदां नाशनाय च ।")
दुश्चित्त, त्रि। (यथा, महाभारते ।३।३१२।१२।
"अश्मसारमयं नूनं हृदयं मम दुश्चित्तं ।
यमौ यदेनौ दृष्टाद्य पतितौ नावदीर्य्यते ॥")
दुर्हृदय, त्रि, ( दुष्टं हृदयं यस्य । अप्रशस्तत्वे न हृद्भावः ।) दुष्टान्तःकरणः । इति शब्दार्थकल्पतरुः ॥
दुल, क उत्क्षेपे । इति कविकल्पद्रुमः ॥ ( चुरां पर सक-सेट । ) क, दोलयति धूलिं वायुः । इति दुर्गादासः ॥
दुलि, पु, (दोलमीति । दुल + 'इगुपधात् कित् ।" उणां ४ । ११८ । इति इन् ।) मुनिविशेषः । कमठ्याम् स्त्री । इति मेदिनी । ले २६ ॥
दुली, स्त्री (दुल + इन् । वा ङीष् ।) दुलिः । इत्यमरटीकायां भरतः ॥
दुश्चर, त्रि, ( दुःखेन चरतीति । दुर् + चर + अच । ) भल्लूकः । इति हारावली । ११२ ॥ भल्लूकः । इति राजनिर्घण्टः ॥ (दुःखेन चर्य्यते इति । खल् । ) दुर्गमे, त्रि । (यथा रामायणे । ३ । २६ । ७ ।
'प्रविष्टा सीतया सार्द्धं दुश्चरं दण्डकं वनम् ।"
दुश्चरणीये, त्रि । यथा, महाभारते । १२ । २३ । ६ ।
'त्वयराद्य विधिं पार्थ ! दुश्चरं दुर्बलेन्द्रियैः ॥ )
दुश्चर्म्मा, [ न् ] पु, ( दुष्टं चर्म्म यस्य । ) अप्राकृतमेढ्रः । 'यथा दुश्चर्म्मा गुरुतल्पगः ।" इति स्मृतिः ॥ तत्पर्य्यायः । छिन्नमेढ्रः २ चर्म्मी ३ शिपिविष्टः ४ । इति हेमचन्द्रः । ३ । ११८ ॥ कोठरोगः । इति राजनिर्घण्टः ॥
दुश्चिक्य, क्ली, लग्नात् तृतीयलग्नम् । यथा,—
'स मेषूरणमासाद्य मदनमे यामिनमस्तुते दूनवापि सुहृद्दृये तु हिबुकं पातालमम्भोऽपि च ।
दुश्चिक्यं सहजे वदन्ति सुतयो रिपुः ततो द्वादशे षटकोणं रिपुमन्दिरे नवमभे चाद्यं त्रिकोणं पुनः ॥"
इति दीपिका ॥
दुश्च्यवन, पु ( दुःखेन च्यवनं बहुकालानन्तरं पतनं यस्य । दुर्दुश्च्यवनः शिवो यस्य । शिवेन चाभिभूतत्वात् तथात्वम् । यद्वा दुःखेन च्यूयते इति । च्यु ङ गतौ + छन्दसि गत्यर्थेभ्यः ।' ३ । ३ । १२६ । इति युच् ।) इन्द्रः । इत्यमरः । १ । १ । ४७ ॥ (अविचाल्ये त्रि । यथा, ऋग्वेदे । १० । १०३ । २ ।
'युतकारेण दुश्च्यवनेन धृष्णुना । ')
दुष, ईर य च्यौ वैकृते । इति कविकल्पद्रुमः ॥ (दिवा पर अक अनिट ।) वैकृतमशुद्धीभावः । दर, अदुषत अदुक्षत । अस्मात् पुषादित्वान्नित्यं ङ इत्यर्थे । य, दुष्यति लोकः पापात । च्यौ, दोषः । इति दुर्गादासः ॥
दुष्कर, क्ली, (दुःखेन क्रियते इति । कृ + खल् ।) व्योमम् । इति शब्दार्थकल्पतरुः ॥ (भावे खल । ) दुःखेन करणम् । ( कर्म्मणि खल । ) दुःखेन क्रियमाणे, त्रि । इति मुग्धबोधम् ॥ ( यथा देवीभागवते । ५ । १ । ३ ।
'वने गत्वा तपस्तप्तं वासुदेवेन दुष्करम् ।
विष्णोरवतारेण शिवस्याराधनं कृतम् ॥")
दुष्कर्म्म, [ न् ] क्ली (दुष्टं कर्म्म ।) पापम् । यथा,
"दुष्कर्म्मजा नृणां रोगा यान्ति चैव क्रमात् क्षमम् ।
जपैः सुरार्च्चनैर्होमैर्दानैस्तेषां शमो भवेत् ॥"
इति शातातपीयकर्म्मविपाकः ॥
( निन्दितकर्म्म ॥ ) दुष्टं कर्म्म यस्येति विग्रहे । दुष्कर्म्मकारके, त्रि । यथा, महाभारते । ५ । १३२ । २० ।
ततो वसति दुष्कर्म्मा नरके शाश्वतीः समाः ॥")
दुष्कुलीन पु चोरनामगन्धद्रव्यम् । इति शब्दरत्नावली ॥ (दुष्कुले भवः । दुष्कुल + पक्षे ख । दुष्कुलोद्भवे त्रि । इति शब्दार्थकल्पतरुः ॥ ( यथा, महाभारते । ५ । ३८ । ४६ ।
'दुष्कुलीनः कुलीनो वा मर्य्यादां यो न लङ्घयेत् ।")
दुष्कृत क्ली, (दुष्टं कृतम् ।) पापम् । इत्यमरः । १ । ४ । २३ ॥ तत् तत्कर्त्तुर्भरणानन्तरं तेन सह गच्छति । यथा,—
'गृहादर्थो निवर्त्तन्ते श्मशानादपि बान्धवाः ।
सुकृतं दुष्कृतं लोके गच्छन्तमनुगच्छति ॥
तस्माद्वित्तं समायाद्य देवाद्वा पौरुषादथ ।
दद्यात् सम्यक् द्विजातिभ्यः कीर्त्तनानि च कारयेत् ॥"
इति वह्निपुराणे यमानुशासननामाध्यायः ॥
( दुष्कृते, त्रि । यथा, महाभारते ।८।४३।२०।
"युष्माकंचापमादेन दुष्कृतेन च कर्म्मणा ।
यतपाप वह्वोऽस्माकं यत सा महाराक्षसा ।")
दुष्क्रीत त्रि, ( दुःखेन क्रीयते स्म इति । दुर् + क्री + क्त ।) महार्घम् । यथा,—
"क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयन्तत् तस्मिन्नेवाह्न्यविक्षतम् ॥"
इति प्रायश्चित्ततत्त्वे नारदः ॥
दुष्खन क्ली, (दुष्टं खनति आविष्करोतीति । खन + ड । 'इणः षः ।" ८ । ३ । ३९ । इति विसर्गस्य षः ।) दुःखम् । इत्यमरटीकायां भरतः ॥
दुष्खदिर पु, (दुष्टः खदिरः इति प्रादिसमासः ।) खदिरभेदः । तत्पर्य्यायः । कामोसी २ कालस्कन्धः ३ गोरटः ४ अमरलः ५ पथतरः ६ बहुसारः ७ सारखदिरः ८ महासारः ९ क्षुद्रखदिरः १० । अस्य गुणाः । कटुत्वम् । उष्णत्वम् । तिक्तत्वम् । रक्तप्रणोत्थदोषकफार्त्तिविषवीसर्पज्वरकुष्ठोन्मादभूतनाशित्वञ्च । इति राजनिर्घण्टः ॥
दुष्ट क्ली, ( दुष + क्त । ) कुष्ठम् । इति शब्दचन्द्रिका ॥ कुड इति ख्यातम् ॥
दुष्ट, त्रि, ( दुष्यतीति + दुष + कर्त्तरि क्त । ) दुर्बलः । अधमः । इति विश्वः ॥ (यथा, महाभारते ।३।२३३।११ ।
"महाकुलीनाभिरपापिकाभिः स्त्रीभिः सतीभिस्तव सख्यमस्तु ।
चण्डाश्च शौण्डाश्च महाशनाश्च चौराश्च दुष्टाश्च चलाश्च वर्ज्याः ॥)
दुष्टव्रण, पु, (दुष्टो व्रण इति कर्म्मधारयः ।) प्रमेहपिडका । गहा गद इति भाषा । तत्पर्य्यायः । गलिः २ । इति हेमचन्द्रः ।४।१२४॥
दुष्टा, स्त्री, ( दुष्यति सा योनिदोषेणेति । दुष + क्त + टाप । ) पुंश्चली । इति शब्दरत्नावली ॥
दुष्ठु अ ( दुर् निन्दितं तिष्ठतीति + दुर् + स्था + "अपदुःसुषु स्थः ।" उणां । १।२६ । इति कुः । "सुषमादिषु च ।" ८।३।९८ । इति सुषमादित्वात् षत्वम् ।) निन्दा । इत्यमरः । ३ । ४ । १८ ।
दुष्ठु त्रि, ( दुर्निन्दितस्तिष्ठतीति + दुर् + स्था + कु षत्वञ्च ।) अविनीतः । इत्युणादिकोषः ॥
दुष्पत्र, पु, ( दुष्टानि पत्राणि यस्य । ) चोरनामगन्धद्रव्यम् । इत्यमरः ।२।४।१२८॥
दुष्प्रधर्षणी, स्त्री, (दुःखेन प्रधृष्यते इति । धृष + कर्म्मणि ल्युट् स्त्रियां ङीप् । यद्वा, भावार्थे दुष्प्रधर्षणीति युच् ।) वार्त्ताकी । इत्यमरः । २ । ४ । ११४ ॥ ( पु, धृतराष्ट्रपुत्रभेदः । यथा महाभारते । १ । ६७ । ९४ ।
"चित्राङ्गविन्दौ दुर्द्धर्षं सुबाहुर्दुष्प्रधर्षणः ।"
दुःखेन धर्षणीये, त्रि । यथा, रामायणे । ३ । १८ । ६ ।
"प्रविश्य चाश्रमवरं तस्यापि दुष्प्रधर्षणम् ।
तपोवनाश्रमपदं प्रविवेश निवेशितुम् ॥")
दुष्प्रधर्षा, स्त्री, (दुःखेन प्रधृष्यते इति । प्र + धृष + अच + टाप ।) दुरालभा । खर्ज्जूरी । इति राजनिर्घण्टः ॥ (पुं, धृतराष्ट्रपुत्रभेदः । यथा महाभारते । ६ । ६१ । २५ ।
"उग्रो भीमरथो भीमो वीरवाहुरलोलुपः ।
दुर्म्मुखो दुष्प्रधर्षश्च विविंशतिर्विकटः समः ।"
(दुःखेन पराभवनीये त्रि । यथा, महाभारते । ५ । १५१ । ४६ ।
"शारदत्रृणमसाकं दुष्प्रधर्षं दुरासदम् ।")
दुष्प्रधर्षिणी, स्त्री, ( नौपुंघेन दुःखेन धृष्यते इति । धृष + आभीक्ष्ण्ये णिनिः ।) दुष्प्रधर्षिणी । इत्यमरटीकायां भरतः ॥ कण्टकारी । इति राजनिर्घण्टः ॥ दन्ती । इति भावप्रकाशः ॥
दुष्प्रवेशा, स्त्री, ( दुःखेन प्रविश्यते इति । प्र + विश + कर्म्मणि अच । टाप च ।) कन्थारी वृक्षः । इति राजनिर्घण्टः । ( दुष्प्रवेशनीये, त्रि । यथा, रामायणे । ३ । ६ । २ ।
'कुशचीरपरिक्षिप्तं ब्राह्म्या लक्ष्म्या समावृतम् ।
दुष्प्रवेशं दुराधर्षं दुर्य्यमण्डलवर्च्चसम् ।')
दुष्मन्त, पु, (दुष दोषवर्ती मन्यते शकुन्तलामिति । दुष + मन् + क्त । निपातनात् साधु ।) चन्द्रवंशीयराजविशेषः । स ऐलिपुत्रः । तस्य पुत्रो भरतराजचक्रवर्त्ती । पत्नी शकुन्तला । इति श्रीभागवतम् ॥ ( यथा, महाभारते ।१।६८।३ ।
'पौरवाणां वंशकरो दुष्मन्तो नाम वीर्य्यवान् ।

पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ! ॥"
विवरणमस्य तदध्यायात् विस्तरशो मन्तव्यम् ।
दुष्यन्त इत्यपि पाठः ॥ )

दुस्पर्शः, पुं, (दुःखेन स्पृश्यते इति । दुर् + स्पृश + कर्म्मणि खल् । विसर्गस्य वा लोपः ।) दुरालभा । इत्यमरटीकायां भरतः ॥ ( पर्य्यायोऽस्य यथा,
"यासो यवासो दुस्पर्शो धन्वयासः कुनाशकः ।
दुरालभा दुरालम्भा समुद्रान्ता च रोदिनी ॥
गान्धारी कच्छुरानन्ता कषाया हरविग्रहा ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
दुःखस्पृश्ये, त्रि ॥

दुस्थः, पुं, ( दुःखेन तिष्ठतीति । दुः + स्था + कः । ) कुक्कुरः । कुक्कुटः । इति शब्दार्थकल्पतरुः ॥ (दुःस्थिते, त्रि । यथा, भट्टौ । २ । ३६ ।
"वलिर्ब्बबन्धे जलधिर्म्ममन्थे
जह्रेऽमृतं दैत्यकुलं विजिग्ये ।
कल्पान्तदुस्था वसुधा तथोहे
येनैष भारोऽतिगुरुर्न तस्य ॥" )

दुह, इर् अर्द्दने । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् ।) इर्, अदुहत् अदोहीत् । अर्द्दनमिह वधः । इति दुर्गादासः ॥

दुह, ल ञ औ दुहि । इति कविकल्पद्रुमः ॥ (अदां-उभं-सकं-अनिट् ।) धुक् दोहनम् । तच्च यत्तीकरणमिति धातुपारायणिकाः । ञ ल, दोग्धि दुग्धे गां दुग्धं गोपः । स्वयं प्रदुग्धास्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनीति किराते वसूनीति कर्म्मणो विद्यमानतया कर्म्मकर्तृत्वाभावात् स्खलितमित्येके । दुहादेरप्रधानकर्म्मविषये कर्म्मकर्तृत्वे प्रधानकर्म्मप्रयोगो दुर्न्निवारः । इति कुलचन्द्रः ॥ स्वमते तु अतएवानयोर्द्वेऽपि इवत्त्वमिति वचनात् प्रचदुह्योः कर्म्मणि विद्यमानेऽपि कर्म्मकर्तृत्वम् । इति दुर्गादासः ॥

दुहिता, [ ऋ ] स्त्री, ( दोग्धि विवाहादिकाले धनादिकमाकृष्य गृह्णातीति । यद्वा, दोग्धि गा इति । आर्षकाले कन्यासु एव गोदोहनभारस्थितेस्तथात्वम् । दुह + "नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ ।" उणां । २ । ९६ । इति तृच् । निपातनात् गुणाभावः ।) कन्या । इत्यमरः । २ । ६ । २८ ॥ कन्यादानपात्रापात्रं यथा,—
"ज्ञात्वा परीक्षां कान्तस्य वृणोति कामिनी वरम् ।
वराय गुणहीनाय वृद्धायाज्ञानिने तथा ॥
दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च ।
अत्यन्तकोपयुक्ताय चात्यन्तदुर्मुखाय च ॥
चापलायाङ्गहीनाय चान्धाय वधिराय च ।
जडाय चैव मूर्खाय क्लीवतुल्याय पापिने ॥
ब्रह्महत्यां लभेत् सोऽपि यः स्वकन्यां ददाति च ।
शान्ताय गुणिने चैव यूने च विदुषेऽपि च ॥
वैष्णवाय सुतां दत्त्वा दशवाजीफलं लभेत् ॥"* ॥
कन्याविक्रये दोषो यथा,—
"यः कन्यापालनं कृत्वा करोति विक्रयं यदि ।
विपदा धनलोभेन कुम्भीपाकं स गच्छति ॥
कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी ।
कृमिभिर्द्दंशितः काकैर्यावदिन्द्राश्चतुर्द्दश ॥
मृतश्च व्याधयोनौ च स लभेज्जन्म निश्चितम् ।
विक्रीणीते मांसभारं वहत्येवं दिवानिशम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
कन्यादानफलं यथा,—
"दशवाजीसमा कन्या दीयते ब्राह्मणाय तत् ।
वेदज्ञाय पवित्राय चाप्रतिग्रहशालिने ॥
सन्ध्यायज्ञवेदपाठकारिणे सत्यवादिने ।
अस्मै प्रदत्ता कन्या च दशवाजीफलप्रदा ॥
त्रिसन्ध्याकारिणे सत्यवादिने गृहशालिने ।
वेदज्ञाय च विप्राय दत्तार्द्धफलदायिनी ॥
प्रतिग्रहगृहीताय सन्ध्याहीनाय नित्यशः ।
मूर्खाय दत्ता कन्या च सा चतुःफलदायिनी ॥
परदारगृहीताय याजकाय द्विजाय च ।
शठाय सन्ध्याहीनाय वार्षिकफलदा सुता ॥
सर्व्वसन्ध्यास्नानयज्ञविहीनाय शठाय च ।
विप्रोद्भवाय दत्ता या वार्षार्द्धफलदा सुता ॥
पापिने शूद्रदासाय विप्रवंशोद्भवाय च ।
दत्ता चाण्डालतुल्याय कन्या सा नरकप्रदा ॥
विष्णुभक्ताय विदुषे विप्राय सत्यवादिने ।
जितेन्द्रियाय दत्ता या विंशद्वाजीफलप्रदा ॥
षष्टिवर्षसहस्राणि दिव्यरूपं विधाय च ।
एवम्भूताय दत्ता च मोदते विष्णुमन्दिरे ॥
दत्त्वा कन्यां सुशीलाय हराय हरयेऽथवा ।
नारायणस्वरूपश्च भवेदेव श्रुतौ श्रुतम् ॥
विष्णुभक्तो यदा कन्यां ददाति विष्णुप्रीतये ।
स लभेद्धरिदास्यञ्च ध्रुवं विप्रोद्भवाय च ॥" * ॥
विवाहानन्तरं कन्याया भर्तृगृहगमनसमये पित्रादीनां रोदनं शास्त्रसिद्धम् । यथा दुर्व्वाससा सह और्व्वकन्यायाः कन्दल्या विवाहे ।
"कन्यासमर्पणं कृत्वा मोहादुच्चै रुरोद च ।
मूर्च्छामवाप स मुनिः स्वकन्याविरहातुरः ॥
अपत्यभेदशोकौघः स्वात्मारामं न मुञ्चति ।
क्षणेन चेतनां प्राप्य बोधयामास कन्यकाम् ॥
मूर्च्छितां तातविच्छेदाद्रुदन्तीं शोकसंयुताम् ॥"
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डश्रीकृष्णजन्मखण्डे ॥

दुहितुःपतिः, पुं, (दुहितुः सुतायाः पतिः । "विभाषा स्वसृपत्योः ।" ६ । ३ । २४ । इति विभक्त्यलुक् ।) जामाता । इत्यमरटीकासारसुन्दरी ॥

दुह्यं, क्ली, ( दुह्यते इति । दुह + "एतिस्तु शास्‌ वृदृजुषः क्यप् ।" ३ । १ । १०९ । इत्यत्र "शंसि दुहिगुहिभ्यो वा ।" इति काशिकोक्तेः क्यप् ।) दोहनयोग्यम् । दोह्यम् । इति व्याकरणम् ॥

दू, ओ ङ य खेदे । इति कविकल्पद्रुमः ॥ ( दिवां-आत्मं-अकं-सकं च-सेट् । ) खेद इह उपतप्तीकरणमुपतप्तीभावश्च । ओ, दूनः । ङ य, दूयते दैन्यं जनम् । इति चतुर्भुजः । मां कथं पश्यन्न दूयसे इति रघुः । इति दुर्गादासः ॥

दूडभः, त्रि, (दुर्दुःखेन दभ्यते इति । दुर् + दभ + खल् । "दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वञ्च ।" ६ । ३ । १०९ । इत्यस्येति वार्त्तिकोक्त्या उत्वं भस्य डत्वञ्च ।) असनप्रापः । विपद्युक्तः । इति संक्षिप्तसारः ॥ ( दुर्दम्यः । यथा, ऋग्वेदे । १ । २५ । ६ ।
"युवं दक्षं धृतव्रतमित्रावरुणदूळभम् ॥"
"दूडभं दुर्दम्यं शत्रुभिर्दम्धुं विनाशयितुमशक्यमित्यर्थः ।" "दूडभं दह भस्मीकरणे दुःखेन दह्यते इति दुर्दह्यं ईषद्दुःसुष्वित्यादिनादुरित्युपपदे दभेः खल् व्यत्ययो बहुलमित्युकारस्य ऊकारो रेफस्य लोपः दकारस्य डकारो हकारस्य च भकारः ॥" इति तद्भाष्ये सायनः ॥ )

दूडाशः, त्रि, ( दुःखेन दाश्यते यः । दुर् + दाशि + खल् । "पृषोदरादीनि यथोपदिष्टम् ।" ६ । ३ । १०९ । इत्यस्य "दुरो दाशनाशेति ।" वार्त्तिकोक्त्या ऊत्वं डत्वञ्च । ) पीडायुक्तः । इति सिद्धान्तकौमुदी ॥ (यथा, अथर्व्ववेदे ।२।१३।१।
"नमस्ते अस्त्वश्मने येना दूडाशे अस्यसि ॥" )
दन्त्यसान्तोऽपि ॥

दूढ्यः, त्रि, ( दुःखेन ध्यायतीति । दुर् + ध्यै + खल् । "दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वञ्च ।" ६ । ३ । १०९ । इत्यस्य वार्त्तिकोक्त्या ऊत्वं ढत्वञ्च ।) अधमः । इति सिद्धान्तकौमुदी ॥

दूणाशः, त्रि, ( दुःखेन नाश्यते ऽसौ । दुर् + नाशि + खल् । "दुरो दाशनाशेति ।"।६।३।१०९। इत्यस्य वार्त्तिकोक्त्या ऊत्वं णत्वञ्च । ) दुःखेन नष्टः । इति सिद्धान्तकौमुदी ॥ ( नाशयितुमशक्य । यथा, ऋग्वेदे । ८ । ६३ । ११ ।
"यो दूणाशो वनुष्यता ॥" )

दूतः, पुं, ( दूयते वार्त्तावहनादिनेति । दू + "दूतनिभ्यां दीर्घश्च ।" उणां । ३ । ९० । इति क्तः दीर्घश्च ।) वार्त्ताहरः । तत्पर्य्यायः । सन्देशहरः २ । इत्यमरः । २ । ८ । १६ ॥ सन्दिष्टकथकः ३ । इति शब्दरत्नावली ॥ तस्य लक्षणं यथा,—
"यथोक्तवादी दूतः स्याद्देशभाषाविशारदः ।
शक्तः क्लेशसहो वाग्मी देशकालविभागवित् ॥
विज्ञातदेशकालश्च दूतः स्यात् स महीक्षितः ।
वक्ता नयस्य यः काले स दूतो नृपतेर्भवेत् ॥"
इति मत्स्यपुराणम् ॥
अपि च ।
"मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः ।
धीरो यथोक्तवादी च एष दूतो विधीयते ॥"
इति चाणक्ये । १०६ ॥
अन्यच्च ।
"परेङ्गितज्ञः परवाग्ग्राह्यार्थस्वामि तत्त्ववित् ।
सदोत्पन्नमतिर्धीरो दूतः स्यात् पृथिवीपतेः ॥
दूतञ्चैव प्रकुर्व्वीत सर्व्वशास्त्रविशारदम् ।
इङ्गितज्ञं तथा सभ्यं दक्षं सत्कुलसम्भवम् ॥
अनुरक्तः शुचिर्दक्षः स्मृतिमान्देशकालवित् ।
वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥
दूत एव हि सन्धत्ते भिनत्त्येव हि संहतान् ।
विग्रहार्थी मितार्थश्च तथा शासनहारकः ॥

"मित्राणामुपकाराय दुर्हृदां नाशनाय च ।")
दुष्करित्त, त्रि । (यथा, महाभारते ।३।३१।१२।
"यस्मामारमय मन हृदय मम दुर्हृद ।
यमौ यदेनौ दृष्ट्वाद्य पतितौ नावदीर्यते ॥")
दुर्हृदय, त्रि, ( दुर्हृदं हृदयं यस्य । अप्रतुलेन न हृदभाव ।) दुष्टान्तःकरण । इति शब्दार्थकल्पतरु ॥
दुल, क उत्क्षेपे । इति कविकल्पद्रुमः ॥ ( चुरां पर सक-सेट । ) क, दोलयति धूलिं वायुः । इति दुर्गादासः ॥
दुलि पु, (लोलतीति । दुल+ "इगुपधात् कित् ।" उणां ४ । ११६ । इति इन् । ) मुनिविशेषः । कमठाम् स्त्री । इति मेदिनी । ले २६ ॥
दुली स्त्री, (दुल+इन् । वा ङीष् ।) दुलि । इत्यमरटीकायां भरत ॥
दुश्चर, पु, ( दुर्दुःखेन चरतीति । दुर्+चर+ अच ।) भ्रमक । इति हारावली । ११२ ॥ भल्लूक । इति राजनिर्घण्टः ॥ (दुर्दुःखेन चर्यते इति । खल । ) दुर्गमे, त्रि । (यथा रामायणे ३ । २६ । ७ ।
'प्रविष्टो सीतया सार्द्धं दुश्चरं दण्डकं वनम् ॥"
दुश्चरणीये, त्रि । यथा, महाभारते । १२ । ७३ । ६ ।
'तपश्चराद्य विधि पार्थ । दुश्चर दुर्बलेन्द्रिये ॥")
दुश्चर्म्मा, [ न् ] पु, ( दुष्टं चर्म्म यस्य । ) अप्रावृत मेढ्र । "यथा दुश्चर्म्मा गुरुतल्पगः ।" इति स्मृतिः ॥ तत्पर्याय । द्विनग्नक २ चर्म्मी ३ शिपिविष्ट ४ । इति हेमचन्द्र । ३ । ११८ ॥ कोढरोग । इति राजनिर्घण्ट ॥
दुश्चिक्य क्ली, लग्नात् तृतीयस्थानम् । यथा,—
'स मेषूरणमासाद्य मदनमे यामिनमक्षनुते दानचापि सुहृद्दृशे तु द्विकं पातालमम्भोऽपि च ।
दुश्चिक्य सहजे वदन्ति सुतयो रिपक्षतो द्वादशे षटकोणं रिपुमन्दिरे नवममे धर्माद्य त्रिकोणा पुन ॥"
इति दीपिका ॥
दुश्च्यवन पु, ( दुर्दुःखेन च्यवनं वल्कादागमनं पतनं यस्य । इदुश्चयावन शिवो यस्य । शिवेन चाभिभूतत्वात् तथात्वम् । यद्वा दुर्दुःखेन च्यवते इति । च्यु ङ गतौ+' छन्दसि गत्यर्थेभ्य ।" ३ । ३ । १२६ । इति युच ।) इन्द्र । इत्यमर । १ । १ । ४५ ॥ ( अविचाल्ये त्रि । यथा, ऋग्वेदे । १० । १०३ । २ ।
"युत्कारेण दुश्च्यवनेन धृष्णुना । )
दुष, इर य वैकृते । इति कविकल्पद्रुमः । ((न्वां पर अक अनिट् ।) वैकृतमशुद्धीभाव । इर, अदुषत अदूषत् । अस्मात् पुषादिपाठात् नित्य ङ इत्यन्ये । य, दुष्यति लोक पापात । घौ, दोषा । इति दुर्गादासः ॥
दुष्कर, क्ली, (दुर्दुःखेन क्रियते इति । कृ+खल ।) आकाशम् । इति शब्दार्थकल्पतरु । ( भावे खल् । ) दुःखेन करणम् । ( कर्म्मणि खल । ) दुःखेन क्रियमाणे, त्रि । इति मुग्धबोधम् ॥ ( यथा देवीभागवते । ५ । १ । ३ ।
'वने गत्वा तपस्तप्तं वासुदेवेन दुष्करम् ।
विष्णोरवतारेण शिवस्याराधनं कृतम् ॥")
दुष्कर्म्म [ न् ] क्ली (दुष्टं कर्म्म ।) पापम् । यथा,
"दुष्कर्म्मजा नृणां रोगा यान्ति चैव क्रमात् क्षयम् ।
जपैः सुरार्च्चनैर्होमैर्दानैस्तेषां शमो भवेत् ॥"
इति शातातपीयकर्म्मविपाक ॥
( निन्दितकर्म्मणि । दुष्टं कर्म्म अस्येति विग्रहे । दुष्कर्म्मकारके, त्रि । यथा, महाभारते । ५ । ३२ । २० ।
तत्रो वसति दुष्कर्म्मा नरके शाश्वतीः समाः ॥")
दुष्कुलीन पु चोरनामगन्धद्रव्यम् । इति शब्दरत्नावली ॥ (दुष्कुले भव । दुष्कुल+खः । दुष्कुलोद्भवे, त्रि । इति शब्दार्थकल्पतरुः ॥ ( यथा, महाभारते । ५ । ३८ । ४६ ।
'दुष्कुलीनः कुलीनो वा मर्य्यादां यो न लङ्घयेत् ॥")
दुष्कृत क्ली, (दुष्टं कृतम् । ) पापम् । इत्यमर । १ । ४ । २३ ॥ तत्तु तत्कर्त्तुर्मरणानन्तरं तेन सह गच्छति । यथा,—
'गृहादर्थां निवर्त्तन्ते श्मशानादपि बान्धवाः ।
सुकृतं दुष्कृतं लोके गच्छन्तमनुगच्छति ॥
तस्माद्विप्र समासाद्य देवाद्वा पौरुषादपि ।
दद्यात् सम्यक् द्विजातिभ्यः कीर्त्तनानि च कारयेत् ॥"
इति वह्निपुराणे यमानुशासननामाध्यायः ॥
( दुष्कृते, त्रि । यथा, महाभारते ।५।४३।२० ।
"शुभाकाशप्रसादेन दुष्कृतेन च कर्म्मणा ।
यत् पापं वहतीः लोकं स सो ब्रह्मराक्षसः ॥")
दुष्क्रीत त्रि, ( दुर्दुःखेन क्रीयते स्म इति । दुर्+ क्री+क्त ।) महार्घम् । यथा,—
"क्रीत्वा मूल्येन यो द्रव्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्न्यविक्षतम् ॥"
इति प्रायश्चित्ततत्त्वे नारदः ॥
दुष्खन क्ली, (दुष्टं खनति आविष्करोतीति । खन+ड । "डश्च ।" ८ । ३ । ४८ । इति विसर्गस्य षः ।) दुःखम् । इत्यमरटीकायां भरत ॥
दुष्खदिर पु, (दुष्टः खदिरः इति प्रादिसमासः ।) खदिरविशेषः । तत्पर्याय । काम्बोजी २ । कालस्कन्ध ३ गोरट ४ अमरज ५ मसृण ६ बहुसार ७ सारखदिर ८ महासार ९ सुदखदिर १० । अस्य गुणाः । कटुत्वम् । उष्णत्वम् । तिक्तत्वम् । रक्तप्रमोददोषकण्डूति विषवीसर्पश्वित्रकुष्ठोन्मादभूतनाशित्वञ्च । इति राजनिर्घण्टः ॥
दुष्ट, क्ली, ( दुष+क्त । ) कुष्ठम् । इति शब्दचन्द्रिका ॥ कुड इति ख्यातम् ॥
दुष्ट, त्रि, ( दुष्यतीति+दुष+कर्त्तरि क्त । ) दुर्ब्बल । अधम । इति विश्व । (यथा, महाभारते ।३।२६३।११ ।
"महाकुलीनाभिरमायिकाभि
स्त्रीभि सतीभिश्च सत्यमस्तु ।
चण्डाश्च प्रौढाश्च महाशनाश्च
चौराश्च दुष्टाश्च मलाश्च वर्ज्ज्या ॥)
दुष्टव्रण , पु, (दुष्टो व्रण इति कर्म्मधारयः ।) अपशुर्व्वक । गडया गव इति भाषा । तत्पर्याय । गलि २ । इति हेमचन्द्र ।४।१३१।
दुष्टा, स्त्री, ( दुष्यति सा योनिदोषेणेति । दुष+ क्त+टाप । ) पुंश्चली । इति शब्दरत्नावली ॥
दुष्ठु, अ (दुर् निन्दितं तिष्ठतीति+दुर्+स्था+ "अपदुःसुषु स्थ ।" उणां । १।२६ । इति कु । "सुषमादिषु च ।" ८।३।९८ । इति सुषमादित्वात् षत्वम् ।) निन्दा । इत्यमरः । ३ । ४ । १६ ।
दुष्ठु त्रि, ( दुर्निन्दितस्तिष्ठतीति+दुर्+स्था+ कु षत्वञ्च ।) अविनीत । इत्युणादिकोष ॥
दुष्पत्र, पु, ( दुष्टानि पत्राणि यस्य । ) चोरनामगन्धद्रव्यम् । इत्यमर ।२।४।१२९ ॥
दुष्प्रधर्षणी, स्त्री, (दुर्दुःखेन प्रधृष्यते इति । धृष +कर्म्मणि ल्युट् स्त्रियां ङीप् । यद्वा, भावार्थां दुष्प्रधर्षतीति युच । ) वार्त्ताकी । इत्यमर । २ । ४ । ११४ ॥ ( पु, धृतराष्ट्रपुत्रभेदः । यथा महाभारते । १ । ६७ । ९४ ।
"विन्दानुविन्दौ दुर्द्धर्षं सुबाहुर्दुष्प्रधर्षणः ।"
दुःखेन धर्षणीये, त्रि । यथा, रामायणे । ३ । १८ । ९ ।
"प्रविश्य चाश्रमपदं तद्वधि दुष्प्रधर्षणम् ।
तपोवृक्षाश्रमपदं प्रविवेश निवेदितुम् ॥")
दुष्प्रधर्षा, स्त्री, (दुःखेन प्रधृष्यते इति । प्र+धृष +अच+टाप ।) दुरालभा । खर्ज्जूरी । इति राजनिर्घण्टः । (पुं, धृतराष्ट्रपुत्रभेदः । यथा महाभारते । ६ । ६१ । २५ ।
"उग्रो भीमरथो भीमो वीरबाहुरलोलुपः ।
दुर्म्मुखो दुष्प्रधर्षश्च विवित्सुर्विकटः समः ॥"
(दुःखेन पराभवनीये त्रि । यथा, महाभारते । ५ । १५१ । ४६ ।
"सागरवदक्षमक्षाक्क दुष्प्रधर्षं दुरासदम् ॥")
दुष्प्रधर्षिणी, स्त्री, ( पौनःपुन्येन दुःखेन धृष्यते इति । धृष+आभीक्ष्ण्ये णिनि ।) दुष्प्रधर्षणी । इत्यमरटीकायां भरत । कण्टकारी । इति राजनिर्घण्टः । इक्षुली । इति भावप्रकाश ॥
दुष्प्रवेशा, स्त्री, ( दुःखेन प्रविश्यते इति । प्र+ विश+कर्म्मणि अच । टाप च । ) कन्थारी वृक्ष । इति राजनिर्घण्टः । ( दुष्प्रवेशनीये, त्रि । यथा, रामायणे । ३ । ६ । १२ ।
"क्रूरचौरपरिक्षिप्त मायया सन्नया समाकुलम् ।
दुष्प्रवेशं दुरालक्ष्यं सर्व्वमश्वप्रचुरस्थलम् ॥")
दुष्मन्त , पु, (दुष दोषवती मन्यते प्रकृतलोकानिति । दुष+मन्+क्त । निपातनात् साधु ।) चन्द्रवंशीयराजविशेष । स ऐलिपुत्र । तस्य पुत्रो भरतराजचक्रवर्त्ती । भार्य्या शकुन्तला । इति श्रीभागवतम् ॥ ( यथा, महाभारते ।।१।६८।३ ।
"पौरवाणां वंशकरो दुष्मन्तो नाम वीर्य्यवान् ।

पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ! ॥”
विवरणमस्य तदध्यायात् विस्तरशो द्रष्टव्यम्।
दुष्यन्त इत्यपि पाठः ॥ )

दुस्पर्शः, पुं, (दुःखेन स्पृश्यते इति । दुर् + स्पृश + कर्म्मणि खल् । विसर्गस्य वा लोपः।) दुरालभा। इत्यमरटीकायां भरतः ॥ ( पर्य्यायोऽस्य यथा,
“यासो यवासो दुस्पर्शो धन्वयासः कुनाशकः।
दुरालभा दुरालम्भा समुद्रान्ता च रोदिनी ॥
गान्धारी कच्छुरानन्ता कषाया हरविग्रहा ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
दुःखस्पृश्ये, त्रि ॥

दुस्थः, पुं, ( दुःखेन तिष्ठतीति । दुः + स्था + कः । ) कुक्कुरः । कुक्कुटः । इति शब्दार्थकल्पतरुः ॥ (दुःस्थिते, त्रि । यथा, भट्टौ । २ । ३८ ।
“वलिर्ब्बबन्धे जलधिर्ममन्थे
जह्रेऽमृतं दैत्यकुलं विजिग्ये ।
कल्पान्तदुस्था वसुधा तथोहे
येनैष भारोऽति गुरुर्न तस्य ॥” )

दुह, दर् अर्द्दने । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् ।) दर्, अदुहत् अदोहीत् । अर्द्दन-मिह वधः । इति दुर्गादासः ॥

दुह, ल ष औ दुहि । इति कविकल्पद्रुमः ॥ (अदां-उभं-सकं-अनिट् । ) धुक् दोहनम् । तच्च व्यक्तीकरणमिति धातुपारायणिकाः । ष ल, दोग्धि दुग्धे गां दुग्धं गोपः । स्वयं प्रदुग्धास्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनीति किराते वसूनीति कर्म्मणो विद्यमानतया कर्म्मकर्तृत्वाभावात् स्खलितमित्येके । दुहादेरप्रधान-कर्म्मविषये कर्म्मकर्तृत्वे प्रधानकर्म्मप्रयोगो दुर्निवारः । इति कुलचन्द्रः ॥ स्वमते तु अतएवानयोर्द्वेऽपि ढवत्त्वमिति वचनात् पचदुहोः कर्म्मणि विद्यमानेऽपि कर्म्मकर्तृत्वम् । इति दुर्गादासः ॥

दुहिता, [ ऋ ] स्त्री, ( दोग्धि विवाहादिकाले धनादिकमाकृष्य गृह्णातीति । यद्वा, दोग्धि गा इति । आर्षकाले कन्यासु एव गोदोहनभारस्थितेस्तथात्वम् । दुह + “नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ ।” उणां । २ । ९६ । इति तृच् । निपातनात् गुणाभावः ।) कन्या । इत्यमरः । २ । ६ । २८ ॥ कन्यादानपात्रापात्रं यथा,—
“कृत्वा परीक्षां कान्तस्य वृणोति कामिनी वरम् ।
वराय गुणहीनाय वृद्धायाज्ञानिने तथा ॥
दरिद्राय च मूढाय योगिने कुत्सिताय च ।
अत्यन्तकोपयुक्ताय चात्यन्तदुर्मुखाय च ॥
चापलायाङ्गहीनाय चान्धाय वधिराय च ।
जडाय चैव मूर्खाय क्लीवतुल्याय पापिने ॥
ब्रह्महत्यां लभेत् सोऽपि यः स्वकन्यां ददाति च ।
शान्ताय गुणिने चैव यूने च विदुषेऽपि च ॥
वैष्णवाय सुतां दत्त्वा दशवापीफलं लभेत् ॥”* ॥
कन्याविक्रये दोषो यथा,—
“यः कन्यापालनं कृत्वा करोति विक्रयं यदि ।
विपदा धनलोभेन कुम्भीपाकं स गच्छति ॥
कन्यामूत्रपुरीषञ्च तत्र भक्षति पातकी ।
कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्द्दश ॥
मृतश्च व्याधयोनौ च स लभेज्जन्म निश्चितम् ।
विक्रीणीते मांसभारं वहत्येवं दिवानिशम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥
कन्यादानफलं यथा,—
“दशवापीसमा कन्या दीयते ब्राह्मणाय तत् ।
वेदज्ञाय पवित्राय चाप्रतिग्रहशालिने ॥
सन्ध्यायज्ञवेदपाठकारिणे सत्यवादिने ।
अस्मै प्रदत्ता कन्या च दशवापीफलप्रदा ॥
त्रिसन्ध्याकारिणे सत्यवादिने गृहशालिने ।
वेदज्ञाय च विप्राय दत्तार्द्धफलदायिनी ॥
प्रतिग्रहगृहीताय सन्ध्याहीनाय नित्यशः ।
मूर्खाय दत्ता कन्या च सा चतुःफलदायिनी ॥
परदारगृहीताय याजकाय द्विजाय च ।
शठाय सन्ध्याहीनाय वाप्येकफलदा सुता ॥
सर्व्वसन्ध्यास्वगायत्रीविहीनाय शठाय च ।
विप्रोद्भवाय दत्ता या वाप्यर्द्धफलदा सुता ॥
पापिने शूद्रजाताय विप्रचेन्नोद्भवाय च ।
दत्ता चाण्डालतुल्याय कन्या सा नरकप्रदा ॥
विष्णुभक्ताय विदुषे विप्राय सत्यवादिने ।
जितेन्द्रियाय दत्ता या विंशद्वापीफलप्रदा ॥
षष्टिवर्षसहस्राणि दिव्यरूपं विधाय च ।
एवम्भूताय दत्ता च मोदते विष्णुमन्दिरे ॥
दत्त्वा कन्यां सुशीलाञ्च हराय हरयेऽथवा ।
नारायणस्वरूपञ्च भवेदेव श्रुतौ श्रुतम् ॥
विष्णुभक्तो यदा कन्यां ददाति विष्णुप्रीतये ।
स लभेद्धरिदास्यञ्च ध्रुवं विप्रोद्भवाय च ॥” * ॥
विवाहानन्तरं कन्याया भर्तृगृहगमनसमये पित्रादीनां रोदनं शास्त्रसिद्धम् । यथा दुर्व्वाससा सह और्व्वकन्यायाः कन्दल्या विवाहे ।
“कन्यासमर्पणं कृत्वा मोहादुच्चै रुरोद च ।
मूर्च्छामवाप स मुनिः स्वकन्याविरहातुरः ॥
अपत्यभेदशोकौघः स्वात्मारामं न मुञ्चति ।
क्षणेन चेतनां प्राप्य बोधयामास कन्यकाम् ॥
मूर्च्छितां तातविच्छेदाद्रुदन्तीं शोकसंयुताम् ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डश्रीकृष्णजन्मखण्डे ॥

दुहितुःपतिः, पुं, (दुहितुः सुतायाः पतिः । “विभाषा-स्वसृपत्योः ।” ६ । ३ । २४ । इति विभक्तेरलुक् ।) जामाता । इत्यमरटीकासारसुन्दरी ॥

दुह्यं, क्ली, ( दुह्यते इति । दुह + “एतिस्तु शास्वृदृजुषः क्यप् ।” ३ । १ । १०९ । इत्यत्र “शंसि दुहिगुहिभ्यो वा ।” इति काशिकोक्तेः क्यप् ।) दोहनयोग्यम् । दोह्यम् । इति व्याकरणम् ॥

दू, ओ ङ य खेदे । इति कविकल्पद्रुमः ॥ ( दिवां-आत्मं-अकं-सकं च-सेट् । ) खेद इह उपतप्तीकरणमुपतप्तीभावश्च । ओ, दूनः । ङ य, दूयते दैन्यं जनम् । इति चतुर्भुजः । मां कथं पश्यन्न दूयसे इति रघुः । इति दुर्गादासः ॥

दूडभः, त्रि, (दुर्दुःखेन दभ्यते इति । दुर् + दभ + खल् । “दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वञ्च ।” ६ । ३ । १०९ । इत्यस्येति वार्त्तिकोक्त्या उत्वं भस्य डत्वञ्च । ) दुःखनाश्यः । विपद्युक्तः । इति संक्षिप्तसारः ॥ ( दुर्दहः । यथा, ऋग्वेदे । १ । १५ । ६ ।
“युवं दक्षं धृतव्रतमित्रावरुणदूळभम् ॥”
“दूडभं दुर्दहं शत्रुभिर्दग्धुं विनाशयितुमशक्य-मित्यर्थः ।” “दूडभं दह भस्मीकरणे दुःखेन दह्यते इति दुर्दहं ईषद्दुःसुष्वित्यादिनादुरित्युप-पदे दभेः खल् प्रत्ययो बहुलमित्युकारस्य उकारो रेफस्य लोपः दकारस्य डकारो हकारस्य च भकारः ॥” इति तद्भाष्ये सायनः ॥ )

दूडाशः, त्रि, ( दुःखेन दाश्यते यः । दुर् + दाशि + खल् । “पृषोदरादीनि यथोपदिष्टम् ।” ६ । ३ । १०९ । इत्यस्य “दुरो दाशनाशेति ।” वार्त्तिकोक्त्या उत्वं डत्वञ्च । ) पीडायुक्तः । इति सिद्धान्तकौमुदी ॥ (यथा, अथर्ब्ववेदे ।१।१३।१।
“नमस्ते अस्त्वश्मने येना दूडाशे अस्यसि ॥” )
दन्त्यसान्तोऽपि ॥

दूढ्यः, त्रि, ( दुःखेन ध्यायतीति । दुर् + ध्यै + खल् । “दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वञ्च ।” ६ । ३ । १०९ । इत्यस्य वार्त्तिकोक्त्या उत्वं ढत्वञ्च । ) अधमः । इति सिद्धान्तकौमुदी ॥

दूणाशः, त्रि, ( दुःखेन नाश्यते ऽसौ । दुर् + नाशि + खल् । “दुरो दाशनाशेति ।” ।६।३।१०९ इत्यस्य वार्त्तिकोक्त्या उत्वं णत्वञ्च । ) दुःखेन नष्टः । इति सिद्धान्तकौमुदी ॥ ( नाशयितुमशक्य. । यथा, ऋग्वेदे । ८ । ६२ । ११ ।
“यो दूणाशो वनुष्यता ॥” )

दूतः, पुं, ( दूयते वार्त्तावहनादिनेति । दू + “दूतनिभ्यां दीर्घश्च ।” उणां । ३ । ९० । इति क्तः दीर्घश्च ।) वार्त्ताहरः । तत्पर्य्यायः । सन्देशहरः २ । इत्यमरः । २ । ८ । १६ ॥ सन्दिष्टकथकः ३ । इति शब्दरत्नावली ॥ तस्य लक्षणं यथा,—
“यथोक्तवादी दूतः स्याद्देशभाषाविशारदः ।
शक्तः क्लेशसहो वाग्मी देशकालविभागवित् ॥
विज्ञातदेशकालश्च दूतः स्यात् स महीक्षितः ।
वक्ता नयस्य यः काले स दूतो नृपतेर्भवेत् ॥”
इति मत्स्यपुराणम् ॥
अपि च ।
“मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः ।
धीरो यथोक्तवादी च एष दूतो विधीयते ॥”
इति चाणक्ये । १०६ ॥
अन्यच्च ।
“परेङ्गितज्ञः परवाग्गाथार्थस्यापि तत्त्ववित् ।
सदोत्पन्नमतिर्धीरो दूतः स्यात् पृथिवीपतेः ॥
दूतञ्चैव प्रकुर्व्वीत सर्व्वशास्त्रविशारदम् ।
इङ्गितज्ञं तथा सभ्यं दक्षं सत्कुलसम्भवम् ॥
अनुरक्तः शुचिर्दक्षः स्मृतिमान्देशकालवित् ।
वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥
दूत एव हि सन्धत्ते भिनत्त्येव हि संहतान् ।
निसृष्टार्थो मितार्थश्च तथा शासनहारकः ॥

दूतास्त्रयोऽभावगुणे समे मादार्द्दववर्जिते ।
विरुद्धार्थे कार्य्यवशात् शासनं न करोति यः ॥
मितार्थं कार्य्यमात्रोक्तौ न कुर्य्यादुत्तरोत्तरम् ।
यथोक्तवादी सन्देशहारको लेखहारकः ॥
तत्र दूतो व्रजन्नेव चिन्तयेदुत्तरोत्तरम् ।
वार्त्ताविशेषं भूपाय भाषेतचित्तवेषवित् ॥
दूतो हि न लिखेत् किञ्चित् निर्गता विनि-
श्चयम् ।
पृच्छ्यमानोऽपि न ब्रूयात् स्वामिनः क्वापि
वैशसम् ॥"

इति युक्तिकल्पतरुः ॥ * ॥

अथ दूते वर्णनीयानि । निजप्रभुतेजः श्रीविक्रमौ शत्रुकरवाचम् १ प्रभुधोभकरचेष्टा २ अधर्षणीयता ३ दक्षता ४ निर्भयत्वम् ५ । इति कविकल्पलता ॥ ( वैद्यकोक्तदूतो यथा,—
'आतुरोपक्रमार्थन्तु दूतो याति भिषग्गृहे ।
तस्य परीक्षया कार्य्यं येन संलक्ष्यते गदः ॥
स्त्रज्ञाश्मकं बधिरञ्च वामनं
क्लिवञ्च कुब्जं हृषितञ्च जीर्णम् ।
श्रान्तं क्षुधार्त्तं भ्रमितञ्च दीनं
शस्ता न वै वैद्यविदो वदन्ति ॥'
"य ककष्टं क्रोधनपापयापि
भिषग्विगर्हीक्षणमीक्षतञ्च ।
एते न शस्ताः प्रवदन्ति धीरा
दूता विकारं प्रतिवर्द्धयन्ति ॥
य काष्ठहस्तोऽहतपाशपाणि
स्त्यातुरो दीनवचाश्च रोदितः ।
प्रक्षिप्तवेशास्ममनोऽसुकोऽपि
वर्ज्ज्या दूताश्चाशुभकारिदूताः ॥"
"नकारस्याऽवश्य वक्रपादन तिष्ठति ।
तमाकुकण्ठवाणी यो न शस्तो वैद्यकर्म्मणि ॥
यदा गच्छति शीघ्रेण व्याधिशोथाय सत्वरः ।
पादौ प्रसार्य तिष्ठति मस्तके विन्यसेत् करम् ॥
भिनत्ति काष्ठकाष्ठञ्च स्फोटयते क्वचित् ।
अथवा स्पृशते नासां स्तनं वा स्पृशते पुनः ॥
भूमिं लिखति पाणिना रोमं वापि करोति यः ।
निद्रां वा कुरुते यस्तु स दूतोऽरिष्टकारकः ॥
य स्वतवस्त्राऽहतपुष्पपाणि
सम्पन्नताऽस्मगुणः प्रशस्त ।
हितैषकया नायकः सुशील
प्रज्ञाधिकश्चाह्वयते सुराज ॥"
"आगत्योशीतपुलासनः पवनदिग्भागमाश्रित
श्चान्तो
दृष्ट्वा वैद्य प्रशस्य प्रवदति निपुणं मानिनोऽच
नवागम ।
एतिष्ठेति प्रमाद कुरु वचनमिदं मौनभावां
तनोति
प्रद्वे स्वार्थे प्रहृष्ट सुखमान्दर योगिनो
वैद्यनाथम् ।
पूर्व्वां दिशं समाश्रित्य यस्याज्ञ श्राम्यति गिरा ।
वदन्ति वैद्यनाथाय रोगिकाय सुखावहम् ॥
यथामलोऽपि रोऽपि श्लोकं वाचं शुभाविषम् ।
वन्ते श्रामया वाचा वैद्यलाभञ्च शान्तये ॥
योऽभिवादापि वैद्यस्य चेम सपृच्छते पुनः ।
फलं ददाति पुष्पं वा रोगिणाञ्च सुखावहम् ॥
तस्य सौख्य वर्जा शान्तिर्यस्य दूता इह विदुः ।
किमत्र बहुनोक्तेन रम्यो दूतः सुखावहः ॥"

इति हारीते द्वितीयस्थाने षष्ठेऽध्याये ॥)

दूतघ्नी, स्त्री, ( टु उपतापे+भावे औणादिकक्तः दीर्घश्च । दूतं उपतापं हन्तीति । हन्+टक । ङीप् । ) करञ्जपुष्पी । इति शब्दचन्द्रिका ॥

दूति स्त्री, ( दूयते नायकादिवार्त्ताहरणादिनेति । टु+बाहुलकात् ति दीर्घश्च । उज्ज्वलदत्तः । ४।१७८ । ) दूती । इति शब्दरत्नावली ॥ ( यथा, रघुः । १८ । ५३ ।
"प्रतिकृतिरचनाभ्यो दूतिसन्दर्शिताभ्यः
समधिकतररूपाः शुद्धसन्तानकामैः ॥' )

दूतिका, स्त्री, (दूतिरेव । स्वार्थे कन् । ततष्टाप् ।) दूती । इति शब्दरत्नावली ॥ ( यथा, पञ्चतन्त्रे । १ । १७८ ।
"जम्बुको हुडुयुद्धेन वयं चाषाढ़भूतिना ।
दूतिका परकार्य्येण त्रयो दोषाः स्वयं कृताः ॥' )

दूती, स्त्री, ( दूति । कृदिकारादिति वा ङीष् । ) सारिका । इति राजनिर्घण्टः ॥ दौत्यकर्म्मणि नियुक्ता स्त्री । स्त्रीपुंसोः सन्देशप्रापिका । तत्पर्य्यायः । सञ्चारिका २ । इत्यमरः । २ । ६ । १७ ॥ दूति ३ दूतीका ४ दूतिका ५ । इति शब्दरत्नावली ॥ (यथा, आर्य्यासप्तशत्याम् ।२८० ।
"दयितप्रहितां दूतीमालप्य करोषि तमसि गच्छन्ती ।
स्वेदच्युतस्तनमनाभिदूँरादगौरात्रि । दृश्यासि ॥')
दौत्यव्यापारपारङ्गमा । तस्याः सङ्घटनविरहनिवेदनादीनि कर्म्माणि । इति रसमञ्जरी ॥ ( तद्दिशगुणा यथा, साहित्यदर्पणे । ३ । १२६-१२७ ।
"दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी ।
बाला प्रव्रजिता कारुः शिल्पिन्याद्याः स्वयं तथा ॥
कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ।
माधुर्य्यं नर्म्मविज्ञानं वाग्मिता चेति तद्गुणाः ।
एता अपि यथौचित्यादुत्तमाधममध्यमाः ॥' )

दूतीका, स्त्री दूती । इति शब्दरत्नावली ॥

दूत्य क्ली, ( दूतस्य भावः कर्म्म वा । दूत+"दूतवणिग्भ्याञ्च । ५।१।१२६ । इत्यस्योति वार्त्तिकोक्त्या य । वेन्मिते तु "दूतस्य भागकर्म्मणी ।" ४ । ४ । १२० । इति य । ) दूतकर्म्म । ( यथा हरिवंशे । १०८ । ३१ ।
'वचनं यथाऽऽज्ञामिदूत्ये न ह्यवधिस्यदे ।"
तथा च ऋग्वेदे । १ । १६१ । १ ।
'किमीयते दूत्यम् ।') दूतस्य भावः । इत्यमरः । २।८।१६ ॥ दूतस्य भावः । इति भरतः । ये,१४ ॥

दून, त्रि, ( ओ दू ङ परितापे+क्त । 'ओदितश्च ।" ८ । २ । ४५ । इति निष्ठायां न । यद्वा, दु गतौ+क्त । "दुस्तोर्दीर्घश्च ।" इति वार्त्तिकोक्त्या तस्य न दीर्घश्च । ) व्यथायुक्तः । इत्यमरः । ३ । १ । १०२ ॥ उपतप्तः । यथा, नैषधे । ३ । ६४ ।
"पिशुन दूने रसने शितापि
तिक्तायते हंसकुलावतंस ॥"

दूर, त्रि, ( दुङ् खेदयति प्राप्यत इति । दुर+इन+"दुरीणो लोपश्च । उणां २ । २० । इति धातोर्लोपश्च । ) अनिकटम् । असन्निकटम् तत्पर्य्यायः । विप्रकृष्टम् २ । इत्यमरः । ३ । १ । ६८ ॥ अनासन्नम् ३ । इति शब्दरत्नावली ॥ (यथा, हितोपदेशे । १ । ४३ ।
'शरीरस्य गुणानाञ्च दूरमत्यन्तमन्तरम् ।
शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ )
पाके १ पराके २ पराचैः ३ आरे ४ परावतः ५ । इति पञ्च दूरनामानि । इति वेदनिघण्टौ ३ अध्यायः ॥

दूरदर्शन, पुं ( दूरेऽपि दर्शनं दृष्टिर्यस्य । )गृध्रः । इति राजनिर्घण्टः ॥ ( दुर्लभे, त्रि । यथा भागवते । १ । ११ । ९ ।
"अहो सनाथा भवता स्म यद्वयं
त्रैपिष्टपानामपि दूरदर्शनम् ।
प्रेमस्मितस्निग्धनिरीक्षणाननं
पश्येम रूपं तव सर्व्वसौभगम् ॥')

दूरदर्शी, [ न् ] पुं ( दूरात् दूरमपि वा पश्यतीति । दृश+णिनि । ) पण्डितः । इत्यमरः । २।७।५ ॥ गृध्रः । इति त्रिकाण्डशेषः ॥ दीर्घदर्शिनि त्रि ॥

दूरदृक् [ श् ] पुं, (दूरं दूराद्वा पश्यतीति । दृश+क्विप् । ) पण्डितः । इति शब्दरत्नावली ॥ गृध्रः । इति हेमचन्द्रः । ४ । ४०१ ॥ दीर्घदर्शके, त्रि ॥

दूरमूल , पुं, ( दूरे अस्थानकटे मूलं यस्य । ) मुञ्जतृणम् । इति राजनिर्घण्टः ॥

दूरवेधी [ न् ] त्रि, ( वेधोऽस्त्यस्येति । इनि । दूरात् वेधी ।) दूराल्लक्ष्यभेदकः । तत्पर्य्यायः । दूरापाती २ । इति हेमचन्द्रः । ३ । ४३० ॥

दूरेरितेक्षण , त्रि, ( दूरे ईरिते ईक्षणे यस्य । ) ककरः । इति शब्दमाला ॥

दूर्य्य क्ली (दूरे परित्याज्यम् । दूर+यत ।) विष्ठा । इति शब्दरत्नावली । ( दूराय रोगदूरीकरणाय साधु इति यत् । ) घ्राटो । इति राजनिर्घण्टः ॥

दूर्व्वा स्त्री, (दूर्व्वति दूर्व्वते वा । दुर्व हिंसायाम्+अच् घञ् वा । 'उपधायाश्च ।" ८।२।७८ । इति दीर्घः ।) सस्यास्याधारः । तत्पर्य्यायः । शतपर्व्विका २ सहस्रवीर्य्या ३ भार्गवी ४ रुहा ५ अनन्ता ६ । इत्यमरः ।२।४।१५८ ॥ तिक्तपर्व्वा ७ दुर्म्मरा ८ । बहुवीर्य्या ९ हरिता १० हरिताली ११ कच्छरुहा १२ ॥ शुक्लायाः पर्य्यायः । शतवीर्य्या १ महावी २ शकुलाक्षकः ३ गोलोमी ४ । इति जटाधरः ॥ शतपर्व्वा ५ सितदूर्व्वा ६ शिता ७ । इति रत्नमाला ॥ मङ्गला ८ महौषधिः ९ । इति शब्दरत्नावली ॥ ( यथा महाभारते । ३ । ११० । १० ।

"क्षुपाकारेव दूर्व्वेयं संसोर्णेव च भूरियम् ॥")
अस्या गुणः । रक्तपित्तकण्डुत्वग्दोषनाशित्वम् ।
इति राजवल्लभः ॥

दूर्व्वाष्टमी, स्त्री, ( दूर्व्वा तद्रूपा गौरी तत्प्रिया अष्टमी । ) भाद्रशुक्लाष्टमी । तत्र कर्त्तव्यव्रतविधिर्यथा,—
"व्रजन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः ।
दूर्व्वां गौरीं गणेशञ्च फलाकारं शिवं यजेत् ॥
फलव्रीह्यादिभिः सर्व्वैः शम्भुं नमः शिवाय च ।
अनग्निपक्वमश्नीयान्मुच्यते ब्रह्महत्यया ॥"
इति संवत्सरकौमुदीधृतगरुड़पुराणवचनम् ॥*
तद्व्रतप्रयोगविधिर्यथा,—
पूर्व्वदिने संयमं विधाय तद्दिने प्रातः स्नानादिः आसने चोपविश्याचम्य ब्राह्मणान् स्वस्तिवाच्य सूर्य्यार्घ्यं दत्त्वा सङ्कल्पं कुर्य्यात् । विष्णुर्नमोऽद्य भाद्रे मासि शुक्ले पक्षे अष्टम्यां तिथावारभ्यामुकगोत्रा श्रीअमुकी मर्त्यलोकाधिकरणकसुखसौभाग्याविच्छिन्नपुत्त्रपौत्त्रादिलाभपूर्व्वकत्रह्मलोकप्राप्तिकामा श्रीविष्णुप्रीतिकामा या भविष्यपुराणोक्ताष्टावर्षनित्यादितदूर्व्वाष्टमीव्रतमहं करिष्ये । इति सङ्कल्प्य स्वक्तं पठित्वा सनमुद्राद्रादिकं विधाय गणेशादिदेवताः संपूज्य ध्यानं कुर्य्यात् । * । यथा,—
"नीलोत्पलदलश्यामं चतुर्ब्बाहुं किरीटिनम् ।
शङ्खचक्रगदापद्मधारिणं वनमालिनम् ॥
श्रीवत्सलक्षणोपेतं श्रिया वाण्या समन्वितम् ॥"
इति ध्यात्वा स्वशिरसि पुष्पं दत्त्वा मानसैरुपचारैः संपूज्यावाहनं कृत्वा पुनर्ध्यात्वावाह्य पाद्यादिभिः पूजयेत् । एतत् पाद्यं ॐ कृष्णाय नमः । एवं क्रमेण संपूज्य आवरणदेवताः पूजयेत् । यथा ॐ शच्यै नमः । एवं दुर्गायै गौर्य्यै श्रियै सरस्वत्यै गङ्गायै दित्यै अदित्यै सुमेधायै अरुन्धत्यै मन्दोदर्य्यै सुभद्रायै शाण्डिल्यै जयायै विजयायै रमायै दीक्षायै रेवत्यै दमयन्त्यै शीलायै सुकेशायै रम्भायै वासुदेवाय देवक्यै विष्णवे महादेवाय [illegible]भ्यो देवेभ्यः सर्व्वाभ्यो देवीभ्यः । ततो दूर्व्वां [illegible]येत् । * ।
[illegible]नीलोत्पलदलश्यामां सर्व्वदेवशिरोधृताम् ।
[illegible]दोद्भवां पुण्याममृतेरभिषिञ्चिताम् ॥
[illegible]देवाजरां दूर्व्वाममरां विष्णुरूपिणीम् ।
[illegible]सन्तानसंदात्रीं धर्म्मार्थकाममोक्षदाम् ॥
[illegible]ं ध्यात्वा षोड़शोपचारैः पूजयेत् ।
[illegible]दमासनं ॐ दूर्व्वायै नमः । एवं क्रमेण [illegible]पूज्य अष्टग्रन्थियुक्तडोरकं फलानि यज्ञोप[illegible]तादिकं दत्त्वा प्रणमेत् ।
[illegible]त्वं दूर्व्वेऽमृतनामासि पूजितासि सुरासुरैः ।
[illegible]सौभाग्यसन्ततिं दत्त्वा सर्व्वकार्य्यकरी भव ॥
[illegible]यथा शाखाप्रशाखाभिर्व्विस्तृतासि महीतले ।
[illegible]तथा ममापि सन्तानं देहि त्वमजरामरम् ॥"
ततो भोज्यमुत्सृजेत् । डोरकं वामहस्ते बद्ध्वा कथां शृणुयात् ॥ * ॥

अथ कथा ।
युधिष्ठिर उवाच ।
"व्रतमेकं समाचक्ष्व विचार्य्य मधुसूदन ! ।
येन सन्ततिविच्छेदो जायते न कदाचन ॥
श्रीकृष्ण उवाच ।
मासि भाद्रपदेऽष्टम्यां शुक्लपक्षे युधिष्ठिर ! ।
दूर्व्वाष्टमीव्रतं नाम या करोति पतिव्रता ॥
न तस्याः क्षयमाप्नोति सन्तानं साप्तपौरुषम् ।
नन्दते वर्द्धते नित्यं यथा दूर्व्वा तथा कुलम् ॥
युधिष्ठिर उवाच ।
कथमेषा समुत्पन्ना कस्माद्दूर्व्वा चिरायुषी ।
कस्माद्वन्द्या पवित्रा च लोके धन्या महीतले ॥
केन वा तद्व्रतं देव ! चरितं केन हेतुना ॥
श्रीकृष्ण उवाच ।
क्षीरोदसागरे पूर्व्वं मथ्यमानेऽमृतार्थिना ।
विष्णुना बाहुजङ्घाभ्यां विधृतो मन्दरो गिरिः ॥
भ्रमता तेन वेगेन लोमान्याघर्षितानि वै ।
ऊर्म्मिभिस्तानि रोमाणि चोत्क्षिप्तानि तटान्तरे ॥
अजायत शुभा दूर्व्वा रम्या हरितशाद्वला ।
एवमेषा समुत्पन्ना दूर्व्वा विष्णुतनूद्भवा ॥
तस्या उपरि विन्यस्तं मथिताम्मृतमुत्तमम् ।
देवदानवगन्धर्व्वयक्षविद्याधरोरगैः ॥
तत्र येऽमृतकुम्भस्य निपेतुर्व्वारिबिन्दवः ।
तैरियं स्पर्शमासाद्य दूर्व्वा चैवाजरामरा ॥
वन्द्या पवित्रा देवैस्तु सर्व्वदाभ्यर्च्चिता तथा ।
पूजयेत्तां प्रयत्नेन यत्नेनानाविधैरपि ॥
अष्टम्यां फलपुष्पैस्तु गुवाकैर्नारिकेलकैः ।
द्राक्षाहरीतकीभिश्च मोचकैर्न्नागकेसरैः ॥
नागरङ्गैश्च जम्बीरैर्व्वीजपूरैश्च शोभनैः ।
दध्यक्षतैः पयोभिश्च धूपनैवेद्यदीपकैः ॥
मन्त्रेणानेन राजेन्द्र ! अग्रतस्य कथितं मया ।
त्वं दूर्व्वेऽमृतनामासि वन्दितासि सुरासुरैः ॥
सौभाग्यं सन्ततिं दत्त्वा सर्व्वकार्य्यकरी भव ।
यथा शाखाप्रशाखाभिर्व्विस्तृतासि महीतले ॥
तथा ममापि सन्तानं देहि त्वमजरामरम् ।
एवमेव पुरा पार्थ ! पूजिता त्रिदशोत्तमैः ॥
तेषां पत्नीभिरनिशं भगिनीभिस्तथैव च ।
पूजिता च तथा गौर्य्या देव्या रत्या श्रिया तथा ॥
सरस्वत्या गङ्गया च दित्यादित्या सुशीलया ।
विन्ध्यवत्या वेशवत्या इन्द्रमत्या सुशीलया ॥
मन्दोदर्य्या चण्डिकया मायया दीक्षया तथा ।
मर्त्यलोके च रेवत्या दमयन्त्या सुशीलया ॥
सुकेशया घृताच्या च रम्भया मिश्रकेशया ।
मञ्जुनन्या मेनकया तथैव मार्गिकादिभिः ॥
स्त्रीभिरभ्यर्च्चिता दूर्व्वा सौभाग्यसुखदायिनी ।
स्नाताभिः शुचिवस्त्राभिर्द्दूर्व्वा संपूजिता जनैः ॥
दत्त्वा पिष्टानि विप्रेभ्यः फलानि विविधानि च ।
तिलपिष्टानि गोधूमधान्यपिष्टानि पायसम् ॥
भोजयित्वा सुहृन्मित्रं सम्बन्धिस्वजनं तथा ।
ततो भुञ्जीत तच्छेषं स्वयं भक्त्या समाहिता ॥
नारी चैव प्रकुर्व्वीत चाष्टमीव्रतमुत्तमम् ।
सर्व्वतः सुखसौभाग्यपुत्त्रपौत्त्रादिभिर्युता ॥
मर्त्यलोके चिरं स्थित्वा चतुर्व्वर्गं गता पुनः ।
वसते रमया सार्द्धं यावच्चन्द्रदिवाकरौ ॥
मेघाच्छन्नेऽम्बरतले विशुद्धे च पक्षे
याश्चाष्टमीव्रतमदो नभसीह कुर्य्युः ।
दूर्व्वां तदक्षततिलैः प्रतिपूजयेयु-
स्ताः प्राप्नुयुः सकलसिद्धिमभीष्टमिष्टम् ॥"
इति भविष्योत्तरे दूर्व्वाष्टमीव्रतकथा समाप्ता ॥

दूलिका, स्त्री, ( दूली + स्वार्थे कन् । टाप् पूर्व्वह्रस्वश्च । ) नीली । इति शब्दरत्नावली ॥

दूली, स्त्री, ( दूरं दूरत्वमस्या अस्तीति । दूर + अच् । रस्य लः । गौरादित्वात् ङीष् । ) नीली । इति शब्दरत्नावली ॥

दूष्यं, क्ली, ( दूयते इति । भावे क्विप् । दूः खेदस्तां स्यायते अन्तर्भूतण्यर्थाद्गमयतीति । दू + स्यै + कः । ) दूष्यम् । वस्त्रगृहम् । इत्यमरटीकासारसुन्दरी ॥

दूषकः, त्रि, ( दूषयतीति । दुष् + णिच् + "ण्वुल्तृचौ ।" ३ । १ । १३३ । इति ण्वुल् । ) दोषोत्पादकः । तत्पर्य्यायः । पांसनः २ । इति त्रिकाण्डशेषः ॥ ( यथा, मनौ । ८ । २३२ ।
"कूटशासनकर्त्तॄंश्च प्रकृतीनाञ्च दूषकान् ।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा ॥")

दूषणः, पुं, ( दूषयतीति । दूषि + ल्युः । ) रावणभ्रातृखरसेनापतिः । इति रामायणम् ॥ ( यथा, रघुः । १२ । ४६ ।
"असञ्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम् ।
न चक्षमे शुभाचारः स दूषणमिवात्मनः ॥"
दूषि + भावे ल्युट् । ) दोषे, क्ली ॥ ( यथा, देवीभागवते । १ । १७ । २४ ।
"वधितोऽहं स्वयं पित्रा दूषणं कस्य दीयते ॥")

दूषणारिः, पुं, ( दूषणस्य राक्षसस्य अरिः । ) श्रीरामः । इति शब्दरत्नावली ॥

दूषिः, स्त्री, ( दूषयतीति । दुष + णिच् + "सर्व्वधातुभ्य इन् ।" उणां । ४ । ११७ । इति इन् । ) दूषिका । इति शब्दरत्नावली ॥

दूषिका, स्त्री, ( दूषि + स्वार्थे कन् । टाप् । यद्वा, दूषि + ण्वुल् + टाप् अत इत्वञ्च । ) नेत्रमलम् । इत्यमरः । २ । ६ । ६७ ॥ पिचुटि इति भाषा ॥ तत्पर्य्यायः । पिष्टोड़कम् २ दूषिः ३ दूषी ४ । इत्यमरटीकायां भरतः ॥ दूषीका ५ पिञ्जटः ६ पिच्चटः ७ । इति शब्दरत्नावली ॥ ( यथा, मनौ । ५ । १३५ ।
"वसाशुक्रमसृङ्मज्जामूत्रविट्घ्राणकर्णविट् ।
श्लेष्माश्रुदूषिकास्वेदो द्वादशैते नृणां मलाः ॥")
तूलिका । इति मेदिनी । के, १०५ ॥ ( दूषणकर्त्री स्त्री । यथा, महाभारते । १२।३५।३० ।
"स्त्रियास्तथापचारिण्या निष्कृतिः स्याददूषिका ।
अपि सा पूयते तेन न तु भर्त्ता प्रदुष्यति ॥")

दूषितः, त्रि, ( दुष् + णिच् + क्तः । ) प्राप्तदोषः । ( यथा, महाभारते । १ । १४० । २६ ।

दृढनीरः, पुं, ( दृढं प्रचुरं नीरं यस्मिन्निति । ) नारिकेलवृक्षः । इति राजनिर्घण्टः ॥

दृढपत्रः, पुं, ( दृढानि कठिनानि पत्राणि यस्य । ) वंशः । इति राजनिर्घण्टः ॥

दृढपत्री, स्त्री, ( दृढानि पत्राणि यस्याः । गौरादित्वात् ङीष् । ) वल्वजा । इति राजनिर्घण्टः ॥

दृढपादा, स्त्री, ( दृढः पादो मूलं यस्याः । ) यवतिक्ता । इति राजनिर्घण्टः ॥

दृढपादी, स्त्री, (दृढः कठिनः पादो मूलं यस्याः ।) गौरादित्वात् ङीष् । ) भूम्यामली । इति राजनिर्घण्टः ॥

दृढप्ररोहः, पुं, (दृढः प्ररोहोऽङ्कुरो यस्य । ) प्लक्षवृक्षः । इति राजनिर्घण्टः ॥

दृढफलः, पुं, (दृढं कठिनं फलं यस्य ।) नारिकेलवृक्षः । इति राजनिर्घण्टः ॥

दृढबन्धिनी, स्त्री, ( दृढं यथा तथा बध्नातीति । बन्ध+णिनिः । ङीप् । ) श्यामालता । इति शब्दचन्द्रिका ॥

दृढमुष्टिः, पुं, ( दृढा मुष्टिर्धारणाय यस्य । ) खड्गादिः । ( दृढा दानाद्यभावात् कठिना मुष्टिर्यस्य । ) कृपणे, त्रि । इति विश्वः । टे, ६५ ॥ ( दृढमुष्टिधारकः । यथा, हरिवंशे । २० । ६८ । "निगृहीतः कन्धरायां शिशुना दृढमुष्टिना ॥")

दृढमूलः, पुं, ( दृढं मूलं यस्य । ) मुञ्जतृणम् । मन्थानकतृणम् । इति राजनिर्घण्टः ॥ नारिकेलः । इति शब्दार्थकल्पतरुः ॥

दृढरङ्गा, स्त्री, (दृढः स्थिरः रङ्गो रागो यस्याः ।) स्फटी । इति राजनिर्घण्टः ॥

दृढलता, स्त्री, ( दृढा कठिना लता । ) पातालगरुडी । इति राजनिर्घण्टः ॥

दृढलोमा, [ न् ] पुं, ( दृढानि लोमानि यस्य । ) शूकरः । इति शब्दचन्द्रिका ॥ कठिनलोमयुक्ते, त्रि ॥

दृढवल्कलः, पुं, (दृढं वल्कलं त्वग् यस्य ।) लकुचः । पूगः । इति राजनिर्घण्टः ॥

दृढवल्का, स्त्री, ( दृढं वल्कं यस्याः । ) अम्बष्ठा । इति राजनिर्घण्टः ॥

दृढबीजः, पुं, (दृढं बीजमस्य ।) चक्रमर्द्दः । बदरः । बर्ब्बूरः । इति राजनिर्घण्टः ॥

दृढसन्धिः, त्रि, (दृढः स्थूलः सन्धिर्यस्य ।) निश्छिद्रः । तत्पर्य्यायः । संहतः २ । इत्यमरः । ३ । १ । ७५ ॥

दृढसूत्रिका, स्त्री, ( सूत्रमस्त्यस्या इति । सूत्र+ठन् । दृढा कठिना सूत्रिका चेति कर्म्मधारयः ।) मूर्व्वा । इति शब्दचन्द्रिका ॥

दृढस्कन्धः, पुं, ( दृढः स्कन्धो यस्य । ) क्षीरिकावृक्षः । इति जटाधरः ॥ ( दृढस्कन्धविशिष्टे, त्रि ॥ )

दृढाङ्गं, क्ली, ( दृढं अङ्गं यस्य । तदितरपदार्थादस्य कठिनत्वात् तथात्वम् । ) हीरकम् । इति राजनिर्घण्टः ॥ ( कठिनाङ्गविशिष्टे, त्रि ॥)

दृतः, त्रि, ( दृ+क्तः । ) आदृतः । आदरार्थदृधातोः कर्म्मणि क्तप्रत्ययेन नियमः ॥

दृता, स्त्री, ( द्रियते स्मेति । दृ+कर्म्मणि क्तः । टाप् । भिषग्भिर्वैद्यैर्व्याधिप्रयोगेषु कृतादरत्वादस्याः तथात्वम् । ) जीरकः । इति शब्दचन्द्रिका ॥

दृतिः, पुं, ( दृणातीति । दृ विदारे+"दृणातेर्ह्रस्वश्च ।" उणां ।४।१८३। इति तिः ह्रस्वश्च । ) चर्म्मपुटकः । अस्य पर्य्यायः । खल्लः २ । इति हेमचन्द्रः । ४ । ६१ ॥ ( यथा, मनुः ।२ । ९९ ।

"इन्द्रियाणान्तु सर्व्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥")

मत्स्यः । इति मेदिनी । ते, २६ ॥ (गलकम्बलः । यथा, महाभारते । १३ । ७८ । १८ ।

"सवत्सां पीवरीं दत्त्वा दृतिकण्ठामलङ्कृताम् ।
वैश्वदेवमसंबाधं स्थानं श्रेष्ठं प्रपद्यते ॥"

"दृतिकण्ठां प्रलम्बगलकम्बलाम् ।" इति तट्टीकायां नीलकण्ठः ॥ मेघः । इति निघण्टुः ।१।१०॥ यथा, ऋग्वेदे । ७ । १०३ । २ ।

"दिव्या आपो अभि यदेनमायन्
दृतिं न शुष्कं सरसी शयानम् ॥")

दृतिधारकः, पुं, (दृतिश्चर्म्मपुटकस्तदाकारं धारयतीति । धारि+"ण्वुल् तृचौ ।" ३ । १ । १३३ । इति ण्वुल् । ) वृक्षविशेषः । आकनपाता इति भाषा । तत्पर्य्यायः । आनन्दी २ ऋषिकारायः ३ वामनः ४ । इति शब्दचन्द्रिका ॥

दृतिहरिः, पुं, ( दृतिं चर्म्ममयदर्व्वं हरतीति । दृति+हृ+"हरतेर्दृतिनाथयोः पशौ ।" ३ । २ । २५ । इति इन् ।) कुक्कुरः । इति मुग्धबोधव्याकरणम् ॥

दृनू, य, हिंसा । इति मुग्धबोधटीकायां दुर्गादासः ॥

दृनृफ, प श उत्क्लेशे । इति कविकल्पद्रुमः ॥ ( तुदां-परं सकं सेट् । ) दन्त्यवर्गतृतीयादिः । सप्तमस्वरी । प श, दृम्फति । श, दृफति चौरं राजा क्लिश्नातीत्यर्थः । ददृम्फ ददर्फ । इति दुर्गादासः ॥

दृन्भूः, स्त्री, ( दृम्फतीति । दृनृफ+"अन्दूदृन्भूजम्बूकम्बूकफेलूकर्कन्धूदिधिषूः ।" उणां ।१।९५। इति कूप्रत्ययान्तो निपातितः ।) सर्पः । चक्रम् । इति मेदिनी । भे, ५ ॥ ( क्वचित् दृनूफूरिति पाठोऽपि दृश्यते ॥ )

दृन्भूः, पुं, ( दृनृफ+कूः । निपातनात् साधुः । ) वज्रम् । सूर्य्यः । इति हेमचन्द्रः ॥ राजा । इति शब्दरत्नावली ॥ अन्तकः । इति संक्षिप्तसारे उणादिवृत्तिः ॥

दृप, कि सन्दीपने । इति कविकल्पद्रुमः ॥ ( चुरां-पक्षे-भ्वां-परं-सकं-सेट् । ) कि, दर्पयति दर्पति । इति दुर्गादासः ॥

दृप, ष य ऊ इर् हर्षे । गर्व्वे । इति कविकल्पद्रुमः ॥ ( दिवां-उभं-अकं-वेट् । ) ष, दृप्तोऽस्ति । य, दृप्यति । ऊ, दर्पिष्यति दर्प्स्यति । इर्, अदृपत् अद्राप्सीत् अदार्प्सीत् अदर्पीत् । इति दुर्गादासः ॥

दृप, श बाधने । इति कविकल्पद्रुमः ॥ ( तुदां-परं-सकं-सेट् । ) श, दृपति दर्पिता । बाधनं विहतिः । इति दुर्गादासः ॥

दृप्तः, त्रि, ( दृप्यतीति । दृप्+वर्त्तमाने कर्त्तरि क्तः ।) गर्व्वितः । इति धरणिः ॥ ( यथा, महाभारते । १ । १ । १६२ ।

"यदाश्रौषं कालकेयास्ततस्ते
पौलोमानो वरदानाच्च दृप्ताः ।
दैवैरजेया निर्ज्जितास्त्वर्ज्जुनेन
तदा नाशंसे विजयाय सञ्जय ! ॥")

दृप्रः, त्रि, ( दृपति बाधते इति । दृप्+"स्फायितञ्चीति ।" उणां । २ । १३ । इति रक् ।) दृप्तः । इत्युणादिकोषः ॥ ( बलवान् । इत्युज्ज्वलदत्तः ॥ )

दृफ, प श उत्क्लेशे । इति कविकल्पद्रुमः ॥ (तुदां-परं-सकं-सेट् । ) प श, दृम्फति । श, दृफति चौरं राजा क्लिश्नातीत्यर्थः । ददर्फ । इति दुर्गादासः ॥

दृब्धः, त्रि, ( दृभ्यते ग्रथ्यते इति । दृभ+कर्म्मणि क्तः । ) ग्रथितः । इत्यमरः । ३ । १ । ८६ ॥ ( दृभ+कर्त्तरि क्तः । ) भीतः । इति भयार्थदृभधातुदर्शनात् ॥

दृभ, ई कि भये । इति कविकल्पद्रुमः ॥ ( चुरां-पक्षे भ्वां-अकं-सेट् ।) कि, दर्भयति दर्भति । ई, दृब्धः । रमानाथस्तु दृ भी इति धातुद्वयं मत्वा दारयति दरति भाययति भयति इत्याह । इति दुर्गादासः ।

दृभ, श ई कि गुम्फने । इति कविकल्पद्रुमः ॥ (तुदां-चुरां पक्षे भ्वां-सकं-सेट् । ) श, दृभति । ई, दृब्धः । कि, दर्भयति दर्भति । गुम्फनं ग्रन्थनम् । इति दुर्गादासः ॥

दृम्प, ष क ङ संघाते । इति कविकल्पद्रुमः ॥ ( चुरां-उभं-आत्मं च-सकं-सेट् । ) ओष्ठ्यवर्गशेषोपधः । सप्तमस्वरी । ष क, दृम्पयति दृम्पयते । ङ, दृम्पयते । संघातो राशीकरणम् । अयं कैश्चिन्न मन्यते । इति दुर्गादासः ॥

दृन्फूः, स्त्री, ( दृम्फति क्लिश्नातीति । दृनृफ+"अन्दूदृम्फूजम्बूति ।" उणां । १ । ९५ । इति कूः । निपातनात् साधुः । ) सर्पः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

दृम्भूः, स्त्री, ( दृम्फतीति+दृनृफ्+कूः । निपातनात् साधुः ।) दृन्भूः । इति सिद्धान्तकौमुद्यामुणादिवृत्तिः ॥

दृश, इर् औ प्रेक्षे । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-अनिट् ।) इर्, अदृशत् अद्राक्षीत् । औ, द्रष्टा । प्रेक्षश्चाक्षुषज्ञानम् । पश्यति चन्द्रं लोकः । ततः स ददृशे च तौ इति व्यतीहारे आत्मनेपदम् । कदा द्रक्ष्येऽहं परमेश्वरि त्रिपथगे भागरथि ! त्वं वपुरिति गत्यर्थतानित्यत्वात् । इति दुर्गादासः ॥

दृशत्, [ द् ] स्त्री, ( दृषत् । पृषोदरादित्वात् साधुः ।) पाषाणः । इत्यमरः । २ । ३ । ४ ॥ निर्य्यपगशिलापट्टम् । इति मेदिनी । दे, २३ ॥

"प्रधानांशस्वरूपा या देवसेना च नारद ।।
मातृकासु पूज्यतमा सा च षष्ठी प्रकीर्त्तिता ॥
शिशूनां प्रतिविश्वेषु प्रतिपालनकारिणी ।
तपस्विनी विष्णुभक्ता कार्त्तिकेयस्य कामिनी ॥'
इयं हि यथा यथा कार्त्तिकेयस्य पत्नी जाता तद्विवरणं महाभारते ।३।२२३ अध्यायमारभ्य विस्तरशो द्रष्टव्यम् ॥) देवानां सेना । इति हेमचन्द्रः ॥ ( यथा, महाभारते । ३ । २२२ । ५ ।
"देवसेनां दानवैर्यो भग्नां दृष्ट्वा महाबलः ।
पालयेद्वीर्य्यमाश्रित्य स ज्ञेयः पुरुषो मया ॥")

देवसेनापति, पुं, ( देवसेनायाः पतिः । ) कार्त्तिकेयः । इति शब्दरत्नावली ॥

देवस्व, क्ली, ( देवस्य स्वं धनम् । ) देवसत्ताश्रयधनम् । यथा,—
"ब्रह्मस्वञ्च गुरोर्द्रव्यं देवस्वञ्च हरन्तु यः ।
कन्यां ददाति शुल्केन स प्रेतो जायते ध्रुवम् ॥"
इति महाभारते पञ्चप्रेतोपाख्यानम् ॥
( यथा च मनुः । ११ । २६ ।
"देवस्वं ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः ।
स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥"
यज्ञशीलधनम् । यथा मनुः । ११ । २० ।
'यज्वनां यज्ञशीलानां देवस्वं तद्विदुर्बुधाः ॥")

देवहू, पुं, ( ह्वे+भावे क्विप् । देवानां हूराह्वानमनेनेति । ) वामकर्णः । यथा
'आसन्नो नवद्वारोऽत्र नियमन्तो बहूदनम् ।
पितृहूर्दक्षिण कर्णं उत्तरो देवहूः स्मृतः ॥'
इति श्रीभागवते । ४ । २९ । १२ ॥
( त्रि, देवानाह्वयतीति । ह्वे+कर्त्तरि क्विप् । देवानां आह्वाता । यथा, वाजसनेयसंहितायाम् । १७ । ६२ ।
'देवहूर्यज्ञ आ च वक्षत्सुम्नहूर्यज्ञ आ च वक्षत् ॥' )

देवृ, [ऋ] पुं (दीव्यत्यनेनेति । दिव+"दिवेर्ऋः" । उणां २ । १०० । इति ऋः । ) देवरः । इत्यमरः । २ । ६ । ३२ ॥ ( यथा, ऋग्वेदे । १० । ८५ । ४६ ।
"ननान्दरि सम्राज्ञी भव सम्राज्ञी अधि देवृषु ॥")
स्त्रीपतिः । इति अस्मिन् प्रकारे उणादिवृत्तिः ॥

देवा स्त्री, ( दीव्यते ऽनया । दिव+अच् । ततष्टाप् । ) पद्मचारिणी । व्यजनपर्णी । इति शब्दचन्द्रिका । (मूर्व्वा । अस्याः पर्य्याया यथा, वैद्यकरत्नमालायाम् ।
"तेजनी पिलुनी देवा तिक्तवल्ली एथकत्वचा ।
मधुस्रेवी मधुरसा मूर्व्वा निर्द्दहनीति च ॥ )

देवाजीव त्रि, ( देवेन देवप्रतिमाप्रदर्शनेन आजीवतीति । आ+जीव+अच् ।) देवलः । इत्यमरः । २ । १० । ११ ॥

देवाजीवी [न्] त्रि, (देवेन आजीवतीति । आ+जीव+णिनि । ) देवलः । इत्यमरटीकायां रमानाथः ॥

देवाट, पुं (अट गतौ+भावे घञ् । देवानां आटो गमनं यत्र । ) हरिहरक्षेत्रम् । यथा,
"यदा नन्दी शूलपाणिराधिनेन पुरस्कृतः ।
स्थितवान् तद्दिनादेव क्षेत्रं हरिहरात्मकम् ॥
देवानामटनाच्चैव देवाट इतिसंज्ञितम् ॥"
इति वराहपुराणम् ।

देवात्मा, [ न् ] पुं ( देव आत्मा अधिष्ठातृदेवता यस्य । ) अश्वत्थः । इति शब्दचन्द्रिका ॥

देवानांप्रिय पुं स्त्री, ( देवानां प्रियः । 'देवानां प्रिय इति च मूर्खे ।' ६ । ३ । २१ । इत्यस्येति वार्त्तिकोक्त्या षष्ठ्या अलुक् । छागस्य पशुत्वादेव मूर्खत्वं बोध्यम् ।) छागः । इति त्रिकाण्डशेषः ॥ त्रि, मूर्खः । इति हेमचन्द्रः । ३ । १७ ॥

देवापि, पुं, प्रतीपराजपुत्रः । स सुमेरुसमीपे कलापग्रामे योगी भूत्वा आस्ते स कलौ शुभ्रचन्द्रवंशं पुनः सत्ययुगे भावयिष्यति । इति श्रीभागवतम् ॥ स च कुष्ठी प्रजाभिरपध्वस्तः । इति मत्स्यपुराणम् ॥ ( यथा, महाभारते । १ । ९५ । ४४—४५ ।
"प्रतिश्रवसः प्रतीपः प्रतीपः खलु शैब्यामुपयेमे सुनन्दां नाम तस्यां पुत्त्रानुत्पादयामास देवापिं शान्तनुं बाह्लीकञ्चेति । देवापिः खलु बाल एवारण्यं विवेश शान्तनुस्तु महीपालो बभूव ॥"
वैदिकमते तु अयं ऋष्टिषेणस्य पुत्त्रः । यथा, निरुक्ते । २ । १० ।
'देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूवतुः । स शन्तनुः कनीयानभिषेचयाञ्चक्रे देवापिस्तपः प्रतिपेदे । ततः शन्तनो राज्ये द्वादश वर्षाणि देवो न ववर्ष । तमूचुर्ब्राह्मणा अधर्मस्त्वया चरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवो न वर्षतीति । स शन्तनुर्देवापिं शिशिक्ष राज्येन । तमुवाच देवापिः पुरोहितस्तेऽसानि याजयानि च त्वेति । तस्यैतद्वर्षकामसूक्तम् ॥' तथा च ऋग्वेदे । १० । ९८ । ५ ।
'आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापिर्देवसुमतिं चिकित्वान् ॥')

देवाभीष्टा, स्त्री, ( देवानामभीष्टा प्रिया । ) ताम्बूली । इति शब्दचन्द्रिका ॥

देवायतन, क्ली, ( देवानामायतनं गृहम् । ) देवालयः । यथा, कूर्म्मपुराणे ।
'न देवायतनं गच्छेत् कदाचिच्चाप्रदक्षिणम् ।
न पीडयेद्वा वस्त्राणि न देवायतनेष्वपि ॥")

देवायुध क्ली ( देवस्य इन्द्रस्य आयुधम् । ) शक्रधनुः । इति हेमचन्द्रः ।२।९३। देवानामस्त्रञ्च ॥

देवार्ह, क्ली, ( देवमर्हतीति । अर्ह+अच् । ) सरपर्णम् । इति राजनिर्घण्टः ॥

देवार्हा, स्त्री (देवार्ह+टाप् ।) महादेवी लता । इति राजनिर्घण्टः ॥

देवालय, पुं, ( देवानामालय आवासः ।) स्वर्गः । ( यथा, देवीभागवते । ५ । ८ । ३ ।
"व्रज देवालयं शक्र ! यथेष्टं भज माधव ! ॥")
देवगृहम् । इति शब्दार्थकल्पतरुः ॥ ( यथा, शार्ङ्गधरपद्धतौ । १ । ८६ ।
"शिव वाटी

देवावी, स्त्री, ( देवानपि
लीति । अव+ला+क । ) ।
इति हलायुधः ॥

देवावास, पुं, ( देवानां आवासो
अश्वत्थवृक्षः । इति त्रिकाण्डशेषः ॥

देवाश्व, पुं (देवस्य इन्द्रस्य अश्वः ।)
उच्चैःश्रवाः । इति हलायुधः ॥

देविका, स्त्री, ( दीव्यतीति । दिव
स्वार्थे कन् । ) नदीविशेषः । इति
वर्णौ ॥ तस्याः परिमाणं यथा,—
"अर्द्धयोजनविस्तारां
रुतावद्देविकामाहुर्देवर्षिपरिसेविताम्
इति
(इयं हिमवत्पादनि सृता । इति
अम् । ११६ ।२१। अनया सह
इति कालिकापुराणम् । २३ अ ।
तीर्थस्थानानामन्यतमा । अत्र नरः
महादेवं समभ्यर्च्य यथाशक्ति चरु
सर्व्वकामसमृद्धस्य यज्ञस्य फलं
महाभारतम् । ३ । ८२ । ९९ । इयं
स्थानानाम् अन्यतमा । अत्र
रूपेण विराजते । यथा,
३० । ९८ ।
"शिवकुण्डे शुभानन्दा नन्दिनी
युधिष्ठिरस्य पत्नीविशेषः । यथा,
१ । ९५ । ७६ ।
"युधिष्ठिरस्तु गोवासनस्य शैब्यस्य
कन्यां स्वयंवरे लेभे । तस्यां पुत्त्र
यौधेयं नाम ॥") धुस्तूरः ।
देवसम्बन्धिनि, त्रि ॥

देविल, त्रि ( दीव्यति आनन्देनेति ।
'गुपादिभ्यः कित् ।' उणां १ । ५७
इलच् । ) धार्म्मिकः । इत्युणादिकोषः ॥

देवी स्त्री, (दीव्यतीति । दिव+अच् ततो
दुर्गा । इति धरणी ॥ (यथा, मार्कण्डेये
"देव्या यया ततमिदं जगदात्मशक्त्या
निःशेषदेवगणशक्तिसमूहमूर्त्त्या ॥"
नाट्योक्तौ कृताभिषेका राजपत्नी ।
१।७।१६। मूर्व्वा । ( यथा भावप्रकाशे
'मूर्व्वा मधुरसा देवी मोरटा
एला । इति मेदिनी । वे १२ ॥ (देवानां
ङीप् । ) सामान्यदेवपत्नी । यथा,
दक्षिणायनं इति स्मृतिः ॥
पदम् । यथा देवमा हि स्त्रियो मताः
ब्राह्मणसम् ॥ अपि च, कर्म्मविपाके ।
'देवमाता स्त्रियः सर्व्वा दारमात्रा

आदित्यभक्ता । लिङ्गिनी ।
शालिपर्णी । महाद्रोणी । पाठा ।
सूर्व्वाख्या । हरीतकी । अतसी ।
मधिमाति । इति राजनिर्घण्टः ॥ (

विशेषः । स तु अथर्व्ववेदान्तर्गतः । यथा, मुक्तिकोपनिषदि ।
"त्रिपुरातापनं देवी त्रिपुराकटभावना ॥")

देवीकोटः, पुं, ( देव्याः कोटो दुर्गमिव । ) बाण-पुरम् । इति त्रिकाण्डशेषः ॥

देवेज्यः, पुं, ( देवानामिज्यः पूज्यः । ) बृहस्पतिः । इति शब्दरत्नावली ॥

देवेष्टः, पुं, ( देवानामिष्टः प्रियः । ) महामेदा । गुग्गुलुः । इति राजनिर्घण्टः ॥ देववाञ्छिते, त्रि ॥

देवेष्टा, स्त्री, ( देवानामिष्टा । ) वनवीजपूरकः । इति राजनिर्घण्टः ॥

देवोद्यानं, क्ली, ( देवानां उद्यानं वनम् । ) देवानां वनम् । तद्यथा । वैभ्राजम् । मिश्रकम् । मिश्र-कावणम् । चैत्ररथम् । इति त्रिकाण्डशेषः ॥

देशः, पुं, ( दिश्यते निर्दिश्यते इति । दिश निर्देशे + कर्म्मणि घञ् । ) भूगोलभागविशेषः । इति सिद्धान्तमञ्जरी ॥ जनपदे जनपदसमुदाये जनपदैकदेशे जनशून्यस्थानमात्रे च । इत्य-मरटीकायां भरतः ॥ स त्रिविधः । जाङ्गलः अनूपः साधारणश्च । तत्पर्य्यायः । जनपदः १ नीवृत् २ विषयः ३ उपवर्त्तनम् ४ । इति राज-निर्घण्टः ॥ प्रदेशः ५ राष्ट्रम् ६ । इति शब्द-रत्नावली ॥ * ॥ अथ देशे वर्णनीयानि । रत्नम् १ खनिः २ अन्नम् ३ पण्यम् ४ धान्यम् ५ करोद्भवः ६ दुर्गग्रामः ७ वनाधिक्यम् ८ नदी-मातृकतादि ॥ * ॥ अथ ग्रामे वर्णनीयानि । धान्यम् १ लता २ वृक्षः ३ सरः ४ पशुपुष्टिः ५ क्षेत्रम् ६ खरवट्टः ७ केदारः ८ ग्रामेयीसुखम् ९ विभ्रमः १० । इति कविकल्पलता ॥ * ॥

अथ मध्यदेशीयजनपदा यथा,—
"तत्रेमे कुरुपाञ्चालाः शाल्वाश्चैव सजाङ्गलाः ।
शूरसेना भद्रकारा बोधकाः सपटच्चराः ॥
मत्स्याः किराताः कुल्याश्च कुन्तयः काशि-कोशलाः ।
आवन्ताश्च कलिङ्गाश्च कोकाश्चैवान्धकैः सह ॥
मध्यदेशा जनपदाः प्रायशः परिकीर्त्तिताः ॥"

अथ उदीच्या देशा यथा,—
"वाह्लीका वाटधानाश्च आभीराः कालतोयकाः ।
परान्ताश्चैव शूद्राश्च पह्लवाश्चात्तखण्डिकाः ॥
गान्धारा यवनाश्चैव सिन्धुसौवीरमद्रकाः ।
शका द्रुह्याः पुलिन्दाश्च पारदा हारमूर्त्तिकाः ॥
रामठाः कण्टकाराश्च कैकया दशमानिकाः ।
क्षत्त्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ॥
आत्रेयोऽथ भरद्वाजाः प्रस्थलाः सदशेरकाः ।
लम्पकास्तलगानाश्च सैनिकाः सह जाङ्गलैः ॥
एते देशा उदीच्यास्तु प्राच्यान्देशान्निबोधत ॥"

अथ प्राच्या देशा यथा,—
"अङ्गवङ्गा मद्गुरका अन्तर्गिरिबहिर्गिराः ।
ततः प्रवङ्गा मातङ्गा मलया मलवर्त्तिकाः ॥
सुह्मोत्तराः प्रविजया मार्गवाङ्गेयमालवाः ।
प्राग्ज्योतिषाश्च पुण्ड्राश्च विदेहास्ताम्रलि-प्तकाः ॥
शाल्वा मागधगोनर्द्दाः प्राच्या जनपदाः स्मृताः ॥"

अथ दक्षिणापथदेशा यथा,—
"तथापरे जनपदा दक्षिणापथवासिनः ।
पाण्ड्याश्च केरलाश्चैव चोलाः कुल्यास्तथैव च ॥
सेतुका सुखकाश्चैव कुपथा वारवासिकाः ।
नवराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्व्वशः ॥
कावेराश्च सहैषीकैराटव्याः शवरास्तथा ।
पुलिङ्गा विन्ध्यमूषीका वैदर्भा दण्डकैः सह ॥
कुलीयाश्च सिरालाश्च रूपसास्तापसैः सह ।
तथा तैत्तिरकाश्चैव सर्व्वे कारस्करास्तथा ॥
नासिकाद्याश्च ये चान्ये ये चैवान्तरनर्म्मदाः ।
भानुकच्छाः समाहेयाः सह सारस्वतैस्तथा ॥
कच्छीयाश्च सुराष्ट्राश्च आनर्त्ताश्चार्व्वुदैः सह ।
इत्येते अपरान्ताश्च शृणु ये विन्ध्यवासिनः ॥"

अथ विन्ध्यवासिदेशा यथा,—
"मालवाश्च करूषाश्च मेकलाश्चोत्कलैः सह ।
उत्तमार्णा दशार्णाश्च भोजाः किष्किन्धकैः सह ॥
तोषलाः कोशलाश्चैव त्रैपुरा वैदिशास्तथा ।
तुमुरास्तुम्बुराश्चैव पटुमा निषधैः सह ॥
अनूपास्तुण्डिकेराश्च वीतिहोत्रा अवन्तयः ।
एते जनपदाः ख्याता विन्ध्यपृष्ठनिवासिनः ॥"

पर्व्वताश्रयिदेशा यथा,—
"अतो देशान् प्रवक्ष्यामि पर्व्वताश्रयिणश्च ये ।
निहारा हंसमार्गाश्च क्षुपथा अपथाः खशाः ॥
कुपप्रावरणाश्चैव ऊर्णा दर्व्वाः समुद्गकाः ।
त्रिगर्त्ता मण्डलाश्चैव किरातास्तामरैः सह ॥"
इति मत्स्यपुराणम् ॥

अपि च ।
"देशव्यवस्था देवेशि ! कथ्यते शृणु तत्परा ।
वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे ! ॥
तावद्वङ्गाभिधो देशो यात्रायां न हि दुष्यति ।
रत्नाकरं समारभ्य ब्रह्मपुत्रान्तगं शिवे ! ।
वङ्गदेशो मया प्रोक्तः सर्व्वसिद्धिप्रदर्शकः ॥
जगन्नाथात् पूर्व्वभागात् कृष्णातीरान्तगं शिवे ।
कलिङ्गदेशः संप्रोक्तो वाममार्गपरायणः ॥
कलिङ्गदेशमारभ्य पञ्चाशद्योजनं शिवे ! ।
दक्षिणस्यां महेशानि ! काजिङ्गः परिकीर्त्तितः ॥
सुब्रह्मण्यं समारभ्य यावद्देवो जनार्द्दनः ।
तावत् केरलदेशः स्यात् तन्मध्ये सिद्धकेरलः ॥
रामेश्वरात् चक्रटेशात् हंसकेरलनामकः ।
अनन्तशेषमारभ्य यावत् स्यादयं परे ॥
तावत् सर्व्वेशनामा तु केरलः परिकीर्त्तितः ।
शारदामठमारभ्य कुङ्कुमाद्रितटान्तकम् ॥
तावत् काश्मीरदेशः स्यात् पञ्चाशद्योजना-त्मकम् ॥
कालेश्वरं श्वेतगिरिं त्रैपुरं नीलपर्व्वतम् ॥
कामरूपाभिधो देशो गणेशगिरिमूर्द्धनि ।
त्रिपथकं समारभ्य मध्ये चोम्बिनी शिवे ! ॥
माण्डीरतीर्थं राजेन्द्र ! कोलापुरनिवासिनी ।
तावद्देशो महाराष्ट्रः कर्णाटस्यापि गोचरः ॥
जगन्नाथादूर्द्ध्वभागमर्व्वाक् श्रीभ्रमराम्बिकात् ।
तावदन्ध्राभिधो देशः सौराष्ट्रं शृणु सादरम् ॥
कोङ्कणात् पश्चिमं तीर्थं समुद्रप्रान्तगोचरम् ।
हिङ्गुलाद्यान्तको देवि ! दशयोजनदेशतः ॥
सौराष्ट्रदेशो देवेशि ! तस्मात्तु गुर्ज्जराभिधः ।
श्रीशैलन्तु समारभ्य चोलेशान्मध्यभागतः ॥
तैलङ्गदेशो देवेशि ! ध्यानाध्ययनतत्परः ।
सुराभिधां समारभ्य मलयाद्र्यन्तगं शिवे ! ॥
मलयालाभिधो देशो मन्त्रसिद्धिप्रवर्त्तकः ।
रामनाथं समारभ्य श्रीरङ्गान्तं विलेश्वरि ! ॥
कर्णाटदेशो देवेशि ! साम्राज्यभोगदायकः ।
ताम्रपर्णीं समासाद्य शैलाद्रिशिखरोद्धतः ॥
अवन्तीचम्पको देशः कालिका तत्र तिष्ठति ।
भद्रकालीमहापूर्व्वे रामदुर्गाच्च पश्चिमे ।
श्रीविदर्भाभिधो देशो वैदर्भी तत्र तिष्ठति ॥
गुर्ज्जरात् पूर्व्वभागे तु द्वारकातो हि दक्षिणे ।
मरुदेशो महेशानि ! उग्रोत्पत्तिपरायणः ॥
श्रीकोङ्कणादधोभागे तापीतः पश्चिमे परे ।
आभीरदेशो देवेशि ! विन्ध्यशैले व्यवस्थितः ॥
अवन्तीतः पूर्व्वभागे गोदावर्य्यास्तथोत्तरे ।
मालवाख्यो महादेशो धनधान्यपरायणः ॥
द्रविड़तैलङ्गयोर्मध्ये चोलदेशः प्रकीर्त्तितः ।
लम्बकर्णाश्च ते लोकाजङ्गदो वान्तरे भवेत् ॥
कुरुक्षेत्रात् पश्चिमे तु तथा चोत्तरभागतः ।
इन्द्रप्रस्थं महेशानि ! दशयोजनकद्वये ॥
पाञ्चालदेशो देवेशि ! सौन्दर्य्यगर्व्वभूषितः ।
पाञ्चालदेशमारभ्य म्लेच्छाद्दक्षिणपूर्व्वतः ॥
काम्बोजदेशो देवेशि ! वाजिराशिपरायणः ।
वैदर्भदेशादूर्द्ध्वञ्च इन्द्रप्रस्थाच्च दक्षिणे ॥
मरुदेशात् पूर्व्वभागे वैराटः परिकीर्त्तितः ।
काम्बोजाद्दक्षभागे तु इन्द्रप्रस्थाच्च पश्चिमे ॥
पाण्ड्यदेशो महेशानि ! महाशूरत्वकारकः ।
गण्डकीतीरमारभ्य चम्पारण्यान्तकं शिवे ! ॥
विदेहभूः समाख्याता तैरभुक्ताभिधः स तु ।
काम्बोजदेशमारभ्य महाम्लेच्छात्तु पूर्व्वके ।
वाह्लीकदेशो देवेशि ! अश्वोत्पत्तिपरायणः ॥
तप्तकुण्डं समारभ्य रामक्षेत्रान्तकं शिवे ! ।
किरातदेशो देवेशि ! विन्ध्यशैलेऽवतिष्ठते ॥
करतोयां समारभ्य हिङ्गुलाद्यान्तकं शिवे ! ।
मुलतानदेशो देवेशि ! महाम्लेच्छपरायणः ॥
हिङ्गुपीठं समारभ्य मक्केशान्तं महेश्वरि ! ।
खुरासानाभिधो देशो म्लेच्छमार्गपरायणः ॥
तन्मध्ये चोत्तरे देवि ! ऐराकः परिकीर्त्तितः ।
काश्मीरन्तु समारभ्य कामरूपात्तु पश्चिमे ।
भोटान्तदेशो देवेशि ! मानसेशाच्च दक्षिणे ॥
मानसेशाद्दक्षपूर्व्वे चीनदेशः प्रकीर्त्तितः ।
कैलासीरं समारभ्य सरयूं परितः परे ॥
अमरगा महेशानि महाचीनाभिधो भवेत् ।
जटेश्वरं समारभ्य योगिन्यन्तं महेश्वरि ! ॥
नेपालदेशो देवेशि ! शिलहट्टं शृणु प्रिये ! ।
गणेश्वरं समारभ्य महोदध्यन्ततः शिवे ! ॥
शिलहट्टाभिधो देशः पर्व्वते तिष्ठति प्रिये ! ।
वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे ! ॥

गौड़देशं समाख्यातं सर्व्वविद्याविशारदं ।
गोकर्णेशात् पूर्व्वभागे आर्य्यावर्त्तात्तु चोत्तरे ॥
तैरभुक्तात् पश्चिमे तु महापुण्यात्र सर्व्वत ।
महाकोशलदेशश्च सूर्य्यवंशपरायण ॥
वातेश्वरं समारभ्य तप्तकुण्डान्तक शिवे ।
मगधाख्यो महादेशो यात्रायां न हि दुष्यति ॥
दक्षोत्तरक्रमेणैव क्रमात् कीकटमागधौ ।
चरणाद्रि समारभ्य गृध्रकूटान्तक शिवे ! ॥
तावत् कीकटदेशः स्यात्तदन्तर्मागधो भवेत् ।
जगन्नाथप्रान्तदेशश्चोत्कलं परिकीर्त्तितं ॥
कामगिरिं समारभ्य द्वारकान्तं महेश्वरि ! ।
श्रीकुन्तलाभिधो देशो हून प्रणु महेश्वरि ! ॥
कामगिरेर्दक्षभागे महद्देशात्तथोत्तरे ।
हूनदेशं समाख्यातं शूराश्च रमन्ति च ॥
त्र्यम्बकं समारभ्य कोटिदेशस्य मध्यग ।
समुद्रप्रान्तदेशो हि कोङ्कणं परिकीर्त्तितं ॥
महापुण्यात् कामरूपात् मध्यभागे तु कैकयं ।
मागधाद्दक्षभागे तु विन्ध्यात् पश्चिमतः शिवे ! ॥
सौरसेनाभिधो देशः सर्व्वतन्त्रप्रकाशकः ।
हस्तिनापुरमारभ्य कुरुक्षेत्राच्च दक्षिणे ॥
पाञ्चालपूर्व्वभागे तु कुरुदेशं प्रकीर्त्तितं ।
मरुदेशात् पूर्व्वभागे कामाद्रेर्दक्षिणे शिवे ! ॥
सिंहलाख्यो महादेशः सर्व्वदेशोत्तमोत्तमः ।
शिलहट्टात् पूर्व्वभागे कामरूपात्तथोत्तरे ॥
पुलस्त्यदेशो देवेशि ! नरनारायणः परः ।
गयेश्वरात् पूर्व्वभागे समुद्रादुत्तरे शिवे ! ॥
कच्छदेशं समाख्यातं सुदेशं प्रणु सादरम् ।
पुलिन्दादुत्तरे भागे कच्छाच्च पश्चिमे शिवे ! ॥
मत्स्यदेशः समाख्यातो मत्स्यसंवाहुल्यकारकः ।
वैराटपाण्डयोर्मध्ये पूर्व्वदक्षक्रमेण तु ॥
मद्रदेशः समाख्यातो माद्रीदा तत्र तिष्ठति ।
शूरसेनात् पूर्व्वभागे गण्डक्याः पश्चिमे शिवे ! ॥
सौवीरदेशो देवेशि ! सर्व्वदेशाधमाधमः ।
अवन्तीतः पश्चिमे तु विदर्भाद्दक्षिणोत्तरे ॥
लाटदेशः समाख्यातो वर्व्वरं प्रणु पार्व्वति ! ।
मायापुरं समारभ्य सप्तशृङ्गात्तथोत्तरे ॥
वर्व्वराख्यो महादेशः सैन्धवं प्रणु सादरम् ।
लङ्काप्रदेशमारभ्य मक्कान्तं परमेश्वरि ! ॥
सैन्धवाख्यो महादेशः पर्व्वते तिष्ठति प्रिये ! ।
एते षटपञ्चाशद्देशा मया प्रोक्ता महेश्वरि ! ॥
एतन्मध्येऽपि देवेशि ! देशभेदा ह्यनेकशः ।
कोटिशः सन्ति देवेशि ! एते मुख्याः प्रकीर्त्तिताः ॥
रहस्यातिरहस्यञ्च गोपय प्रसभक्षये ।
इति सङ्क्षेपतः प्रोक्तं किमन्यत् श्रोतुमिच्छसि ॥'

इति शक्तिसङ्गमतन्त्रे ७ पटलः ॥

देशकः त्रि ( दिशतीति । दिश आदेशे+"खुल् तृचौ ।" ३ । १ । १३३ । इति ण्वुल् । ) शास्ता । इति हेमचन्द्रः । ३ । १५२ ॥
"तपोमार्गप्रवृत्तस्य भास्तु सम्मार्गदेशकः ।
सन्तु मेऽतिथयः श्राध्दा वितराने तथाश्रये ॥'
इति मार्कण्डेये । १६ । १७ ॥

देशकारी, स्त्री, रागिणीविशेषः । हनूमन्मते मेघरागस्य भार्य्या । अस्या जातिः सम्पूर्णा । ग्रह षड्जस्वरः गानसमयः वर्षर्त्तौ निशान्ते । अस्याः स्वरूपं सुन्दरस्त्री तिलयुक्तानना कमलनयना दाडिमस्तनी गौराङ्गी बिम्बोष्ठी मुक्ताहारकण्ठी कर्पूरचन्दनलिप्ताङ्गी यान शय्यां नायकेन सहोपविश्य हावभावकटाक्षान् कुर्व्वती । सङ्गीतदर्पणमते अस्या गानसमय प्रातर्वैराटीरागिण्या सह । अस्याः स्वरूपं नायकेन सह केलिकौतुकरता श्यामकेशभारा जितशरत्पूर्णचन्द्रानना अनङ्गराजिताङ्गी काञ्चनकलसद्युतिहारिकुचा कमलनयना स्तब्ध भाषिणी । इति सङ्गीतशास्त्रम् ॥

देशरूप, क्ली, ( दिश्यते इति । दिश + कर्म्मणि घञ् । देशस्य हेतुयुक्तिदेशकालपात्रादिभिरि-ष्यमाणस्य रूपम् । यद्वा, देशस्य देशानुरूप-चारस्य रूपम् । ) उचितम् । इत्यमरः । २ । ८ । २४ ॥ ( यथा, महाभारते । १२ । १०० । ५ ।
"यौवराज्यवृत्तिश्च यथा धर्म्मं प्रकीर्त्तितम् ।
अधुना देशरूपेण मन्त्रयोगेन भारत ! ॥")

देशाख्यी, स्त्री, रागिणीविशेषः । हनूमन्मते हिन्दोलरागस्य द्वितीयरागिणी । तस्या जातिः षाडवः ग्रह गान्धारस्वरः गानसमयः वर्षर्त्तौ पूर्व्वाह्णः । अस्याः स्वरूपम् । सुरूपा नारी चन्द्रवदना क्रोधना कलहप्रिया रोमहर्षा निष्कोषकरवालकरा मल्लवत् सूक्ष्मवस्त्रवेष्टित वाहुयुगा बलमर्द्दितकक्षापितस्तनयुगला सर्व्वदा स्वसमीपस्थापितनायका च । राग-मालामते तु तस्याः स्वरूपं मल्लवत् परस्पर मल्लक्रीड़ायां नियुक्ता । सा क्रीड़ामल्लकाक्षी तप्तस्वर्णप्रभावात्तोलनभूमिलुण्ठनादिरूपा । कल्लिनाथमते वसन्तरागस्य भार्य्या । सङ्गीत दर्पणमते अस्याः जातिः सम्पूर्णा । अस्याः स्वरूपं कर्पूरादपि कमनीयाङ्गी कमलराजित-नयना हर्षयुक्ता रसिका अतिधीरा किञ्चित् सङ्कुचिता दीर्घकेशा मल्लद्युतिमोचिनी च । इति सङ्गीतशास्त्रम् ॥

देशान्तर, क्ली ( अन्यो देशः । मयूरव्यंसकादि वत् समासः । ) सुमेरुलङ्कयोर्मध्यरेखास्वरूप देशस्वदेशयोरन्तरयोजनम् । इति सिद्धान्तरह स्यम् ॥ ये उदयान्तरकर्म्मणा लङ्कायामौद-यिका यद्वा जातास्ते देशान्तरकर्म्मणा स्वपुरी दयिका स्युः । तच्च द्विविधं एकं पूर्व्वापरं द्वितीयं याम्योत्तरं तत्तत्तत्रसत्तम् । यथा,—
"येनैव लङ्कोदयकालिकास्ते
देशान्तरेण स्वपुरोदये स्युः ।
देशान्तरं प्रागपरं तथान्यत्
याम्योत्तरं तत्तरसत्रसत्तम् ॥"
इति सिद्धान्तशिरोमणिः ॥॥
देशान्तरपरिभाषायां रहस्यम् ।
'यत्रो यत्र विभिद्यन्ते गिरिर्वा व्यवधायक ।
महानद्यन्तरं यत्र तद्देशान्तरमुच्यते ॥

देशभाषनदीभेदाभिकटोऽपि भवेद्यदि ।
तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा ॥
दशरात्रेण या वार्त्ता यत्र न श्रूयतेऽथवा
इत्यपरे ।
देशान्तरं वदन्त्येके षष्टियोजनमायतम् ।
चत्वारिंशद्वदन्त्येके त्रिंशदेके तथैव च ॥"

ख्यायेम् एव खाख्यायते त्रिनयवैशिष्ट्ये योजनाभ्यन्तरे द्विनयवैशिष्ट्ये तदुपरि वैशिष्ट्ये चत्वारिंशद्योजनोपरि महानद्यन्तरितलभेदाभावेऽपि वैदेशम् ।" इति शुद्धिचिन्तामणिः ॥

देशिक, पु, ( देशे प्रचित इति । देश + ठक् पथिकः । इति हेमचन्द्रः । ३ । १५० ॥ महाभारते । ७ । ५ । १० ।
"अदेशिको यथा सार्थः सर्व्व अनायका ।"
गुरु । यथा देशिको मूलमन्त्रेण इत्यागमः ( यथा,महाभारते । १३ । १४७ । ४२ ।
"धर्म्माणां देशिकः साक्षात् स भविष्यति भाक् ।
धर्म्मविद्भिः सदेवैशो नमस्काय सदाऽर्च्चितं ॥"

देशिनी, स्त्री, ( दिशतीति । दिश आदेशे णिनि । स्त्रियां ङीप् । ) तर्ज्जनी । रत्नावली ॥ ( यथा, याज्ञवल्क्यसंहितायाम् । १ । १९ ।
'कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च ।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥')

देशी, स्त्री, रागिणीविशेषः । हनूमन्मते दीपक रागस्य भार्य्या । अस्या जातिः षाडवः ग्रह ऋषभस्वरः गानसमयः ग्रीष्मर्त्तौ मध्याह्नः । अस्याः स्वरूपं सुरूपा नारी हरिद्रावर्णा बल युता यौवनमदेन कामासक्ता सती नायकस्य नागारमागत्य निधुवनरता च । भरतमते तु मेघरागस्य पत्नी । सङ्गीतदर्पणमते हिन्दोल रागस्य भार्य्या । तस्या गानसमयः यामयुग लम् । तस्याः स्वरूपम् । निद्रायुक्तनयना आलस्ययुक्ता प्रियाभिमुखी नायकस्य निद्रा भञ्जनार्थं मनोरञ्जनतानं गायन्ती रमणेच्छया रचितवेशा । भूषणगणशोभिता गौराङ्गी परि हितहरिद्वर्णशाटिका । इति सङ्गीतशास्त्रम् ॥ (सङ्गीतभेदः । यथा सङ्गीतदर्पणे । १ । ३—६ ।
'गीतं वाद्यं नर्त्तनञ्च त्रयं सङ्गीतमुच्यते ।
मार्गदेशी विभागेन सङ्गीतं द्विविधं मतम् ॥
द्रुहिणेन यदन्विष्टं प्रयुक्तं भरतेन च ।
महादेवस्य पुरतस्तन्मार्गाख्यं विमुक्तिदम् ॥
तत्तद्देशस्थया रीत्या यत् स्याल्लोकानुरञ्जनम् ।
देशे देशे तु सङ्गीतं तद्देशीत्यभिधीयते ॥")

देश्य क्ली, ( दिश्यते इति । दिश + कर्म्मणि यत् । ) पूर्व्वपक्षः । इति शब्दरत्नावली ॥ देश्यः त्रि ॥ ( देशे भवः । देश + 'दिगादिभ्यो यत् ।' ४ ।

५४। इति यत्।) देशभवे। यथा, राज-
ङ्गण्याम्। ३। ६।
।गाय देश्यभिक्षूणां वज्रभास्याम्लतप्रभा॥")
त्रि, (ददातीति। दा+"गादाभ्यामि-
इ।" उणां ३। १६। इति इष्णुच्।) दाता।
मः। इति हेमचन्द्रः॥ रणकः। इति
क्षप्रसारे उणादिवृत्तिः॥
पुं क्ली, (देग्धि प्रतिदिनम्। दिह् वृद्धौ+
च्।) शरीरम्। इत्यमरः। २। ६। ७१।
ायमते पृथिव्या देहं योनिजम् अयोनिजञ्च।
।निजं जरायुजमण्डजञ्च। अयोनिजं स्वेदजो-
इदादिकम्। नारकिणां शरीरमप्ययोनिजम्।
ालीयं देहमयोनिजं वरुणलोके प्रसिद्धम्।
ैजसं देहमयोनिजं सूर्य्यलोके प्रसिद्धम्। वायो-
ेहमयोनिजं तदेव पिशाचादीनाम्। इति
सिद्धान्तमुक्तावली॥ *॥
अथ नरकभोगदेहविवरणम्। तत्र यम प्रति
सावित्रीप्रश्नः।
"स्वदेहे भस्मसाद्भूते यान्ति लोकान्तरं नराः।
केन देहेन वा भोगं भुञ्जते च शुभाशुभम्।
सुचिरं क्लेशभोगेन कथं देहो विनश्यति।
देहो वा किंविधो ब्रह्मन्! तन्मे व्याख्यातुमर्हसि॥"
यमस्योत्तरम्।
"शृणु देहविवरणं कथयामि यथागमम्।
पृथिवी वायुराकाशस्तेजस्तोयमिति स्फुटम्॥
देहिनां देहवीजञ्च स्रष्टुः सृष्टिविधौ परम्।
पृथिव्यादिपञ्चभूतैर्यो देहो निर्म्मितो भवेत्॥
स कृत्रिमो नश्वरश्च भस्मसाच्च भवेदिह॥
वृद्धाङ्गुष्ठप्रमाणश्च यो जीवपुरुषः कृतः।
विभर्त्ति सूक्ष्मदेहन्तं तद्रूपं भोगहेतवे॥
स देहो न भवेद्भस्म ज्वलदग्नौ यमालये।
जले न नष्टो देही वा प्रहारे सुचिरे कृते॥
न शस्त्रे च न चास्त्रे च न तीक्ष्णकण्टके तथा।
तप्तद्रवे तप्तलौहे तप्तपाषाण एव च॥
प्रतप्तप्रतिमाश्लेषेऽप्यत्यूर्द्ध पतनेऽपि च।
न च दग्धो न भग्नश्च भुङ्क्ते सन्तापमेव च॥
कथितं देहवृत्तान्तकारणञ्च यथागमम्॥"
इति ब्रह्मवैवर्त्तपुराणम्॥
ईश्वरदेहस्य प्रमाणं यथा,—
"यस्मिं गुह्यतमं देहं सर्व्वगं तत्त्वदर्शिनः।
प्रविष्टा मम सायुज्यं लभन्ते योगिनोऽव्ययम्॥"
इति कूर्म्मपुराणम्॥
देहकोषः, पुं, (देहस्य कोष इव आवरकत्वात्।)
पक्षः। इति शब्दचन्द्रिका॥ पाखा इति भाषा॥
देहक्षयः, पुं, (देहस्य क्षयो हानिर्यस्मात्।)
रोगः। इति शब्दचन्द्रिका॥
देहदः, पुं, (देहं ददाति यद्वा दायति क्षतादेः
शोधयतीति। दा दाने दैप शोधने वा+
"आतोऽनुपसर्गे कः।" ३। २। ३। इति कः।)
पारदः। इति राजनिर्घण्टः॥ (देहदातरि, त्रि॥)
देहदुर्गन्धता, स्त्री, (देहस्य दुर्गन्धता) शरीर-
दौर्गन्ध्यम्। तन्नाशकौषधं यथा,—
"अर्ज्जुनस्य च पुष्पाणि जम्बुपत्रयुतानि च।
सलोध्राणि च तल्लेपो देहदुर्गन्धतां हरेत्॥"
इति गारुड़े १६४ अध्यायः॥
देहधारकं, क्ली स्त्री, (देहं धारयतीति। धारि+
"ण्वुल्तृचौ।" ३। १। १३३। इति ण्वुल्।)
अस्थि। इति हेमचन्द्रः। ३। २९०।
देहधिः, पुं, (देहो धीयते अस्मिन्निति। देह+
धा+आधारे किः।) पक्षः। इति शब्द-
चन्द्रिका॥ पाखा इति भाषा॥
देहचक्, [च्] पुं, (देहे चर्च्चति सञ्चरतीति।
चृच्+क्विप्।) वायुः। इति शब्दचन्द्रिका॥
(यथा, सुश्रुते। २। १।
"वायुर्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक्॥")
देहभृत्, पुं, (देहं विभर्त्तीति। देह+भृ+
क्विप् तुगागमश्च।) जीवः। इति हेमचन्द्रः।
६। २॥ (यथा, रघौ। ८। ५१।
"धिगिमां देहभृतामसारताम्॥")
देहयात्रा, स्त्री, (देहस्य यात्रा लोकान्तरगम-
नम्।) यमपुरीगमनम्। मरणम्। (देहाय
देहरक्षणाय या यात्रा उद्यमादिः।) भोजनम्।
इति मेदिनी। रे, २६८॥ (यथा, भागवते।
४। २३। २०।
"अतीव भर्त्तुर्व्रतधर्म्मनिष्ठया
शुश्रूषया चारयदेहयात्रया।
नाविन्दतार्त्तिं परिकर्शितापि सा
प्रेयस्करस्पर्शनमाननिर्वृतिः॥")
देहला, स्त्री, (देहं लाति देहस्य पुष्टिं ददातीति।
देह+ला+कः टाप्। सेवनेन प्रथमं पुष्टि-
वर्णादिप्रदानादस्यास्तथात्वम्।) मद्यम। इति
शब्दचन्द्रिका॥
देहलिः, पुं, (दिह+भावे घञ्। देहो लेपस्तं
लाति गृह्णातीति। देह+ला+वाहुलकात्
किः।) देहली। इति शब्दरत्नावली॥
देहली, स्त्री, (देहं लेपं लातीति। देह+ला+
"आतोऽनुपसर्गे कः।" ३। २। ३। इति कः।
गौरादित्वात् ङीष्।) गृहावग्रहणी। इत्य-
मरः। २। २। १३॥ दारपिण्डिका। द्वाराग्र-
स्थानम्। इति केचित्॥ हातिगा इति ख्याता
इति केचित्॥ अध उडुम्बरम्। तत्शिलाया
अधोदारुपाषाणो वा। इति स्वामी॥ इत्य-
मरटीकायां भरतः॥ (यथा, मेघदूते। ८७।
"शेषान् मासान् गमनदिवसस्थापितस्यावधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीमुक्तपुष्पैः॥")
देहसारः, पुं, (देहस्य सारः।) मज्जा। इति
राजनिर्घण्टः॥
देहात्मवादी, [न्] त्रि, (देहमेवात्मानं पर-
ब्रह्म वदतीति। वद्+णिनिः।) चार्व्वाकः।
तस्येदं मतम्। शरीरमेवात्मा प्रज्वलितगृहात्
स्वपुत्रं परित्यज्यापि स्वस्य निर्गमदर्शनात् स्थूलो-
ऽहं कृशोऽहमित्यनुभवाच्च। अत्र प्रमाणम्।
देहमात्रं चैतन्यविशिष्टमात्मेति प्राकृताः।
इति शारीरिकसूत्रभाष्यम्॥
अपि च।
"न्यात्मास्ति देहाद्व्यतिरिक्तमूर्त्ति-
र्भोक्ता स लोकान्तरितः फलानाम्।
आशेयमाकाशतरोः प्रसूनात्
प्रथीयसः स्वादुफलप्रसूतौ॥"
इति प्रबोधचन्द्रोदयः॥
देहिका, स्त्री, (देग्धीति। दिह् वृद्धौ+ण्वुल्।
टापि अत इत्वम्।) कीटविशेषः। तत्-
पर्य्यायः। वटिः २ उपादिकः ३। इति
त्रिकाण्डशेषः॥ उपजिह्विका ४ उत्पादिका ५
उद्देहिका ६ दिवी ७। इति हारावली॥
देही, [न्] (देहोऽस्त्यस्येति। देह+इनिः।)
शरीरी। प्राणी। अस्य गुणा यथा,—
"बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा।
धर्म्माधर्म्मौ गुणा एते आत्मनः स्युश्चतुर्द्दश॥"
अयं इन्द्रियाद्यधिष्ठाता पुण्यपापाश्रयः। ज्ञान-
सुखादियोगतो मानसप्रत्यक्षविषयः। पर-
देहादौ प्रवृत्त्यादिनानुमेयः। अहमित्याकार-
प्रत्ययाश्रयः। मनोमात्रस्य गोचरः। विभुः
परममहत्त्ववान्। इति भाषापरिच्छेदः॥
तथा च। श्रीभगवद्गीतायाम्।
"देही नित्यमवध्योऽयं देहे सर्व्वस्य भारत।
तस्मात् युद्धाय युज्यस्व नैनं पापमवाप्स्यसि॥"
अपि च।
"देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥"
दै, प शोधने। इति कविकल्पद्रुमः॥ (भ्वां-परं-
सकं-अनिट्।) पित्त्वाद्दासंज्ञाभावे यङादौ
दायते इत्यादि। शोधनमिह शुद्धीकरणम्।
दायति ताम्रमम्लेन लोकः। अवपूर्व्वः शुक्ली
भावे (अत्र अकर्म्मकः।) श्विन्दते श्वेतते त्रीणि
स्युः शुक्लत्वेऽवदायति। इति भट्टमलः। इति
दुर्गादासः।
दैतेयः, पुं, (दितेरपत्यं पुमान्। दिति+"स्त्रीभ्यो
ढक्।" ४। १। १२०। इति ढक्।) दैत्यः।
इत्यमरः। १। १। १२॥ (यथा, हरिवंशे।
१८२। ७६।
"जय वाणं महाबाहो! दैतेयं देवपूजित!।
यदर्थमवतीर्णोऽसि तत् कर्म्म सफलीकुरु॥")
दैत्यः, पुं, दितेरपत्यं ("दित्यदित्यादित्यपत्युत्तर-
पदाण्ण्यः।" ४। १। ८५। इति ण्यः।)
असुरः। इत्यमरः। १। १। १२॥ (यथा,
मनुः। १२। ४८।
"तापसा यतयो विप्रा ये च वैमानिका गणाः।
नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः॥")
दितिसम्बन्धिनि, त्रि॥
दैत्यगुरुः, पुं, (दैत्यानां गुरुः।) शुक्रः। इत्यमरः।
१।३।२५॥ (यथा, वृहत्संहितायाम्।१०४।३४।
"आत्मार्थमानास्पदभूतिवस्त्र-
प्राप्नुयात् दैत्यगुरुस्तृतीये॥")
दैत्यदेवः, पुं, (दैत्यानां देवः।) वरुणः। इति
त्रिकाण्डशेषः॥ वायुः। इति हेमचन्द्रः।४।१७३।

ोविदा, स्त्री, ( दैवे दैवनिमित्तशुभाशुभज्ञाने ोविदा विज्ञा । ) दैवज्ञा । इति शब्दरत्ना- ली ॥ दैवचिन्तके, त्रि ॥

ः, त्रि, ( दैवं जानातीति । ज्ञा + कः । ) णकः । इत्यमरः । २ । ८ । १४ ॥ ( यथा, ृहीभागवते । १ । २० । ३४ ।

"दैवज्ञान् वेदविदुषः पप्रच्छ शुभं दिनम् ॥")

स्योत्पत्तिर्यथा, दैवज्ञाख्यगणकापकारी ब्रह्मान्य- न्यकं शुक्रा शतजन्मरूपिक-नानाविधपक्षिकृमि- घभार्यायंप्रहीणश्यापियुतश्वरस्वर्णकारसुवर्ण- वणिग्यवनसेविविप्रजात्याख्यगणका भूत्वा दैवज्ञो गणकोपजीविविप्रो भवति ॥ ० ॥

अपि च ।

"लाक्षालोहादिव्यापारी रसादिविक्रयी च यः ।
स याति नरकंघोरं नागैर्वेष्टित एव च ॥
वसेत् स्वलोममानाब्दं तत्रैव नागदंशितः ।
ततो भवेत् स गणको वैद्यस्य सप्तजन्मसु ॥
गोपश्च चर्मकारश्च रङ्गकारस्ततः शुचिः ॥"

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डम् ॥

दैवज्ञा, स्त्री, ( दैवं जानातीति । ज्ञा + कः । तत- ष्टाप् ।) दैवज्ञभार्य्या । प्रश्नादिना शुभाशुभज्ञा । लक्षणादिना शुभाशुभनिरूपिणी । तत्पर्य्यायः । विप्रश्निका २ ईक्षणिका ३ । इत्यमरः ।२।६।२०॥

दैवतः, पुं क्ली, (देवता एव । स्वार्थे अण् ।) देवता । इत्यमरः ।१।१।६॥ ( यथा, रामायणे । २ । ५० । २ ।

"आपृच्छे त्वां पुरिश्रेष्ठे ! काकुत्स्थपरिपालिते ॥
दैवतानि च यानि त्वां पालयन्त्यावसन्ति च ॥"

देवतानां समूहः । देवता + अण् । ) देवता- समूहे, क्ली । ( देवताया इदम् । अण् । ) देव- सम्बन्धिनि, त्रि ॥

दैवदीपः, पुं, (दैवः सूर्य्याधिष्ठात्को दीपः । दर्शने- न्द्रियस्य सूर्य्याधिष्ठातृत्वात्तथात्वम् ।) चक्षुः । इति त्रिकाण्डशेषः ॥ देवसम्बन्धिप्रदीपश्च ॥

दैवपरः, त्रि, ( दैवमेव परं प्रधानं यस्य । ) दैव- निष्ठः । तत्पर्य्यायः । बद्धविघ्नः २ । इति हेम- चन्द्रः । ३ । ४७ ॥ ( यथा, मार्कण्डेये ।४३।८६।

"चार्वाकैर्लिङ्गिभिः क्रूर्य्यात्ते च यवनैर्निन्दितैः ।
न सर्व्वशक्तिभिर्मैत्रीं न च दैवपरैर्नरैः ।
कुर्व्वीत चायुर्भिर्मैत्रीं सदाचाररायणैर्बुधैः ॥")

दैवप्रश्नः, पुं, ( दैवे दैवनिमित्तशुभाशुभविषये यः प्रश्नः ।) प्राक्तनशुभाशुभकर्म्मजिज्ञासा । तत्- पर्य्यायः । उपश्रुतिः २ । इति त्रिकाण्डशेषः ॥ ( दैववाणी । यदुक्तं हारावल्याम् । २२ ।

"नक्तं निर्गत्य यत्किञ्चित् शुभाशुभकरं वचः ।
श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिम् ॥" )

दैवयुगं, क्ली, ( दैवं देवसम्बन्धि युगम् । ) देवानां युगम् । तच्च दैवमानेन द्वादशसहस्रवर्षम् । मनुष्यपरिमाणेन चतुर्युगमानम् । इति शब्दार्थ- कल्पतरुः ॥ (यदुक्तं मनौ । १ । ७१ ।

"यदेतत् परिसंख्यातमादावेव चतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥")

दैवलकः, पुं, ( देवल इव कायतीति । कै + कः । ततः स्वार्थे अण् । ) भीतः । भूतसेवकः । इति हारावली । १५० ॥ देवलसम्बन्धिनि, त्रि ॥

दैवलेखकः, पुं, ( दैवं दैवनिमित्तशुभाशुभं लिख- तीति । लिख + ण्वुल् । ) मौहूर्त्तः । गणकः । इति त्रिकाण्डशेषः ॥

दैववाणी, स्त्री, (दैवी आकाशसम्बन्धिनी वाणी ।) आकाशवाणी । अमानुषी वाक् । तत्पर्य्यायः । चिरोक्तिः २ पुष्पशकटी ३ दैवप्रश्नः ४ उप- श्रुतिः ५ । इति त्रिकाण्डशेषः ॥ संस्कृतवाक्यम् । यथा, दण्डी ।

"संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः ॥"

"गीर्वाणवाणीवदनं सुछन्द-
संकीर्त्तनञ्चोभयं हि लोके ।
सुदुर्लभं तच्च न मुग्धबोधा-
स लभ्यतेऽतः पठनीयमेतत् ॥"

इति वोपदेवः ॥

दैवाकरिः, पुं, ( दिवाकरस्य अपत्यं पुमान् । दिवा- कर + इञ् ।) शनिः । यमः । यमुनायां, स्त्री । एतेषामुदाहरणं यथा,—

"सम्प्रति दैवाकरितः पारमिताहरितारुण- करितः ।
नायं कोऽपि विशेषः स्वाहितराशिवशात्त- शुभेषः ॥"

इति काव्योदयधृतपद्मीतकम् ॥

दैवात्, व्य, हठात् । यथा, "दैवादपाङ्गवलनं किल मानवत्याः ।" इति काव्योदयः ॥

दैवाहोरात्रः, पुं, ( दैवः देवसम्बन्धी अहोरात्रः । ) देवानामेकदिवसः । स मनुष्याणां संवत्सरः । इति शब्दार्थकल्पतरुः ॥

दैविकः, त्रि, ( दैवस्य अयं दैवे भवो वा । देव + ठक् । ) देवसम्बन्धी । ( यथा, मनुः । १ । ६५ ।

"अहोरात्रे विभजते सूर्य्यो मानुषदैविके ।
रात्रिः स्वप्नाय भूतानां चेष्टायै कर्म्मणामहः ॥")

दैवे भवः । इति व्याकरणम् ॥

दैवी, स्त्री, ( देवस्य इयम् । देव + अण् अञ् वा । ततो ङीप् । ) देवसम्बन्धिनी । यथा,—

"मक्षीमात्समिति स्फुरत्यपि हृदि व्यावर्त्तिका वासना
का नामेयमतर्क्यसेतुगहना दैवी सतां यातना ।"

इति शान्तिशतके । ७ ।

चिकित्साविशेषः । यथा, वैद्यके ।

"आसुरी मानुषी दैवी चिकित्सा त्रिविधा मता ॥"

दैव्यं, क्ली, ( देवस्य इदम् । "देवाद्यञञौ ।" ४ । १ । ८५ । इत्यस्य वार्त्तिकोक्त्या यञ् । ) दैवम् । भाग्यम् । इत्यमरटीकायां भरतः ॥ ( देव- सम्बद्धे, त्रि । यथा, ऋग्वेदे । २ । ३० । ११ ।

"तं वः शर्द्धं मारुतं सुम्नयुर्गिरोप ब्रुवे नमसा दैव्यं जनम् ॥" )

दैशिकं, त्रि, ( देशे भवं देशस्य इदं वा । देश + ठञ् । ) देशसम्बन्धि । भवार्थे ठिकप्रत्ययेन सिद्धम् । सम्बन्धविशेषः । यथा । कालभावयोः सप्तमीति सूत्रं भावः सत्त्वं तच्च द्विविधं कालिकं दैशिकञ्चेति कारकपक्षे भवानन्दसिद्धान्त- वागीशः ॥ देशनिष्ठविशेषणता । इति नैया- यिकाः ॥

दैष्टिकः, पुं, दिष्टेन भवः । ( दिष्ट + ठक् । ) भाग्याधीनजातः । कालेन जातः । इति व्याकरणम् ॥ ( दिष्टं भागधेयमिति मतिर्यस्य । "अस्ति नास्ति दिष्टं मतिः ।" । ४ । ४ । ६० । इति ठक् । दैवपरः । इति सिद्धान्तकौमुदी ॥ )

दैहिकं, त्रि, ( देहस्य इदं देहे भवं वा । देह + ठञ् । ) देहसम्बन्धि । यथा,—

"भीरूणां भैरवाणां भवति सुविहिता दैहिकी गोपिताणां ।"

इति कुब्धिकातन्त्रेऽष्टमांशः ॥

दो, श छेदे । इति कविकल्पद्रुमः ॥ ( दिवां-परं- सकं-सेट् । ) श, शिरोऽवद्यन्ति चिच्छिर्या यः । इति दुर्गादासः ॥

दोः, [ स् ] पुं, ( दाम्यत्यनेनेति । दम उपशमे + "दमेर्डोसिः ।" उणां २ । ६८ । इति डोसिः । ) बाहुः । इत्यमरः । २ । ६ । ८० ॥ ( यथा, अनर्घराघवे । २ । ४४ ।

"दातव्येयमवश्यमेव दुहिता कस्मैचिदेनामसौ दोर्लीलामखणीकृतत्रिभुवनो लङ्कापति- र्याचते ॥" )

दोःशिखरं, क्ली, ( दोष्णः शिखरम् । ) स्कन्धः । इति राजनिर्घण्टः ॥

दोःसहस्रभृत्, पुं, (दोःसहस्रं बाहुसहस्रं बिभ- र्त्तीति । भृ + क्विप् । ) कार्त्तवीर्य्यार्ज्जुनः । इति हेमचन्द्रः । ३ । ३६६ ॥ बाणराजश्च ॥

दोग्धा, [ ऋ ] पुं, (दोग्धीति । दुह + तृच् ।) काव्योप- जीविकविः । वत्सः । गोपालः । इति मेदिनी । धे, ८ ॥ दोहनकर्त्तरि, त्रि ॥ (यथा, कुमारे ।१।२।

"यं सर्व्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे ॥" )

दोग्ध्री, स्त्री, ( दोग्धृ + ङीप् । ) गौः । इति राज- निर्घण्टः ॥ ( यथा, रघुः । २ । २३ ।

"दोहावसाने पुनरेव दोग्ध्रीं
भेजे भुजोच्छिन्नरिपुर्निषण्णाम् ॥" )

दोदुह्यमानः, त्रि, (दुह + यङ् + शानच् । ) पुनः- पुनरतिशयेन वा दोहनविशिष्टः । इति व्याक- रणम् ॥

दोधः, पुं, ( दोग्धीति । दुह + अच् । निपातनात् साधुः । ) गोवत्सः । यथा,—

"देव सदोधकदम्बतलस्थ-
श्रीधर तारकनामपदं मे ।
कण्ठतलेऽसुविनिर्गमकाले
स्वल्पमपि क्षणमेष्यति योगम् ॥"

इति छन्दोमञ्जरी ॥

दोधकः, पुं, छन्दोविशेषः । यथा, श्रुतबोधे ।

"आद्यचतुर्थमहोननितम्बे
सप्तमकं दशमञ्च तथान्त्यम् ।

तः, त्रि, ( धु+क्तः । ) त्यक्तः । विधूतः । इति मेदिनी । ते, २८ ॥ ( यथा, रघुः । ११ । १६ ।
"तीव्रवेगधुतमार्गवृक्षया
प्रेतचीवरवसा स्वनोग्रया ।
अभ्यभावि भरताग्रजस्तया
वात्ययेव पितृकाननोत्थया ॥")

धुनिः, स्त्री, ( धुनोति वेतसादिनदीतीरतटस्था-निति । धु कम्पने + बहुलवचनात् निः स च कित् । ) नदी । इत्यमरटीकायां भरतः ॥ ( यथा, ऋग्वेदे । २ । ३० । २ ।
"पयोदरन्तीरपुजोयमस्मै
दिवे दिवे धुनयो यन्त्यर्थम् ॥"
पुं, जलप्रतिरोधकोऽसुरविशेषः । यथा, तत्रैव । १ । १७४ । ९ ।
"त्वं धुनिरिन्द्रधुनिमतीर्ऋणोरपः सीरान-स्रवन्तीः ॥"
"हे इन्द्र त्वं धुनिः कम्पयिता शत्रूणामसि अतो धुनिमतीः कम्पनोपेततरङ्गवतीः अथवा धुनि-र्नामजलप्रतिरोधकार्य्यसुरः स एव प्रतिवन्धक-तया यासां ताहशीरपः ॥" इति तद्भाष्ये सायनः । धूनयति कम्पयति शत्रूनिति । मरु-द्विशेषः । यथा, वाजसनेयसंहितायाम् ।३९।७।
"उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च ॥"
कम्पयितरि, त्रि । यथा, ऋग्वेदे । १ । ७९ । १ ।
"हिरण्यकेशो रजसोविसारेऽहिर्धुनिर्वात इव ध्रजीमान् ॥")

धुनी, स्त्री, ( धुनि+कृदिकारादिति वा ङीष् । ) नदी । इत्यमरः । १ । १० । ३० ॥ ( यथा, भागवते । ४ । २९ । ५५ ।
"सत्वं विचक्ष्व मृगचेष्टितमात्मनोऽन्त-श्चित्तं नियच्छ हृदि कर्णधुनीष चित्ते ॥")

धुनीनाथः, पुं, (धुनीनां नदीनां नाथः ।) समुद्रः । इति राजनिर्घण्टः ॥

धुन्धुमारः, पुं, ( धुन्धुं तन्नामकं राक्षसं मारय-तीति । मारि+अण् । ) कुवलयाश्वराजः । स तु बृहदश्वपुत्त्रः । इति पद्मपुराणम् ॥ ( अस्य धन्धुमारणकथा यथा, हरिवंशे ।१२।३९—५५।
"स एवमुक्तो राजर्षिरुतङ्केन महात्मना ।
कुवलाश्वं सुतं प्रादात् तस्मै धुन्धुनिवारणे ॥
बृहदश्व उवाच ।
भगवन् ! न्यस्तशस्त्रोऽहमयन्तु तनयो मम ।
भविष्यति द्विजश्रेष्ठ ! धुन्धुमारो न संशयः ॥
स तं व्यादिश्य तनयं राजर्षिर्धुन्धुमारणे ।
जगाम पर्व्वतायैव तपसे संशितव्रतः ॥
कुवलाश्वस्तु पुत्त्राणां शतेन सह पार्थिव ! ।
प्रायादुतङ्कसहितो धुन्धोस्तस्य परिग्रहे ॥
तमाविशत्तदा विष्णुर्भगवांस्तेजसा विभुः ।
उतङ्कस्य नियोगाद्वै लोकानां हितकाम्यया ॥
तस्मिन् प्रयाते दुर्द्धर्षे दिवि शब्दो महानभूत् ।
एष श्रीमान्नृपसुतो धुन्धुमारो भविष्यति ॥
दिव्यैर्माल्यैश्च तं देवाः समन्तात् समवाकिरन् ।
देवदुन्दुभयश्चापि प्रणेदुर्भरतर्षभ ! ॥
स गत्वा जयतां श्रेष्ठस्तनयैः सह वीर्य्यवान् ।
समुद्रं खानयामास वालुकार्णवमव्ययम् ॥
नारायणेन कौरव्य ! तेजसाप्यायितः स वै ।
बभूव सुमहातेजा भूयो वलसमन्वितः ॥
तस्य पुत्त्रैः खनद्भिस्तु वालुकान्तर्हितस्तदा ।
धुन्धुरासादितो राजन् ! दिशमाश्रित्य पश्चिमाम् ॥
मुखजेनाग्निना क्रोधाल्लोकानुद्वर्त्तयन्निव ।
वारि सुस्राव वेगेन महोदधिरिवोदये ॥
सोमस्य भरतश्रेष्ठ ! धारोर्म्मिकलिलं महत् ।
तस्य पुत्त्रशतं दग्धं त्रिभिरूनन्तु रक्षसा ॥
ततः स राजा कौरव्य ! राक्षसं तं महावलम् ।
आससाद महातेजा धुन्धुं धुन्धुनिवर्हणः ॥
तस्य वारिमयं वेगमापीय स नराधिपः ।
योगी योगेन वह्निञ्च शमयामास वारिणा ॥
निहत्य तं महाकायं वलेनोदकराक्षसम् ।
उतङ्कं दर्शयामास कृतकर्म्मा महायशाः ॥
उतङ्कस्तु वरं प्रादात् तस्मै राज्ञे महात्मने ।
अददाच्चाक्षयं वित्तं शत्रुभिश्चापराजयम् ॥
धर्म्मे रतिञ्च सततं स्वर्गे वासं तथाक्षयम् ।
पुत्त्राणाञ्चाक्षयाल्लोँकान् स्वर्गे ये राक्षसा हताः ॥"*॥)
शक्रगोपः । गृहधूमः । पदातिकः । इति मेदिनी । रे, २७० ॥

धुरन्धरः, पुं, धवहक्षः । इति रत्नमाला ॥ (पर्य्यायोऽस्य यथा,—
"धवो धटो नन्दितरुः स्थिरो गौरो धुरन्धरः ॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥
धुरं धरतीति । धृ+खच्+मुम् । ) रथ-लाङ्गलादिभारवोढ़ा । तत्पर्य्यायः । धुर्व्वहः २ धुर्य्यः ३ धौरेयः ४ धुरीणः ५ । इत्यमरः ।२। ९ । ६५ ॥ यथा,—
"धुरन्धरो धुरीणश्च धौरेयधुर्य्यधुर्व्वहाः ।
यत्र काप्यरथस्यापि लाङ्गलस्यापि वा धुरम् ॥
वहत्येकधुरीणः स्यात्तथा चैकधुरोऽपि च ।
स तु सर्व्वधुरीणः स्यात् सर्व्वा वहति यो धुरः ॥"
इति शब्दरत्नावली ॥
(आदित्यनृपस्य मन्त्री । स तु कौशलेन राजानं हत्वा स्वयमेव राज्यमकरोत् ॥ यथा, राजा-वल्याम् २ परिच्छेदे ।
"आदित्यस्य तदा मन्त्री अदूरान्वयसम्भवः ।
धुरन्धराभिधो धीरो वलबुद्धिनिकेतनः ॥
सेनापतीन् वशीचक्रे धनमानप्रदानतः ।
एकदा स तमादित्यमादित्यसमवर्च्चसम् ॥
एकान्ते नृपमासीनं हत्वा हतमतिस्तदा ।
तदासनं समारुह्य राज्यं प्राशाद्धुरन्धरः ॥
भूमिवेदमितान्वर्षान्भुक्त्वा भोगाननुत्तमान् ।
सेनोद्धतं सुतं राज्ये स्थापयित्वा स्वयं गतः ॥"
राक्षसविशेषः । स तु प्रहस्तस्य सचिवविशेषः । यथा, गौः रामायणे । ६ । ३२ । १५ ।
"एतस्मिन्नन्तरे शूराः प्रहस्तस्य वशानुगाः ।
धुरन्धरः कुम्भहनुर्महानादः समुन्नदः ।
एते प्रहस्तसचिवाः सर्व्वे जग्मुर्वनौकसः ॥")
धुर्व्वाहकमात्रे, त्रि ॥ ( यथा, महाभारते । ३ । १८६ । १० ।
"अनड्वाहं सुव्रतं यो ददाति
हलस्य वोढ़ारमनन्तवीर्य्यम् ।
धुरन्धरं वलवन्तं युवानं
प्राप्नोति लोकान् दशधेनुदस्य ॥"
श्रेष्ठः । यथा, तत्रैव । १३ । १२७ । ३१ ।
"दत्त्वा तु सततं तैस्तु कौरवाणां धुरन्धर ! ।
दानयज्ञक्रियायुक्ता बुद्धिर्धर्म्मोपचायिनी ॥")

धुरा, स्त्री, ( धुर्+पक्षे टाप् । ) धूः । भारः । इत्यमरटीकायां भरतः ॥

धुरीणः, त्रि, (धुरं वहतीति । "खः सर्व्वधुरात् ।" ४ । ४ । ७८ । इत्यत्र योगविभागवत् खः । ) भारवाहः । इत्यमरः । २ । ९ । ६५ ॥ (श्रेष्ठः । यथा, पञ्चतन्त्रे । ३ । २०७ ।
"हे ब्रह्मव्रतधराणां धुरीण ! त्वयापि मत्कृत कृतमित्याद्युक्त्वा स्कन्धादुत्तार्य्य यत्र यत्र स्वजन-गृहद्वारादिषु बभ्राम ॥")

धुरीयः, पुं, ( धुरमर्हतीति । छः । ) अनड्वान् । इति राजनिर्घण्टः ॥ भारयोग्ये, त्रि ॥

धुर्य्यः, त्रि, ( धुरं वहतीति । धुर्+"धुरो यड्-ढकौ ।" ४ । ४ । ७७ । इति यत् । "न भकु-र्छुराम् ।" ८ । २ । ७९ । इति न दीर्घः । ) धुरन्धरः । इत्यमरः । २ । ९ । ६५ ॥ ( यथा, रघुः । ५ । ६६ ।
"तामेकतस्तव विभर्त्ति गुरुर्विनिद्र-स्तस्या भवानपरधुर्य्यपदावलम्बी ॥"
श्रेष्ठः । यथा, भागवते । ४ । २२ । ४९ ।
"वरेण्यस्तु धुर्य्यो महतां संस्थित्याध्यात्मशिक्षया ॥"
ऋषभौषधौ अनडुहि च पुं । इति राजनिर्घण्टः ॥ ( अश्वादिरपि । यथा, महाभारते । ३ । १९७ । १२ । "पुनरपि चान्योऽप्यश्वार्थी ब्राह्मण आगच्छत् । त्वरितोऽथ तस्मै अपनह्य वामं धुर्य्यमददत् अथ प्रायात् ॥" )

धुर्व्व, ई हिंसे । इति कविकल्पद्रुमः ॥ ( भ्वां-परं-सकं-सेट् । ) ईस्वी । धूः धुरौ धुरः । ई, धूर्णः । कितवे वाथ धूर्त्तः । इति मनीषादित्वान्निपात्यः । इति दुर्गादासः ॥

धुवका, स्त्री, ( धवति पुनः पुनरुच्चारणेन गीतं कम्पयतीवेति । धू कम्पने + "क्वुन् शिल्पिसंज्ञयो-रपूर्व्वस्यापि ।" उणां २ । ३२ । इति क्वुन् । ततष्टाप् । ) ध्रुवका । इत्युणादिकोषः ॥ धया इति भाषा ॥

धुवनः, पुं, ( धवतीति । धू+ "भूसूधूभ्रस्जिभ्य-श्छन्दसि ।" उणां २ । ८० । इति क्युन् । ) अग्निः । इति सिद्धान्तकौमुदी ॥ ( यथा, शत-पथब्राह्मणे । १३ । २ । ८ । ५ ।
"ये यज्ञे धुवनं तन्वते ॥" )

धुवित्रं, क्ली, ( धूयतेऽनेनेति । धू+इत्र । ) यज्ञा-ग्निज्वालनार्थमृगचर्म्मरचितव्यजनम् । इत्य-मरः । २ । ७ । २३ ॥

धुस्तुरः, पुं, धुस्तूरः । इत्यमरटीकायां भरतः ॥

धुस्तूरः, पुं, ( धुनोति कम्पयति चित्तं सेवनेन । धु कम्पने+"खर्जिपिञ्जादिभ्य उरोलचौ ।" उणां ४।९० । इति ऊरः । "धुनोतेः सुट् च ।" इत्युज्ज्वलदत्तोक्त्या सुट् । ) क्षुपविशेषः । धुतुरा । इति भाषा । तत्पर्य्यायः । उन्मत्तः २ कितवः ३ धूर्त्तः ४ कनकाह्वयः ५ मातुलः ६ मदनः ७ । इत्यमरः । २ । ४ । ७७ । धत्तूरः ८ । इति हेमचन्द्रः । शठः ९ मातुलकः १० श्यामः ११ शिवशेखरः १२ खर्ज्जूघ्नः १३ काहलापुष्पः १४ खलः १५ कण्टफलः १६ मोहनः १७ कलभः १८ मत्तः १९ शैवः २० । इति राजनिर्घण्टः । देविका २१ तूरी २२ महामोही २३ शिवप्रियः २४ धुस्तुरः २५ धुत्तुरः २६ । इति शब्दरत्नावली । अस्य गुणाः । मदवर्णाग्निवातकारित्वम् । ज्वरकुष्ठकफलिक्षाव्रणश्लेष्मकण्डूकृमिविषनाशित्वम् । कषायत्वम् । मधुरत्वम् । तिक्तत्वम् । उष्णत्वम् । गुरुत्वञ्च । इति भावप्रकाशः ॥ कटुत्वम् । कान्तिकारित्वम् । त्वग्दोषखर्ज्जूभ्रमनाशित्वञ्च । इति राजनिर्घण्टः ॥ मूर्च्छाकारित्वम् । वह्निपित्तनाशित्वञ्च । इति राजवल्लभः ॥ ( उपविषविशेषोऽयम् । तद्यथा —

'अर्कक्षीरं स्नुहीक्षीरं तथैव कालहारिका ।
करवीरकधुस्तूरौ पञ्च चोपविषाणि तत् ॥
अर्कक्षीरं स्नुहीक्षीरं लाङ्गलीकरवीरकम् ।
गुञ्जाहिफेनधुस्तूरौ सप्तोपविषजातयः ॥"

इति वैद्यकभैषज्यधन्वन्तरिग्रन्थे विषाधिकारे ॥ )

धू, भ कम्पे । इति कविकल्पद्रुमः ॥ ( भ्वां उभं सकं-सेट् । ) स चेहापि कम्पप्रेरणमेव । भ, धवति धवते । धवति चन्दनमञ्जरीमिति हलायुधः । इति दुर्गादासः ॥

धू, न ञ शि कम्पे । इति कविकल्पद्रुमः ॥ ( स्वां क्र्यां च उभं सकं वेट् । ) स चेहापि कम्पप्रेरणम् । न ञ, धूनोति धूनुते । शि ञ, धुनाति धुनीते । धून धूनि । धूनोति चम्पककवनानीति हलायुधः । धुनाति वायुरम्बरम् । धुनीते बन्धूकतिलकुसुमगन्धा हि पवनः । इति दुर्गादासः ॥

धू, शि क कम्पे । इति कविकल्पद्रुमः ॥ ( तुदां चुरां च सकं सेट् । ) कम्प इह णान्तस्य रूपम् । शि, धुवति मारुतो मालतीलताम् । अधुवीत् । क, धावयति । वायुर्विधूनयति केशरपुष्परेणूनिति मुरारी हलायुधः । शीधूनोतेर्वा इत्यत्र धूनयच्छब्दस्य कथं गतिरिति चेत् । आर्षत्वादिह तस्य नेणंकारेण समन्वयस्य वाच्यत्वात् । अन्यथा कम्पप्रेरणेऽपि धूनयति इत्यादिप्रयोगा न स्युः । धूनोतीत्यादीनां साध्यत्वमिति चेत् स्वभावात् कम्पप्रेरणार्थानां तेषां णौ सति कम्पप्रेरणस्य प्रेरणमेवार्थः स्यात् । किञ्च कम्पनार्थे धूनकोत्यादीनामावश्यकत्वात् तनुधूने नकारः प्राचीनमतादुपादायैव । इति दुर्गादासः ॥

धूः [ र् ] स्त्री ( धुर्व्वतीति । धुर्व्व+क्विप् । ) यानमुखम् । रथादरग्रभागः । इत्यमरः । २ । ८ । ५५ । ( यथा महाभारते । १ । १३६ । २१ । "वृषगात्रौ दृशं ध्ययाह्वय ध्वयाह्वय रथधूर्गतः । ) भारः । ( यथा, रघुः । १ । ३४ ।

'तेन धूर्जगतो गुर्व्वी सचिवेषु निचिक्षिपे ॥')

चिन्ता । इत्येकाक्षरकोषः । (अग्रम् । यथा रघुः । २ । २ ।

"व्यपासुतानां धुरि कीर्त्तनीया ॥'

स्त्रियाम् लिं । यथा, ऋग्वेदे । १० । ९४ । ७ ।

"दशाधुरो दशयुक्ता वहद्भ्यः ॥'

"दशभिधुरो धभिर्चर्चिसिद्भिः । तृतीयार्थे प्रथमा । इति तद्भाष्ये सायनः ॥ )

धूकः पुं, ( धूनोति कम्पयतीति । धू+'उलूकादयश्च धतोभ्यां दीर्घश्च ।' उणां ३ । ४७ । इति कन् । ) वायुः । इत्युणादिकोषः ॥ धूर्त्तः । कालः । इति संक्षिप्तसारोणादिवृत्तिः ॥

धूतः, त्रि, ( धू+क्त । ) कम्पितः । ( यथा, मेघदूते । ३५ ।

'धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्याः
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥')

भर्त्सितः । इति मेदिनी । त, २८ ॥ त्यक्तः । इत्यमरः । ३ । १ । १०७ ॥ तर्कितः । इति धरणिः ॥

धूनः त्रि, ( धू+'स्वादिभ्यः ।' ८ । २ । ४४ । इति निष्ठातस्य नः । ) कम्पितः । धूधातो क्तस्य स्वादित्वात् तस्य नादेशः । इति संक्षिप्तसारव्याकरणम् ॥

धूनकः पुं, ( धूनयति सधुपयति अग्निमिति । धू+णिच्+ण्वुल् । ) वह्निवल्लभः । इति त्रिकाण्डशेषः ॥ धूना इति भाषा ॥

धूननं क्ली, ( धू+णिच्+ल्युट् । ) कम्पनम् । काँपान । इति भाषा । इति ण्यन्तधूधातोरनटा साध्यम् ॥ ( यथा राजतरङ्गिण्याम् । ६ । १२ ।

"कुर्व्वाणा भक्तिशीलश्रीनिषेधं मूर्द्धधूनने ॥" )

धूनिः, स्त्री, कम्पनम् । धूधातोः क्तिस्थाने क्त्यादित्वात् निः । इति कविकल्पद्रुमटीकायां दुर्गादासः ॥

धूप, तापे । इति कविकल्पद्रुमः ॥ ( भ्वां परं सकं सेट् । ) पञ्चस्वरी । धूपायति धूपायते । आयन्तत्वादुभयपदमिति वोपदेवः । अन्ये तु आयस्याभावपक्षे परस्मैपदमेव । अधूपीत् दुधूप इत्यादि । तापः सन्तापीकरणम् । इति दुर्गादासः ॥

धूप, क दीप्तौ । इति कविकल्पद्रुमः ॥ ( चुरां परं सकं-सेट् । ) क, धूपयति । इति दुर्गादासः ॥

धूपः, पुं ( धूपयति सुगन्धेन प्रीणयित्वा दीप्यतीति । धूप+अच् । ) गन्धद्रव्यविशेषोत्थधूमस्तद्दानञ्च । तत्पर्य्यायः । गन्धमिश्राचिका २ । इति हेमचन्द्रः । ३ । ३१३ ॥ यथा —

"इदं वां कथितो दीपो धूपञ्च शृणुत सुतौ ।
नानाविधद्रव्यसुगन्धः सुगन्धोऽतिमनोहरः ।
दह्यमानस्य काष्ठस्य ज्वलतश्चेतरस्य वा ।
परागस्याथवा धूमो निर्यासो यस्य जायते
स धूप इति विज्ञेयो देवानां तुष्टिदायकः ।
शल्लीहृतैर्नैकत्र तैर्द्रव्यैः परिधूपयेत् ॥
ओषधिवत्तथा कृत्वा न तत्फलमवाप्नुयात्
श्रीचन्दनञ्च सरलः सालः कालागुरुस्तथा ।
उशीरं सुरसः कन्दी रक्तविद्रुम एव च ।
पीतसालः परिमलो विमर्द्दोकार्षकस्तथा ॥
नमेरुर्देवदारुश्च विल्वसारोऽथ खादिरः ।
सन्तानः पारिजातश्च हरिचन्दनवल्लभौ ॥
इत्येषु धूपाः सर्व्वेषां प्रीतिदाः परिकीर्त्तिताः
अरालः सह चन्द्रेण श्रीवासः पञ्चवासकः ॥
कर्पूरः श्रीकरश्चैव परागः श्रीहरामलौ ।
सर्व्वौषधिरजोजातो वाराहश्चर्च उत्पलः ॥
जातीकोषस्य चूर्णञ्च गन्धः कस्तूरिका तथा
पादहस्ते च मर्द्दिता धूपा एते उदाहृताः
यन्त्रधूपो हृकधूपः श्रीपिष्टोऽगुरुभार्गरः ।
पवित्राह्व पिष्टधूपः सुगोलः कपठ एव च ॥
अन्योन्ययोगनिर्यासा धूपा एते प्रकीर्त्तिताः
एतैर्विधूपयेद्देवान् धूमिभिः कृष्णवर्त्मना ॥
यथा धूपोद्भवैर्भावैस्तुष्टिं गच्छन्ति अन्तरे ;
निर्यासश्च परागश्च काष्ठं गन्धं तथैव च ॥
कृत्रिमश्चेति पञ्चैते धूपाः प्रीतिकरा मताः ।
न यक्षधूमं विं रेत् माधवाय कदाचन ॥
न रक्तविद्रुमं मत्यं सुरसं कुन्दिनं तथा ।
यक्षधूपं पवित्राह्वं पिष्टधूपं सुगोलकं ॥
कृष्णागुरुं सकर्पूरो महामायाप्रियः स्मृतः ।
यक्षधूपेन वा देवीं महामायां प्रपूजयेत् ॥
यक्षधूपेनेत्यत्र हृकधूपेनेति च पाठः ॥
मेदोमज्जासमायुक्तान् न धूपान् विनिवेदयेत्
परकीयांस्तथा ब्रातः नू [illegible]
पुष्पं धूपञ्च गन्धञ्च उपचारांस्तथापरान् ।
प्रातर्निवेद्य देवेभ्यो नरो नरकमाप्नुयात् ॥
न भूमौ वितरेत् धूपं नासने न घटे तथा ।
यथा तथाधारगतं कृत्वा सन्निवेदयेत् ॥
रक्तविद्रुमशालौ च सुरसः सरलस्तथा ।
सन्तानको नमेरुश्च कालागुरुसमन्वितः ॥
जातीकोषादिसंयुक्तो धूपः कामेश्वरीप्रियः ।
त्रिपुरायास्तथैवाय मातृणामपि नित्यशः ॥
सर्व्वेषां पीठदेवानां कामादीनाञ्च पृथक् ।।
एष वां कथितो धूपः शृणु तं नैवरञ्जनम् ॥"

इति कालिकापुराणे ६८ अध्यायः ॥

अपि च ।

"पुष्पाणि च सुगन्धीनि धूपञ्च फलसंयुतम् ।
गुग्गुलुं कुन्दुरुं चैव देवदारु तुरुष्ककम् ॥
सिह्लकं चन्दनं काष्ठं श्रीवासं चागुरुं तथा ।
सर्ज्जरसं मधु चैव देवे पैत्रे च कर्म्मणि ॥"

इति वह्निपुराणे भोजनविधाननामाध्यायः ॥

रोगनाशकधूपो यथा,—

"कूर्म्ममत्स्यास्थिमहिषगोमयगोलाश्ववानराः ।
विडालबर्हिकाकाश्च वराहोलूककुक्कुटाः ।
हंस एषाञ्च विष्ठाश्च मांसं वा रोम शोणितम्
धूपं दद्याज्ज्वरार्त्तस्य उन्मत्तेभ्यश्च शान्तये ॥

एतान्यौषधजातानि धूपितानि महेश्वर ! ।
निघ्नन्ति रोगजातानि वृत्तमिन्द्राशनिर्यथा ॥"
इति गारुड़े १६६ अध्यायः ॥
( यथा,—
"पुरध्यामवचासर्ज्जनिम्बार्कागुरुदारुभिः ।
सर्व्वज्वरहरो धूपः कार्य्योऽयमपराजितः ॥"
इति वैद्यकचक्रपाणिसंग्रहे ज्वराधिकारे ॥ )
षड़ङ्गधूपो यथा,—
"गुग्गुल्वगुरुउशीरशर्करामधुचन्दनैः ।
धूपयेदाज्यसंमिश्रैर्नैवेद्यैर्देवता देशिकः ॥"
अन्यच्च ।
"सिताज्यमधुसंमिश्रं गुग्गुल्वगुरुचन्दनम् ।
षड़ङ्गधूपमेतत्तु सर्व्वदेवप्रियं सदा ॥"
दशाङ्गो यथा,—
"रोगरोगहरोरोगदकेशाः
सुरतरुजतुलघुपञ्चविशेषाः ।
नक्रविवर्ज्जितवारिजमुद्रा
धूपवर्त्तिरिह सुन्दरि ! भद्रा ॥"
अन्यच्च ।
"मधु मुस्तं घृतं गन्धो गुग्गुलागुरुशैलजम् ।
सरलं विज्ञसिद्धार्थं दशाङ्गो धूप उच्यते ॥"
षोड़शाङ्गो यथा,—
"गुग्गुलु सरलं दारु पत्रं मलयसम्भवम् ।
ह्रीवेरमगुरु कुष्ठं गुड़ं सर्ज्जरसं घनम् ॥
हरीतकीं नखीं लाक्षां जटामांसीञ्च शैलजम् ।
षोड़शाङ्गं विदुर्धूपं देवे पित्रे च कर्म्मणि ॥"
इति तन्त्रसारः ॥ * ॥
केशवार्च्चायां षोड़शाङ्गधूपो यथा,—
"मुस्तकं गुग्गुलुः कुष्ठं कर्पूरं मलयोद्भवम् ।
देवदारु जटामांसी जातीकोषञ्च वालकम् ॥
मुरा मांसी त्वगुरुकं त्वगुशीरञ्च केशरम् ।
एला तथा तेजपत्रं सर्व्वमेतद्घृताक्तकम् ॥
धूपोऽयं षोड़शाङ्गः स्याद्गोविन्दप्रीतिकारकः ॥"
द्वादशाङ्गो यथा,—
"गुग्गुलुश्चन्दनं पत्रं कुष्ठञ्चागुरु कुङ्कुमम् ।
जातीकोषञ्च कर्पूरं जटामांसी च वालकम् ।
त्वगुशीरञ्च धूपोऽसौ द्वादशाङ्गः प्रकीर्त्तितः ॥"
दशाङ्गो यथा,—
"कर्पूरं कुष्ठमगुरु गुग्गुलुर्मलयोद्भवम् ।
केशरं वालकं पत्रं त्वग्जातीकोषमुत्तमम् ॥
सर्व्वमेतद्घृतयुतं दशाङ्गो धूप ईरितः ॥"
अष्टाङ्गो यथा,—
"गुग्गुल्वगुरुकं तेजपत्रं मलयसम्भवम् ।
कर्पूरं वालकं कुष्ठं नूतनं कुङ्कुमं तथा ॥
अष्टाङ्गः कथितो धूपो गोविन्दप्रीतिदः शुभः ॥"
पञ्चाङ्गो यथा,—
"चन्दनं कुङ्कुमं नूत्नं कर्पूरं गुग्गुलोऽगुरु ।
धूपोऽयं घृतसंयुक्तः पञ्चाङ्गः समुदाहृतः ॥"
मुकुन्दधूपे वर्ज्जनीयद्रव्यम् । यथा,—
"एवञ्च शालनिर्य्यासं पद्मकं सरलञ्च तु ।
वचा मधुरिका तैलं गन्धकाष्ठं कलम्बकम् ॥
गन्धकं टङ्कणं तालं हिङ्गुलञ्च मनःशिला ।
ककोलस्पृक्कं दार्व्वीं गन्धमार्जीं रसाञ्जनम् ॥
त्र्यूषणं शटी मेथी शिलाजिन्नन्नचन्दनम् ।
कुन्दुरु रेणुकं राजानमोदा शतपुष्पिका ॥
हरिद्रा जीरकं वृक्षचौरञ्च रक्तचन्दनम् ।
कर्पूरकं मरुवकं यवानी ग्रन्थिकन्तथा ॥
शैलजं धातकीपुष्पं नखी मोचरसादिकम् ।
मुकुन्दधूपे देवर्षे ! सर्व्वमेतद्विवर्ज्जयेत् ॥"
इति पाद्मोत्तरखण्डम् ॥

धूपदानविधिर्यथा,—
"मध्यमानामिकाभ्यान्तु मध्यपर्व्वणि देशिकः ।
अङ्गुष्ठाग्रेण देवेशि ! धृत्वा धूपं निवेदयेत् ॥
धूपस्थानं समभ्यर्च्य तर्ज्जन्या वामयास्पृशन् ।
धूपभाजनमन्त्रेण प्रोक्षयाभ्यर्च्य ह्रदात्मना
उत्तोल्य दक्षिणेनान्तं घण्टां वामदिशि स्थिताम् ॥
वादयन् वामहस्तेन दक्षहस्तेन धारयेत् ॥"
इति तन्त्रसारः ॥
गन्धमाल्यमदत्त्वा धूपदाने दोषो यथा,—
"अदत्त्वा गन्धमाल्यानि यो मे धूपं प्रयच्छति ।
कूणपो जायते भूमे यातुधानो न संशयः ॥
वर्षाणि चैकविंशानि अयस्कारनिवासकः ।
तिष्ठतेऽत्र महाभागे ! एवमेतन्न संशयः ॥"
इति वराहपुराणम् ॥ * ॥
विषघ्नधूपो यथा,—
"सक्तुः सर्ज्जरसोपेतः सर्षपा एलवालुकैः ।
सुवर्णा तस्करतरोः कुसुमैरर्ज्जुनस्य तु ॥
धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम् ।
न तत्र कीटा न विषं न दर्दुरसरीसृपाः ॥
न कृत्या कर्म्मणस्तत्र धूपोऽयं यत्र दह्यते ॥" * ॥
सर्पनिर्म्मोचनधूपो यथा,—
"कार्पासास्थिभुजङ्गस्य यथा निर्म्मोचनं भवेत् ।
सर्पनिर्म्मोचनो धूपः प्रशस्तः सततं गृहे ॥"
इति मत्स्यपुराणे २६२ अध्यायः ॥
धूपनः, पुं, ( धूपयति संधुक्षयति वह्निमिति । धूप+ल्युः । ) शालवृक्षनिर्य्यासः । धूना इति भाषा । तत्पर्य्यायः । शालवेष्टः २ सर्ज्जरसः ३ वह्निवल्लभः ४ । इति शब्दमाला ॥ ( यथा, मनुः । ७ । २१६ ।
"परीक्षिताः स्त्रियश्चैनं व्यजनोदकधूपनैः ।
वेषाभरणसंशुद्धाः स्पृशेयुः सुसमाहिताः ॥"
क्ली, धूप+ल्युट् । धूपादिना सन्धुक्षणम् । यथा, महाभारते । १३ । ६६ । ७ ।
"अग्निकार्य्याणि समिधः कुशाः सुमनसस्तथा ।
वलयश्चामलाजाभिर्धूपनं दीपकर्म्म च ॥")
धूपवृक्षः, पुं, ( धूपोत्पादको वृक्षः ।) सरलवृक्षः । इति त्रिकाण्डशेषः ॥ ( सरलशब्देऽस्य विवरणं ज्ञातव्यम् ॥)
धूपवृक्षकः, पुं, ( धूपवृक्ष+स्वार्थे कन् । ) सरलवृक्षः । इति शब्दरत्नावली ॥
धूपागुरु, क्ली, ( धूपाय सन्धुक्षणाय यदगुरु । ) दाहागुरु । इति राजनिर्घण्टः ॥
धूपाङ्गः, पुं, (धूपसाधनमङ्गं यस्य ।) श्रीवेष्टः । इति राजनिर्घण्टः ॥

धूपायितः, त्रि, ( धूप्यते स्मेति । धूप सन्तापे+"आयादय आर्द्धधातुके वा ।" ३ । १ । ३१ । इति आयः । ततः क्तः । ) सन्तप्तः । अध्वादिना श्रान्तः । इत्यमरभरतौ ॥ हतधूमगन्धादि । यथा, तन्त्रप्रमोदे ।
"प्रदीपपर्द्दीपिते विविधधूपधूपायिते ॥"
धूपार्हं, क्ली, ( धूपाय अर्हति पूज्यते इति । अर्ह पूजायाम्+घञ् । ) कृष्णागुरु । इति राजनिर्घण्टः ॥ धूपयोग्ये, त्रि ॥
धूपितः, त्रि, ( धूप्यते स्मेति । धूप+क्तः । ) सन्तापितः । ( यथा, हरिभक्तिविलासे ।
"ततो गन्धपवित्रञ्च गृहीत्वा धूपितं बुधः ।
भगवन्तं नमस्कृत्य भक्त्या संप्रार्थयेदिदम् ॥")
अध्वादिना श्रान्तः । इत्यमरभरतौ ॥ दत्तधूपः । यथा,—
"यवादिना दोहदधूपितो द्रुमः ।"
इति वृक्षायुर्वेदः ॥
धूमः, पुं, (धूनोति धूयते वा । धू ञ कम्पे+"इषियुधीन्धीति ।" उणां १ । १४४ । इति मक् । ) आर्द्रेन्धनप्रभवः । धूँया इति भाषा । तत्पर्य्यायः । अभ्रः २ मरुद्ध्वजः ३ खतमालः ४ शिखिध्वजः ५ अग्निवाहः ६ तरी ७ । इति त्रिकाण्डशेषः ॥ ( यथा, रघुः । ७ । २६ ।
"हविःशमीपल्लवलाजगन्धी
पुण्यः कृशानोरुदियाय धूमः ॥")
अस्य गुणः । वातपित्तवृद्धिकारित्वम् । इति राजवल्लभः ॥ स च मेघाञ्जनयोर्जनकः ॥ (यथा, मेघदूते । ५ ।
"धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः ॥"
भौमादिवहुत्तरपदलोपे धूमकेतुः । यथा, गर्गः ।
"उल्कापाते च त्रिदिनं धूमे पञ्चदिनानि च ॥"
उद्गारजवायुविशेषः । चोँया ढेँकुर इति भाषा ॥ यथा, आह्निकतत्त्वधृतवचनम् ।
"धूमोद्गारे तथा वान्ते क्षुरकर्म्मणि मैथुने ॥"
चिकित्साविशेषः । यथा,—
"श्वेता ज्योतिष्मती चैव हरितालं मनःशिला ।
गन्धाश्चागुरुपत्राद्या धूमो मूर्द्धविरेचनम् ॥
गौरवं शिरसः शूलं पीनसार्द्धावभेदकौ ।
कर्णाक्षिशूलं कासश्च हिक्काश्वासौ गलग्रहः ॥
दन्तदौर्ब्बल्यमास्रावः स्रोतोघ्राणाक्षिदोषजः ।
पूतिघ्राणास्यगन्धश्च दन्तशूलमरोचकः ॥
हनुमन्याग्रहः कण्डूः क्रिमयः पाण्डुता मुखे ।
श्लेष्मप्रसेको वैस्वर्य्यं गलशुण्ड्युपजिह्विका ॥
खालित्यं पिञ्जरत्वञ्च केशानां पतनन्तथा ।
क्षवथुश्चातितन्द्रा च बुद्धेर्मोहोऽतिनिद्रता ॥
धूमपानात् प्रशाम्यन्ति बलं भवति चाधिकम् ।
शिरोरुहकपालानामिन्द्रियाणां स्वरस्य च ॥"
"स्नात्वा भुक्त्वा समुल्लिख्य क्षुत्वा दन्तान् विघृष्य च ।
नावनाञ्जननिद्रान्ते चात्मवान् धूमपो भवेत् ॥
तथा वातकफात्मानो न भवन्त्यूर्द्ध्वजत्रुजाः ।
रोगास्तस्य तु पेयाः स्युरापानास्त्रिस्त्रयस्त्रयः ॥

धूमाभः, पुं, ( धूमस्य आभा इव आभा यस्य । ) धूम्रवर्णः । इति शब्दमाला ॥ तद्वति, त्रि ॥

धूमावती, स्त्री, दशमहाविद्यान्तर्गतविद्याविशेषः । अस्या ध्यानं यथा,—

"विवर्णा चञ्चला दुष्टा दीर्घा च मलिनाम्बरा ।
विमुक्तकुन्तला रूक्षा विधवा विरलद्विजा ।
काकध्वजरथारूढ़ा विलम्बितपयोधरा ॥
सूर्पहस्तातिरुक्षाक्षा धृतहस्तवरान्विता ।
प्रवृद्धघोणा तु भृशं कुटिला कुटिलेक्षणा ॥
क्षुत्पिपासार्द्दिता नित्यं भयदा कलहास्पदा ।
जपेत् कृष्णचतुर्द्दश्यां पुरश्चरणसिद्धये ॥"

इति तन्त्रसारः ॥

( अस्या मन्त्रो यथा, मन्त्रकोषे ।
"दान्तावर्षीशविन्दन्तौ ततो धूमावतीहितः ।
धूमावती मनुः प्रोक्तो वैरिनिग्रहकारकः ॥"
धूँ धूँ धूमावती स्वाहा ॥ )

धूमिका, स्त्री, ( धूम इव जलीयपदार्थोऽस्त्यस्या इति । धूम + ठन् । स्त्रियां टाप् । ) कुज्झटिका । इति त्रिकाण्डशेषः ॥ ( पक्षिविशेषः । फिङ्गा इति ख्याता । तद्यथा,—
"शशघ्नी भासकुररगृध्रोलूककुलिङ्गकाः ।
धूमिका मधुहा चेति प्रसहा म्गपक्षिणः ॥"
इति वाभटे सूत्रस्थाने षष्ठेऽध्याये ॥)

धूमोत्थं, क्ली, ( धूमादुत्तिष्ठति परम्परासम्बन्धेनेति । धूम + स्था + कः । धूमयोनिमेघोत्पन्नवज्रजातत्वात् परम्परासम्बन्धत्वम् ।) वज्रक्षारम् । इति राजनिर्घण्टः ॥ ( धूमोत्थिते, त्रि ॥ )

धूमोर्णा, स्त्री, यमपत्नी । इति त्रिकाण्डशेषः ॥ ( यथा, महाभारते । १३ । १६५ । ११ ।
"शक्रः शचीपतिर्द्देवो यमो धूमोर्णया सह ।
वरुणः सह गौर्य्या च सहर्द्धया च धनेश्वरः ॥")

धूमोर्णापतिः, पुं, ( धूमोर्णायाः पतिः । ) यमः । इति हारावली । ५७ ॥

धूम्या, स्त्री, (धूमानां समूहः इति । धूम + पाशादित्वात् यः ।) धूमसमूहः । इत्यमरः । ३।२।४३॥

धूम्याटः, पुं, (धूम्या इव अटतीति । अट + अच् ।) पक्षिविशेषः । फिङ्गा इति भाषा । तत्पर्य्यायः । कलिङ्गः २ भृङ्गः ३ । इत्यमरः । २ । ५ । १६ ॥

धूम्रः, पुं, ( धूमं धूमवर्णं रातीति । रा + कः । पृषोदरादित्वात् साधुः । ) श्यामरक्तमिश्रितवर्णः । तत्पर्य्यायः । धूमलः २ कृष्णलोहितः ३ । तद्वति, त्रि । इत्यमरः । १ । ५ । १६ ॥ (यथा, रघौ । १५ । १६ ।
"धूमधूम्रो वसागन्धी ज्वालावभ्रुशिरोरुहः ।
क्रव्याद्गणपरीवारश्चितामिरिव जङ्गमः ॥")
तुरुष्कः । इति राजनिर्घण्टः ॥ (असुरविशेषः । यथा हरिवंशे । २३२ । ८ ।
"सहदो रभसश्चक्री धूम्रश्चैव महासुरः ॥"
स्कन्दस्य सैनिकविशेषः । यथा, महाभारते । ९ । ४५ । ६२ ।
"इमा नामानि वाय्येषां येऽन्ये स्कन्दस्य सैनिकाः ।"
"धूम्रः श्वेतकलिङ्गश्च सिद्धार्थो वरदस्तथा ॥")

धूम्रकः, पुं, (धूम्रवर्णेन कायतीति । कै + कः । ) उष्ट्रः । इति जटाधरः ॥

धूम्रपत्रा, स्त्री, ( धूम्रं धूम्रवर्णं पत्रं यस्याः । अजादेराकृतिगणत्वात् टाप् । ) क्षुपविशेषः । तत्पर्य्यायः । धूम्राह्वा २ सुलभा ३ स्वयम्भुवा ४ गृध्रपत्रा ५ गृध्राणी ६ क्षमिणी ७ श्रीमलापहा ८ । अस्या गुणाः । रसे तिक्तत्वम् । शोफशमिकासनाशित्वम् । उष्णत्वम् । रूक्षत्वम् । अग्निदीपनकारित्वञ्च । इति राजनिर्घण्टः ॥

धूम्रमूलिका, स्त्री, (धूम्रं मूलमस्याः । कप् । टापि अत इत्वम् ।) मूलीतृणम् । इति राजनिर्घण्टः ॥

धूम्रलोचनः, पुं, ( धूम्रे लोचने यस्य ) कपोतः । इति राजनिर्घण्टः ॥ शुम्भासुरसेनापतिः । यथा, मार्कण्डेयपुराणे । ८६ । ३ ।
"हे धूम्रलोचनाशु त्वं स्वसैन्यपरिवारितः ।
तामानय बलाद्दुष्टां केशाकर्षणविह्वलाम् ॥"

धूम्रवर्णः, पुं ( धूम्रं वर्णमस्य । ) तुरुष्कः । इति राजनिर्घण्टः ॥ ( पर्व्वतविशेषः । यथा, हरिवंशे । २२८ । ७३ ।
"देवाद्रितत्पर्व्वतश्चैव तथा वै वालुको गिरिः ।
क्रौञ्चः सप्तर्षिशैलश्च धूम्रवर्णश्च पर्व्वतः ॥")
कृष्णलोहितवर्णयुक्ते, त्रि ॥ ( यथा, महाभारते । ३ । २८३ । २६ ।
"छायायां धूम्रवर्णानां तिमः कोष्ठो यवस्थिताः ॥" )

धूम्रवर्णा, स्त्री, ( धूम्रं वर्णमस्याः टाप् । ) अग्नेः सप्तजिह्वान्तर्गतजिह्वाविशेषः । इति जटाधरः ॥ ( यदुक्तं मुण्डकोपनिषदि । २ । ४ ।
"काली कराली च मनोजवा च
सुलोहिता या च सुधूम्रवर्णा ।
स्फुलिङ्गिनी विश्वरूपी च देवी
लेलायमाना इति सप्त जिह्वाः ॥")

धूम्रा, स्त्री, ( धूम्र + टाप् । ) शशाण्डुली । इति राजनिर्घण्टः ॥ ( धरनामवसोर्माता यथा, महाभारते । १ । ६६ । १८ ।
"धूम्रायास्तु धरः पुत्रो ब्रह्मविद्यो ध्रुवस्तथा ॥")

धूम्रिका, स्त्री, शिंशपावृक्षः । इति राजनिर्घण्टः ॥

धूर, ई ङ य वधे । गतौ । इति कविकल्पद्रुमः ॥ ( दिवां-आत्मं-सकं-सेट् । ) दीर्घी । ई, धूर्णः । ङ य, धूर्य्यते । इति दुर्गादासः ॥

धूर्ज्जटिः, पुं, ( धूर् भारभूता जटिर्यस्य । यद्वा, जट संघाते + इन् । धूर्गङ्गा जटिष्वस्येति । धुरश्चिन्तायां जटिः संघातो यत्र वा । ) शिवः । इत्यमरः । १ । १ । ३५ ॥ (यथा, भागवते । ४ । ५ । २ ।
"क्रुद्धः सुदष्टौष्ठपुटः स धूर्जटि-
र्जटां तडिद्वह्निसटोग्ररोचिषम् ॥")

धूर्त्तं, क्ली, ( धूर्व्वतीति । धूर्व्व + "हसिमृग्रिणि ।" उणां ३ । ८६ । इति तन् । ) विड्लवणम् । इति राजनिर्घण्टः ॥ लौहकिट्टम् । इति हेमचन्द्रः । ३ । ४० ॥

धूर्त्तः, पुं, (धूर्व्वति हन्तीति । धूर्व्व + तन् ।) धुस्तूरवृक्षः । इति मेदिनी । ते, २८ ॥ चोरकः । इति राजनिर्घण्टः ॥ ( खण्डलवणम् । इति विश्वः । ते, २२ ॥ )

धूर्त्तः, त्रि, ( धूर्व्वति छिनत्तीति । धूर्व्व + "हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् ।" उणां । ३ । ८६ । इति तन् । ) द्यूतकृत् । वञ्चकः । शठस्य पर्य्यायः । मायी २ । इति हेमचन्द्रः । ३ । १४८ ॥ विटः ३ । इति मेदिनी । ते, २८ ॥ ( यथा, महाभारते । ४ । ६ । १२ ।
"प्रिया हि धूर्त्ता मम देविनः सदा
भवांश्च देवोपम ! राज्यमर्हति ॥"
यथा च पञ्चतन्त्रे । ३ । ७३ ।
"नराणां नापितो धूर्त्तः पक्षिणां चैव वायसः ।
दंष्ट्रिणाञ्च शृगालश्च श्वेतभिक्षुस्तपस्विनाम् ॥" )

धूर्त्तकः, पुं, ( धूर्त्त + कन् स्वार्थे । ) शृगालः । इति शब्दरत्नावली ॥ धूर्त्तश्च ॥ ( नागभेदः । यथा, महाभारते । १ । ५७ । १३ ।
"वाहुकः शृङ्गवेरश्च धूर्त्तकः प्रातरातकौ ।
कौरव्यकुलजास्तेते प्रविष्टा हव्यवाहनम् ॥")

धूर्त्तकृत्, पुं, ( धूर्व्व + भावे तन् । धूर्व्वनं हिंसनं करोतीति । कृ + क्विप् । तुगागमश्च । ) धुस्तूरः । इति शब्दमाला ॥ वञ्चककारके, त्रि ॥

धूर्त्तजन्तुः, पुं, ( धूर्त्तश्चासौ जन्तुश्चेति । ) मानुषः । इति शब्दचन्द्रिका ॥

धूर्त्तमानुषा, स्त्री, ( धूर्त्तौ हिंसितौ मानुषोऽनयेति । ) रास्ना । इति शब्दचन्द्रिका ॥

धूर्द्धरः, पुं, ( धरतीति । धृ + अच् । धुरां धरः । पृषोदरादित्वात् दीर्घः । ) धुरन्धरः । इत्यमरटीकायां रमानाथः ॥

धूर्व्वहः, त्रि, ( वहतीति । वह + अच् । धुरां वहः । पृषोदरादित्वात् दीर्घः । ) धुरन्धरः । इत्यमरः । २ । ८ । ६५ ॥

धूर्व्वी, स्त्री, ( धुरं अजतीति । अज + क्विप् । ततः अजो वीभावः । ) रथाग्रभागः । तत्पर्य्यायः । यानमुखम् २ वधूः ३ । इति हेमचन्द्रः । ३ । ४२१ ॥

धूलकं, क्ली, ( धू + बाहुलकात् लकः । ) विषम् । इति शब्दचन्द्रिका ॥

धूलिः, स्त्री, ( धुवति धूयते वेति । धू + बाहुलकात् लिः । ) पार्थिवचूर्णम् । धूला इति भाषा ॥ ( यथा, भागवते । ३ । १४ । २४ ।
"श्मशानचक्रानिलधूलिधूम्र-
विकीर्णविद्योतजटाकलापः ।
भस्मावगुण्ठामलरुक्मदेहो
देवस्त्रिभिः पश्यति देवरस्ते ॥" )
तत्पर्य्यायः । रेणुः २ पांशुः ३ रजः ४ । इत्यमरः । २ । ८ । ९८ ॥ धूली ५ पांसुः ६ । इति भरतः ॥ क्षितिकणः ७ चौद्रः ८ चूर्णम् ९ तूलम् १० महीद्रवः ११ वातकेतुः १२ नभः-केतुः १३ कणा १४ क्षितिकणा १५ । इति शब्दरत्नावली ॥ * ॥

"यतृप्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ॥")
धारणम्। इति मेदिनी। ते, २८ ॥ सुखम्। इति हेमचन्द्रः। २। २२२ ॥ (क्रतुः। यथा, कात्यायनश्रौतसूत्रे। २०। २। ८।
"राजन्यो धृतिषु युद्धजप्युक्तः ॥")
योडशमात्रकान्तर्गतत्रयोदशमात्रका। इति भवदेवः ॥ अष्टादशाक्षराद्धिच्छन्दोमात्रम्। इति छन्दोमञ्जरी ॥ ॥ धृतियोगजातफलं यथा,—
"धृतियोगसमुत्पन्नः प्राज्ञः संदृष्टमानसः।
वावदूकः सभायाञ्च सुशीलो विनयान्वितः ॥"
इति कोष्ठीप्रदीपः ॥
धारणा। सा त्रिधा। यथा,—
"धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥
यया तु धर्मकामार्थान् धृत्या धारयतेऽर्ज्जुन।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥
यया स्वप्नं भयं शोकं विषादं मदमेव च।
न विमुञ्चति दुर्म्मेधा धृतिः सा तामसी मता ॥"
इति श्रीभगवद्गीतायाम्। १८।३३-३५ ॥
धृत्वरी, स्त्री, (धृत्वन् + "वनो र च।" ४। १। ७।
इति ङीप् रश्चान्तादेशः।) भूमिः। इति संक्षिप्तसारोणादिवृत्तिः ॥
धृत्वा, [न्] पुं, (धरतीति। धृ + "श्रीङ्कृशि-रुहिजिषीति।" उणां ४।११३। इति क्वनिप्।) धर्म्मः। विप्रः। समुद्रः। अन्तरीक्षम्। मेधावी। विष्णुः। इति संक्षिप्तसारोणादिवृत्तिः ॥
धृष, आ कि अमर्षे। क्रोध इति यावत्। इति कविकल्पद्रुमः ॥ (चुरां-पक्षे भ्वां-परं-सकं-सेट्।) आ, धर्षितं धृष्टं तेन। कि, धर्षयति धर्षति। अमर्षं इह अभिभवः। इति भट्टमल्लः। न धर्षति निशाः प्रजाः। तमेव धर्षयत्येकं यस्तास प्रतिकूलतीति हलायुधः। इति दुर्गादासः ॥
धृष, उ संहतौ। हिंसे। इति कविकल्पद्रुमः ॥ (भ्वां-परं-संहतौ अकं-हिंसे सकं-सेट्। उदित्वात् क्वासेट्।) उ, धर्षित्वा धृष्ट्वा। संहतिः। समूहः। इति दुर्गादासः ॥
धृष, क ङ शक्तिबन्धे। इति कविकल्पद्रुमः ॥ (चुरां-आत्मं-सकं-सेट्।) शक्तेर्बन्धनं शक्तिबन्धः। क ङ, धर्षयते वह्निं मयः। इति दुर्गादासः ॥
धृष, ञि आ न प्रागल्भ्ये। इति कविकल्पद्रुमः ॥ (स्वां-परं-अकं-सेट्।) ञि, धृष्टोऽस्ति। आ, धर्षितं धृष्टं तेन। न, धृष्णोति गुरोरग्रे यः। इति हलायुधः। इति दुर्गादासः ॥
धृष्टः, पुं, (धृष्णोतीति। धृष् + "पृभिदिव्यधीति।" उणां १। २४। इति कः।) दक्षः। इत्युणादिकोषः ॥ संघातः। प्रगल्भः। इति संक्षिप्तसारोणादिवृत्तिः ॥
धृष्टः, त्रि, (धृष + क्तः।) प्रगल्भः। इति मुग्धबोधव्याकरणम् ॥ (यथा, भागवते। ५। १२। ७।
"अदस्य गोप्तासि निकत्यमानो
न शोभसे वृद्धसभासु धृष्टः ॥")
निर्लज्जः। तत्पर्य्यायः। धृष्णक् २ वियातः ३। इत्यमरः। ३। १। २५ ॥ धृष्णुः ४ दृष्टक् ५। इति त्रिकाण्डशेषः। धर्षितः ६। इति शब्दरत्नावली ॥ चतुर्विधपत्यन्तर्गतपतिविशेषे, पुं। तस्य लक्षणं यथा, "भूयो निःशङ्कः कृतदोषोऽपि भूयो निवारितोऽपि भूयः प्रश्रयपरायणः।" इति रसमञ्जरी ॥ (चेदिवंशीयकुन्तेः पुत्रः। यथा, हरिवंशे। ३९। २४।
"कुन्तेर्धृष्टः सुतो जज्ञे रणधृष्टः प्रतापवान् ॥"
सप्तममनोः पुत्रविशेषः। यथा, भागवते। ८। १३। २।
"मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः।
सप्तमो वर्त्तमानो यस्तदपत्यानि मे शृणु ॥
इक्ष्वाकुर्नभगश्चैव धृष्टः शर्य्यातिरेव च ॥"
धृष्णुरिति क्वापि दृश्यते ॥)
धृष्टा, स्त्री, (धृष्यते क्षतीति। धृष् शक्तिबन्धे + क्तः। टाप्।) असती। इति शब्दरत्नावली ॥
धृष्णक्, [ज्] त्रि, (धृष्णोतीति। धृष प्रागल्भ्ये + "ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च।" ३। २। ५९। इत्यत्र "धृषेश्च।" इति काशिकोक्तेर्निपातनात् सिद्धम्।) निर्लज्जः। इत्यमरः। ३। १। २५ ॥
धृष्णिः, पुं, (धर्षति अभिभवति अन्धकारमिति। धृष अमर्षे + बाहुलकात् निः। स च कित्।) किरणः। इत्यमरः। १। ४। ३३ ॥
धृष्णुः, त्रि, (धृष्णोतीति। धृष + "त्रसिगृधिधृषिक्षिपेः क्नुः।" ३। २। १४०। इति क्नुः।) धृष्टः। इति त्रिकाण्डशेषः ॥ (यथा, ऋग्वेदे। ६। २५। ५।
"न हि त्वा शूरो न तुरो न धृष्णु-
र्न त्वा योधो मन्यमानो युयोध ॥")
पुं, कार्षिका। इति शब्दचन्द्रिका ॥ (वैवस्वतमनुपुत्रः। यथा, हरिवंशे। १०। १।
"मनोर्वैवस्वतस्यासन् पुत्रा वै नव तत्समाः।
इक्ष्वाकुश्चैव नाभागो धृष्णुः शर्य्यातिरेव च ॥"
सावर्णस्य मनोः पुत्रविशेषः। यथा, तत्रैव। ७। ६०।
"वरिष्णुरार्य्यो धृष्णुश्च राजः सुमतिरेव च।
सावर्णस्य मनोः पुत्रा भविष्या दश भारत ॥"
चन्द्रवंशीश्वफल्कक्रूरराजस्य सुतः। यथा, तत्रैव ३७। १८।
"क्रूरस्य सुतो धृष्णुर्धृष्णोस्तु तनयस्तथा।
कपोतरोमा तस्याथ तैत्तिरिस्तनयोऽभवत् ॥"
कवेः पुत्रविशेषः। यथा, महाभारते। १३। ८५। १३३।
"कविः काव्यश्च धृष्णुश्च बुद्धिमानुशनास्तथा।
भृगुश्च विरजाश्चैव काशी चोग्रश्च धर्म्मवित् ॥
अष्टौ कविसुता ह्येते सर्व्वमेभिर्जगत्ततम् ॥")
धे, ट पाने। इति कविकल्पद्रुमः ॥ (भ्वां-परं-सकं-अनिट्।) धयति। टः स्त्रियामीवर्थः। स्तनन्धयी। इति दुर्गादासः ॥
धेनः, पुं, (धीयते इति धयत्यस्मादिति वा। धेट पाने + "धेट इच।" उणां ३। ११। इति न इत्वान्तादेशः।) समुद्रः। इति हेमचन्द्रः ॥ नदः। इति मेदिनी ॥
धेना, स्त्री, (धेन + टाप्। "टित्त्वेऽपि स्त्रीत्वेव ङीप्। इति धरस्पोक्तेर्न ङीप्।" इति केचित्।) नदी। (दधातेर्लटः शानचि अत्ययेन रत्वाभ्यासलोपौ दधाना स्वमभिधेयं वर्णप्रदानेन लौकिकाय वा। यद्वा, धेट पाने 'धेट इच' इति नप्रत्ययः इकाराभावान्तादेशः गुणः। धयन्ति तामिति धेना। पानमत्र स्वीकारः। यद्वा, शब्दाद्वा। धीयते पीयते आस्वाद्यते वानेन धयन्ति प्राणमिति धेना।" इति देवराजयज्वा। १। ११। ३८।) भारतीभेदः। इति हेमचन्द्रः ॥ (यथा, ऋग्वेदे। ३। १। ६।
"अस्य धारा अक्षरन्नदि धेनाः।"
"धेना माध्यमिका वाक्च विस्तृजति।" इति तद्भाष्ये सायनः ॥)
धेनिका, स्त्री, (धेनो नदः। लक्षणया जलसमीपस्थानम्। स उत्पत्तिस्थानत्वेनास्त्यस्या इति। धेन + ठन्। टाप्।) धन्याकम्। इति भावप्रकाशः ॥
धेनुः, स्त्री, (धयति लेढि सुतान् धीयते वत्सैरिति वा। धेट पाने + "धेट इच।" उणां ३। ३४। इति नुः इत्वान्तादेशः।) नवप्रसूता गौः। तत्पर्य्यायः। नवसूतिका २। इत्यमरः। २। ९। ७१ ॥ नवप्रसूतिका ३। इति शब्दरत्नावली ॥ दानीयदशधेनवो यथा,—
"यास्तु पापविनाशिन्यः पठ्यन्ते दशधेनवः।
तासां स्वरूपं वक्ष्यामि नामानि च धनाधिप ॥
प्रथमा गुडधेनुः स्याद्घृतधेनुरथापि वा।
तिलधेनुस्तृतीया च चतुर्थी जलसंज्ञिका ॥
क्षीरधेनुश्च विख्याता मधुधेनुरथापि वा।
सप्तमी शर्कराधेनुर्दधिधेनुरथाष्टमी ॥
रसधेनुश्च नवमी दशमी स्यात् स्वरूपतः ॥
कुम्भाः स्युर्द्रवधेनूनामितरासान्तु राशयः।
सुवर्णधेनुमप्यत्र केचिदिच्छन्ति मानवाः ॥
नवनीतेन तैलेन तथान्ये तु महर्षयः।
एतदेव विधानं स्यात्त एवोपस्कराः स्मृताः ॥
मन्त्रावाहनसंयुक्ताः सदा पर्व्वणि पर्व्वणि।
यथाश्रद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदाः ॥
गुडधेनुप्रसङ्गेन सर्व्वास्तव मयोदिताः।
अशेषयज्ञफलदाः सर्व्वपापहराः शुभाः ॥
व्रतानामुत्तमा यस्माद्विशोकद्वादशीव्रतम्।
तदङ्गत्वेन चैवात्र गुडधेनुः प्रशस्यते ॥
अयने विषुवे पुण्ये व्यतीपातेऽथवा पुनः।
गुडधेन्वादयो देयास्तूपरागादिपर्व्वसु ॥"
इति मत्स्यपुराणे ८२ अध्यायः ॥
पूर्ब्बोक्तधेनूनां दानविधयस्तत्तच्छब्दे द्रष्टव्याः ॥ ॥
अथ कपिलाधेनुदानादिफलम्।
धौतोवाच।
"अथातः संप्रवक्ष्यामि कपिलाधेनुमुत्तमाम्।

यत्प्रसादान्नरो याति विष्णुलोकमनुत्तमम् ।
पूर्व्वोक्तेन विधानेन दद्याद्धेनुं सवत्सकाम् ।
सर्व्वालङ्कारसंयुक्तां सर्व्वरत्नसमन्विताम् ॥
कपिलायाः शिरोग्रीवे सर्व्वतीर्थानि भामिनि ।
पितामहनियोगाच्च निवसन्ति हि नित्यशः ॥
प्रातरुत्थाय यो मर्त्त्यः कपिलागलमस्तकात् ।
च्युतन्तु भक्त्या पानीयं शिरसा वन्दते शुचिः ॥
स तेन पुण्यतोयेन तत्क्षणाद्दग्धकिल्बिषः ।
त्रिंशद्वर्षकृतं पापं दहत्यग्निरिवेन्धनम् ॥
कल्यमुत्थाय यो मर्त्त्यः कुर्य्यात्तासां प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन पृथिवी स्यात् वसुन्धरे ॥
प्रदक्षिणेन चैकेन श्रद्धायुक्तेन मानवात् ।
दशजन्मकृतं पापं तस्य नश्यत्यसंशयम् ॥
कपिलायास्तु मूत्रेण स्नात्वा चैव शुचिव्रतः ।
स गङ्गादिषु तीर्थेषु स्नातो भवति मानवः ॥
तेन स्नानेन चैकेन भावयुक्तेन वै नरः
यावज्जीवकृतात् पापात् शुध्यते नात्र संशयः ॥
गोसहस्रन्तु यो दद्यादेकाञ्च कपिलां नरः
सममेतत् पुरा प्राह ब्रह्मा लोकपितामहः ॥
गवामस्थि न लङ्घेत मृते गन्धं न दूषयेत् ।
यावज्जिघ्रति स गन्धं तावत् पुण्यैस्तु पूयते ॥
गवां कण्डूयनं श्रेष्ठं तथा च परिपालनम् ।
तुल्यं गोशतदानस्य भयरोगादिपालनम् ॥
तृणोदकादि यो दद्यात् स्वधिनीनां यथाह्निकम् ।
सोऽश्वमेधफलं दिव्यं लभते मानवोत्तमः ॥
विमानैर्व्विविधैर्द्दिव्यैः कन्याभिरभिवर्द्धितैः ।
स्तूयमानस्तु गन्धर्व्वैर्दीप्यमानो यथाग्नयः ॥ * ॥
एकादशप्रकारकपिलालक्षणं यथा —
सुवर्णकपिला पूर्व्वा द्वितीया गौरपिङ्गला ।
तृतीया चैव रक्ताक्षी चतुर्थी गुडपिङ्गला ॥
पञ्चमी बहुवर्णा स्यात् षष्ठी च श्वेतपिङ्गला ।
सप्तमी श्वेतपिङ्गाक्षी अष्टमी कृष्णपिङ्गला ॥
नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला ।
एकादशी खुरश्वेता एतासां सर्व्वलक्षणा ॥
सर्व्वलक्षणसंयुक्ता सर्व्वालङ्कारसुन्दरी ।
ब्राह्मणाय च दातव्या सर्व्वमुक्तिप्रदायिनी ।
भुक्तिमुक्तिप्रदा तेषां विष्णुमार्गप्रदायिनी ॥
इति कपिलामाहात्म्यम् ॥ * ॥
अथोभयमुखीधेनुदानविधानम् ।
होता उवाच ।
अतः परं महाराजोभयमुख्याः समासतः ।
विधानं यद्वराहोक्तं धरण्याः कथितं पुरा ।
तदहं संप्रवक्ष्यामि तत् पुण्यफलञ्च यत् ॥
धरण्युवाच ।
यत्त्वया कपिला नाम पूर्व्वमुत्पादिता प्रभो ।
कामधेनुः सदा पुण्या सा ज्ञेया कतिलक्षणा ।
कियन्त्यः कपिलाः प्रोक्ताः स्वयमेव स्वयम्भुवा ॥
प्रसूयमाना दानेन किं पुण्यं स्याच्च माधव ॥
एतदिच्छाम्यहं श्रोतुं विस्तरेण जगद्गुरो ॥
श्रीवराह उवाच ।
शृणुष्व भद्रे तत्त्वेन पवित्रं पापनाशनम् ।
यं श्रुत्वा सर्व्वपापेभ्यो मुच्यते नात्र संशयः ॥

कपिला त्वग्निहोत्रार्थं यज्ञार्थञ्च वरानने ।
उद्धृत्य सर्व्वतेजांसि ब्रह्मणा निर्म्मिता पुरा ॥
पवित्राणां पवित्रञ्च मङ्गलानाञ्च मङ्गलम् ।
पुण्यानां परमं पुण्यं कपिला च वसुन्धरे ॥
तपसाञ्च तपश्चाग्र्यं व्रतानां व्रतमुत्तमम् ।
दानानामुत्तमं दानं निधानां चानन्त्यम् ॥
पृथिव्यां यानि तीर्थानि गुह्यान्यायतनानि च ।
पवित्राणि च पुण्यानि सर्व्वलोकेषु सुन्दरि ॥
होतव्यान्यग्निहोत्राणि सायं प्रातर्द्विजातिभिः ।
कपिलाया घृतेनैव दध्ना क्षीरेण वा पुनः ॥
जुह्वते ह्यग्निहोत्राणि मन्त्रैश्च विधिवत् सदा ।
पूजयन्त्यतिथींश्चैव परां भक्तिमुपागताः ॥
ते यान्त्यादित्यवर्णेन विमानेन हि भास्वता ।
सूर्य्यमण्डलमध्ये च ब्रह्मणा निर्म्मिता पुरा ॥
कपिला या पिङ्गलाक्षी सर्व्वतीर्थप्रदायिनी ।
सिद्धिबुद्धिकरी देवी कपिलासत्यरूपिणी ॥
पूर्व्वोक्ता यास्तु कपिलाः सर्व्वमङ्गलमङ्गलाः ।
एतादृश्यः समाख्याताः कपिलास्ते वरानने ॥
सर्व्वा ज्ञेया महाभागास्तारयन्ति न संशयः ।
मङ्गलेषु प्रशस्ता च सर्व्वपापप्रणाशिनी ॥
अग्निपुच्छा अग्निमुखी अग्निलोमानलप्रभा ।
तथाग्नेयी सदा देवी सुवर्णाख्या प्रभावतः ॥”* ॥
शूद्रात् कपिलाग्रहणे दोषो यथा —
गृहीत्वा कपिलां शूद्रात् कामतः सद्यो भवेत् ।
पतितः स द्विजातीनां चाण्डालसदृशो हि सः ॥
न तस्मात् प्रतिगृह्णीयात् शूद्रादिभ्यः प्रतिग्रहम् ।
दूरात् प्रतिहरेत्तस्याः श्वभिर्लुप्ता इवाध्वरे ॥
सर्व्वकाले हि सर्व्वे वै वर्ज्जिता पितृदैवते ।
असम्भाष्याप्रतिग्राह्याः शूद्रास्ते पापकर्म्मिणः ॥
पिबन्ति यावत् कपिलां तावत्तेषां पितामहाः ।
भूमेर्म्मलं समश्नन्ति शायन्तं विड्भुजश्चिरम् ॥ *
शूद्रस्य कपिलाक्षीरादिपाने दोषो यथा —
तासां क्षीरं घृतं चापि नवनीतमथापि वा ।
उपजीवन्ति ये शूद्रास्तेषां गतिमधो शृणु ॥
कपिलाजीविनः शूद्राः क्रूरा गच्छन्ति रौरवम् ।
रौरवं तु महारौद्रं वर्षकोटिशतं धरे ॥
ततोऽपि मुक्ताः कालेन श्वानयोन्यां व्रजन्ति ते ।
श्वानयोन्या विमुक्तस्तु विष्ठायां जायते कृमिः ॥
विष्ठास्थानेषु पापिष्ठा दुर्गन्धिषु च नित्यशः ।
भूयो भूयो जायमानास्तत्रोत्तारं न विन्दति ॥
ब्राह्मणश्चैव यो विद्वान् कुर्य्यात्तेषां प्रतिग्रहम् ।
तत्र प्रभृत्यमेध्यास्ते पितरस्तस्य भारति ॥
न तं विप्रन्तु सम्भाषेत् नैवैकासनं व्रजेत् ।
स नित्यं वर्जनीयो हि दूरात् ब्राह्मणोऽध्वरे ॥
यस्तेन सह संभाषेत्तथा चैकासनं व्रजेत् ॥
प्राजापत्यं चरेत् कृच्छ्रं तेन शुध्यति स द्विजः ॥
अथासन्नप्रसवकपिलादानफलादि ।
एकस्य गोप्रदानस्य सहस्रन्तु पूर्य्यते ॥
किमन्यैर्बहुभिर्दानैः कोटिसङ्ख्यातविस्तरैः ।
श्रोत्रियाय दरिद्राय सन्तुष्टायाहिताग्नये ॥
आसन्नप्रसवां धेनुं दानार्थं प्रतिपालयेत् ।
कपिलादिप्रसूता वै दातव्या च द्विजन्मने ॥

जायमानस्य वत्सस्य मुखं योन्यां प्रदृश्यते ।
तावत् सा पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥
धेन्वा यावन्ति रोमाणि सवत्साया वसुन्धरे
तावतो वर्षकोट्यस्तु ब्रह्मवादिभिरर्च्चिताः ॥
वसन्ति ब्रह्मलोके वै ये च वै कपिलाप्रदाः ।
सुवर्णशृङ्गौ च कृत्वा रौप्यखुरान्विताम् ।
ब्राह्मणस्य करे दत्त्वा सुवर्णं रौप्यमेव च ॥
कपिलायास्ततः पुच्छं ब्राह्मणस्य करे न्यसेत् ।
उदकञ्च करे दद्याद्दाता श्रद्धयान्वितः ॥
ससमुद्रान्ता तेन सशैलवनकानना ।
रत्नपूर्णा भवेद्दत्ता पृथिवी नात्र संशयः ॥
पृथिवीदानतुल्येन दानेनैतेन वै नरः ।
नन्दितो याति पितृभिर्व्विष्णोश्च परमं पदम् ॥
ब्रह्मस्वहारी गोघ्नश्च भ्रूणहा पापदूषकः ।
महापातकयुक्तोऽपि यश्चान्यो ब्रह्मदूषकः ॥
निन्दको ब्राह्मणानाञ्च तथा धर्म्मादिदूषकः ।
सर्व्वे पातकयुक्ताऽपि गवां दानेन शुध्यति ॥
यश्चोभयमुखीं दद्यात् प्रभूतकनकान्विताम् ।
तद्दिनं पयसाहारः पायसेनापि वा भवेत् ॥
सुवर्णस्य सहस्रेण तदर्द्धेनापि भामिनि ।
तस्याप्यर्द्धशतेनापि यथाशक्त्या तदर्द्धकम् ॥
यथाशक्ति प्रदानेन वित्तशाठ्यं विवर्ज्जयेत् ।
इमां गृह्णोभयमुखीमुभयत्र प्रभोऽस्तु वै ।
मम वंशविवृद्धाय सदा स्वस्तिकरी भव ॥”
गोशरीरे देवतानिवेशो यथा —
दन्तेषु मरुतो देवा जिह्वायान्तु सरस्वती ।
खुरमध्ये तु गन्धर्व्वाः खुराग्रेषु तु पन्नगाः ॥
सर्व्वसन्धिषु साध्याश्च चन्द्रादित्यौ तु लोचने ।
ककुदि सर्व्वनक्षत्राः लाङ्गूले धर्म्म आश्रितः ॥
अपाने सर्व्वतीर्थानि प्रस्रावे जाह्नवी नदी ।
नानाद्वीपसमाकीर्णाश्चत्वारः सागरास्तथा ॥
ऋषयो रोमकूपेषु गोमये पद्मधारिणी ।
रोमसु सन्ति विद्याश्च सर्व्वेष्वयनद्वयम् ॥
धैर्य्यं धृतिश्च शान्तिश्च पुष्टिर्वृद्धिस्तथैव च ।
स्मृतिर्मेधा तथा लज्जा वपुः कीर्त्तिस्तथैव च ॥
विद्या शान्तिर्म्मतिश्चैव सन्नतिः परमा तथा ।
गच्छन्तीमनुगच्छन्ति एता गां वै न संशयः ॥
यत्र गावो जगत्तत्र देवदेवपुरोगमाः ।
यत्र गावस्तत्र लक्ष्मीः सोऽक्षधर्म्मश्च शाश्वतः ॥
सर्व्वरूपेषु ता गावस्तिष्ठन्त्यभिमताः सदा ।
गावः पवित्रा मङ्गल्या देवानामपि देवताः
यस्ताः शुश्रूषते भक्त्या स पापेभ्यः प्रमुच्यते ॥”
इति वराहपुराणम् ।

धेनुकः, पुं (धेनुरिव प्रतिकृतिः । “इवे प्रतिकृतौ ।” ५ । ३ । ९६ । इति कन् ।) असुरविशेषः । स बलरामेण हतः । इति श्रीभागवते १५ अध्यायः ॥ (अयन्तु गर्द्दभरूपी गोवर्द्धनस्योत्तरपार्श्वस्थतालवनवासी । यथा, हरिवंशे । ६९ । २—२३ ।
आजग्मतुस्तौ सहितौ गोधनैः सहगामिनौ ।
गिरिं गोवर्द्धनं रम्यं वसुदेवसुतावुभौ ॥
गोवर्द्धनस्योत्तरतो यमुनातीरमाश्रितम् ।

नवान्नं, क्ली, ( नवं नूतनं अन्नम् । ) नूतनान्नम् । तन्निमित्तश्राद्धम् । यथा,—

वराह उवाच ।

"अकृत्वा यो नवान्नानि मम कर्म्मपरायणः ।
भुञ्जन्ति ये नवान्नानि परैः शक्तानि केन च ॥
नाहं लोभेन चेच्छामि पुनर्भोगेन सुन्दरि ! ।
अवश्यमेव कर्त्तव्यं मम कर्म्मपरायणैः ॥
ततो भागवतो भूत्वा नवान्नं यो न कारयेत् ।
पितरस्तस्य नाश्नन्ति वर्षाणि दश पञ्च च ॥
अदत्त्वा यस्तु भुञ्जीत नवान्नानि कथञ्चन ।
न तस्य धर्म्मो विद्येत एवमेतन्न संशयः ॥
अन्यच्च ते प्रवक्ष्यामि येन तत्र प्रमुच्यते ।
प्रायश्चित्तं महाभागे ! मम भक्तसुखावहम् ॥
उपवासं त्रिरात्रन्तु तत एकेन वा पुनः ।
आकाशशयनं कृत्वा चतुर्थेऽहनि नुध्यति ॥
एवं तत्र विधिं कृत्वा उदिते च दिवाकरे ।
पञ्चगव्यं ततः पीत्वा शीघ्रं मुच्येत किल्बिषात् ॥
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ।
सर्व्वसङ्गान् परित्यज्य मम लोकाय गच्छति ॥"

इति नवान्नभोजनापराधप्रायश्चित्तम् ॥ इति वराहपुराणम् ॥*॥ तस्य निमित्तदिनं यथा,—

"सूर्य्ये चैव विशाखगे सारतिथौ मापे चित्रम्भान्विते
नन्दामन्दमहीजकार्य्यदिवसे पौषे मघौ कार्त्तिके ।
मेषूशाद्विद्विनेषु विष्णुशयने कुर्य्यो शशिन्यष्टमे
श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम् ॥"

सूर्य्ये चैव विशाखगे मार्गशीर्षस्य विंशतिदण्डाधिकप्रथमदिनत्रयावस्थिते सूर्य्ये । सार तिथौ त्रयोदश्याम् । मापे पञ्चमताराचये । उग्रः पूर्व्वात्रयमघाभरण्यः । अधिरश्लेषा । शिव आर्द्रा ।

"ज्येष्ठाश्लेषार्द्दगे सूर्य्ये त्वगनेधानिशात्मके ।
नवान्नैर्भोजनं श्राद्धं जन्मचन्द्रे तिथौ न च ॥
आश्लेषाक्षिकाण्येष्ठामूलाजपदस्येषु च ।
भृगुभौमदिने रिक्ततिथौ नाद्यान्नवौदनम् ॥"

तस्य विधिर्यथा,—

"प्राशीयाद्दधिसंयुक्तं नवं विप्राभिमन्त्रितम् ॥"

दीपिकायाम् ।

"भेषूशाद्विद्विवान्येषु विभौमघ्ननिवासरे ।
अन्नप्राशनवत् कुर्य्यान्नवान्नप्राशनम् ॥"

अधिकन्तु ।

"हस्ता स्वातिपुनर्व्वसू म्टगशिरःपुष्यानुराधा तथा
मूलायां श्रवणे च रेवतिधने चित्रामले वारुणे ।
आश्वे शक्रविशाखयोश्च तुरगे सौम्येन्दुजीवाह्वये
चन्द्रे शोभनतारके च शुभदं श्राद्धं नवान्ने ध्रुवम् ॥"

भोजराजः ।

"कन्या विष्णुहरस्वती शशधरो मार्त्तण्डपौष्णादितौ
मैत्रे चैव विशाखवायुधनभे मूलाश्विवह्नौ तथा ।
शुक्रे वारुण भार्गवे शुभदिने श्राद्धं नवं शस्यते
नन्दाभार्गवभूमिजेषु न भवेच्छ्राद्धं नवान्नोद्भवम् ॥"

इति ज्योतिस्तत्त्वम् ॥

आश्विनाधिकारे ।

"नुक्लपक्षे नवं धान्यं ज्ञात्वा पक्वं सुशोभनम् ।
गच्छेत् चैत्री विधानेन गीतवाद्यपुरःसरः ॥"

इत्यादिना ब्रह्मपुराणेन श्राद्धविधानात् ॥

अपि च ।

"शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते ।
धान्यपाकवशादन्ये श्यामाको वनिनः स्मृतः ॥"

इति मलमासतत्त्वम् ॥

नवाम्बरं, क्ली, (नवं नूतनमम्बरं वस्त्रम् ।) नूतनवस्त्रम् । इत्यमरः । २ । ६ । ११२ ॥ ( यथा, समयप्रदीपे ।

"शौर्य्ये रवौ ननतममुभिरार्द्रमिन्दौ
भौमे शुचं बुधदिने च भवेद्धनाय ।
ज्ञानाय मन्त्रिणि भृगौ प्रियसङ्गमाय
मन्दे मलाय च नवाम्बरधारणं स्यात् ॥")

नवार्चिः, [ स् ] पुं, ( नव अर्च्चींषि यस्य । ) मङ्गलग्रहः । इति त्रिकाण्डशेषः ॥ ( स्त्री, नवं नूतनं अर्च्चिः । ) नवशिखा ॥ (नव अर्च्चींषि इति विग्रहेण तु नवसंख्यककिरणार्थे बहुवचनम् ॥ )

नवाहः, पुं, ( नवं अहः । समासे टच् । ) नवदिनम् । प्रतिपत्तिथिः । इति विश्वः ॥

नविका, स्त्री, ( नवोऽस्त्यस्या इति । नव+ठन्+टाप् । नवं नवं कायति इति वा ।) नवशब्दयुक्ता । इति स्त्रीप्रत्ययप्रकरणे दुर्गादासः ॥

नवीनं, त्रि, ( नवमेव । नव+"नवस्य न्वादेशो-ऽप्तनप्खाश्च प्रत्यया वक्तव्याः ।"५ । ४ । २५ । इत्यस्य वार्त्तिकोक्त्या खः न्वादेशश्च ।) नूतनम् । इत्यमरः । ३ । १ । ७७ ॥ ( यथाह गदाधरः ।

"गदाधरविनिर्म्मिता विविधदुर्गतर्काटवी
नवीनपदवीसुदं वितनुतां सतां धीमताम् ॥" )

नवोढ़ा, स्त्री, (नवा नूतना ऊढ़ा) नवविवाहिता । तत्पर्य्यायः । वधूः २ जनी ३ । इति जटाधरः ॥ नववरिका ४ दिधिरी ५ नवयौवना ६ । इति हारावली । १५४ ॥ मुग्धानायिकाभेदः । तस्या लक्षणं यथा ।"लज्जाभयपराधीनरतिर्नवोढ़ा ॥" तस्या उदाहरणं यथा, रसमञ्जर्य्याम् ।

"वलोभीता पार्श्वे सुखमसुखं नैव कुरुते
धुनानाम्यङ्गानं क्षिपति वदनं चुम्बनविधौ ।
हृदि न्यस्तं हस्तं क्षिपति गमनारोपितमना
नवोढ़ा वोढ़ारं रमयति च सन्तापयति च ॥"

नवोदकं, क्ली, ( नवमुदकम् । ) नूतनजलम् । यथा, मिताक्षरायां स्मृतिः ।

"काले नवोदकं शुद्धं न पातव्यञ्च तत् त्र्यहम् ।
अकाले तु दशाहानि पीत्वा नाद्यादहर्निशम् ॥"

इति शुद्धितत्त्वम् ॥

तन्निमित्तकं श्राद्धं कर्त्तव्यम् । [illegible]

"नवोदके नवान्ने च [illegible]
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ।
तस्माद्दद्यात् सदा युक्तो विद्वत्सु [illegible]
नवोदकैर्धर्म्मोपक्रमे । [illegible]
'आर्द्रादितो विशतयार्ह [illegible]

इति [illegible]

'प्राविट्काले समायाते [illegible]
नार्द्रविधसमायोगे [illegible]

इति [illegible]

रौद्रमार्द्रा ॥ ३ ॥ नवोदकश्राद्धस्य [illegible] त्वात् त्रयोदश्यादिकमिति [illegible]

'त्रयोदशी जन्मदिनच [illegible]
जन्मर्क्षतारां सितवासरञ्च ।
त्यक्त्वा हरौ श्रेयन्दकान्नं [illegible]
युचेषु च श्राद्धविधानमाहु ॥'

सितवासरं शुक्रवारम् । [illegible] दयः श्रवणपुष्यम्टगशिरोहस्ताः [illegible] त्रितयरोहिण्यः । कृष्णपक्षे [illegible] कालस्तदोभयोः श्राद्धयोस्तत्र [illegible] निष्यादितत्त्वम् ॥

नवोद्धृतं, क्ली, ( नवमुद्धृतम् । ) नवनीतम् । इत्यमरः । २ । ९ । ५२ ॥ नूतनोद्धृते, त्रि ॥

नव्यं, त्रि, (नूयते स्तूयते इति । नु स्तुतौ+"अचो यत् ।" ३ । १ । ९७ । इति यत् । नवमेव । "शाखादिभ्यो यत् ।" ५ । ३ । १०३ । इति स्वार्थे यत् ।) नूतनम् । इत्यमरः । [illegible] ( यथा, ऋग्वेदे । ३ । ५५ । १६ ।

"नव्या नव्या युवतयो भवन्तीर्महद्देवानाम्[illegible]

[illegible]

स्तुत्यम् । यथा, ऋग्वेदे । ५ । १३ । ३ ।

"कया नो अग्न ऋतयन्नृतेन
भुवो नवेदा उचथस्य नव्यः ॥" )

क्ली, स्तुतिः । णु ल स्तुतौ भावे यत् [illegible] स्वार्थे ये निष्पन्नः ॥

नव्यः, पुं, ( नूयते इति । नु+यत् ।) रक्तपुनर्नवा । इति राजनिर्घण्टः ॥

नशाकः, पुं, ( नश्यतीति । नश नाशे+"कन्खजादेः स तु कित् ।" १।८२१ । इति उज्ज्वलदत्तोक्तकोषटीकाधृतसूत्रात् आकः । ) काकभेदः । इत्युणादिकोषः ॥

नशिता, [ ऋ ] त्रि, नाशात्मकः । इति नश धातोः कर्त्तरि तृच्प्रत्ययनिष्पन्नः ॥

नश्यत्प्रसूतिका, स्त्री, ( नश्यन्ती प्रसूतिः सन्तानं यस्याः । कप् । ततष्टाप् । ) म्टतवत्सा । तत्पर्य्यायः । निन्दुः २ म्टतपुत्रिका ३ । इति हेमचन्द्रः । ३ । १९५ ॥

नश्वरः, त्रि, ( नश्यतीति । नश+"इण्नशजिसर्त्तिभ्यः क्वरप् ।"३ । २ । १६३ । इति क्वरप् । ) नाशप्रतियोगी । ध्वंसयोग्यः । इति नश धातोः कर्त्तरि वरप्रत्ययनिष्पन्नः ॥ ( यथा, भागवते । ५ । १८ । ४ ।

'वदन्ति विश्व कवय स्म नश्वर
पश्यन्ति चाध्यात्मविदो विपश्चित ।
तथापि मुह्यन्ति तवाज मायया
सुविस्मित कृत्यमज नतोऽस्मि तम् । ')
नष्ट त्रि (नश्+क्त ।) अदर्शनविशिष्ट । तत
पर्य्याय । तिरोहित २ । इत्यमर । २ । ८ ।
११२ ॥ (यथा, पञ्चतन्त्रे । १ । ३७८ ।
नष्ट मृतमतिक्रान्त नानु शोचन्ति पण्डिता ।
पण्डितानाञ्च मूर्खाणा विशेषोऽय यत स्मृत ॥
अधम । यथा चाणक्ये । ८० ।
असन्तुष्टा द्विजा नष्टा सन्तुष्टा इव पार्थिवा ।
सलज्जा गणिका नष्टा निर्लज्जास्तु कुलस्त्रिय ॥
पलायित । यथा हरिवंशे । १७४ । १२३ ।
तृतीये तु मुहूर्त्ते सा नष्टा बाणपुरात तदा ।
भर्त्तारमिव चिकीर्षन्ती पूजयन्ती तपोधनान्
पलायित । यथा रत्नावल्याम
नष्ट वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपाम् ॥
निष्फल । यथा मनु । ३ । १८० ।
नष्ट देवलके दत्त अप्रतिष्ठन्त वार्द्धुषौ ॥" )
नाशाश्रय । यथा । 'योगो नष्ट परन्तप ।'
इति श्रीभगवद्गीता ॥ नाशे क्ली ॥
नष्टचन्द्र पु (नष्टो दुष्टश्चन्द्र ।) सौरभाद्रस्य
शुक्लपक्षे चतुर्थ्यामुदितश्चन्द्र । यथा —
'नष्टचन्द्रो न द्रष्टव्यो भाद्रे मासि सितासिते ।
चतुर्थ्यामुदितोऽस्मिन्न प्रतिषिद्धो मनीषिभि ॥
चन्द्रस्तारामहरणे कलङ्कमतिदुष्करम
तस्मै ददाति हे नन्द कामतो यदि पश्यति ॥
अकामतो नरो दृष्ट्वा मन्त्रपूत जल पिबेत ।
तत शुद्धो भवेत सद्यो निष्कलङ्को महीतले ॥
सिंह प्रसेनमवधीत सिंहो जाम्बवता हत ।
सुकुमारक । मारोदीस्तव ह्येष स्यमन्तक ॥
इति मन्त्रेण पूतञ्च जल साधु पिबेद्ध्रुवम ॥
पुरा तारा गुरो पत्नी नवयौवनसयुता ।
रत्नभूषणभूषाढ्या रक्तवस्त्राम्बरा सती ॥
सुश्रोणी सुस्मिता रम्या सुन्दरी सुमनोहरा ।
जातीवकबरीरम्या मालतीमाल्यभूषिता ॥
सिन्दूरबिन्दुना साक चारुचन्दनबिन्दुभि ।
कस्तूरीबिन्दुनाधश्च भालमध्यस्थलोज्ज्वला ॥
रत्नसारनिर्माणक्वणन्मञ्जीररञ्जिता ।
सुवक्रलोचना श्यामा सुचारुकज्जलोज्ज्वला ॥
सुचारुचारुमुक्ताभन्नासापङ्क्तिमनोहरा ।
रत्नकुण्डलयुग्मेन चारुगण्डस्थलोज्ज्वला ॥
कामिनीष्वतुला बाला गजेन्द्रमन्दगामिनी ।
सुकोमला चन्द्रमुखी कामाधारा च कामुकी ॥
स्वर्गमन्दाकिनीतीरे स्नाता स्निग्धाम्बरा वरा ।
ध्यायन्ती गुरुपादाब्ज सा स्वगृह गमनोन्मुखी ॥
दृष्ट्वा तस्याश्च सर्व्वाङ्गमनङ्गबाणपीडित ।
भाद्रे चतुर्थ्याञ्चन्द्रश्च प्रहार चेतन ब्रज । ॥
भ्रमन्यत्रेन सप्राप्य रथस्थो रसिको बली ।
रथमारोपयामास करे धृत्वा च तारकाम् ॥
कामार्त्तस्त कामिनीं तां समाश्लिष्य चुचुम्ब स ।
शृङ्गार कर्त्तुमुद्युक्त तमुवाच गुरुप्रिया ॥

तारकोवाच ।
त्यज मा त्यज मा चन्द्र । सुरेषु कुलपांसक । ।
गुरुपत्नीं ब्राह्मणीञ्च पतिव्रतपरायणाम् ॥
गुरुपत्नीमङ्गमेन ब्रह्महत्याशत लभेत ।
पुत्रस्त्व तव मा गाढ धैर्य्य कुरु सुरेश्वर । ॥
धिक त्वां श्रुत्वा सुरगुरुर्भस्मीभूत करिष्यति ।
गुरुपत्नी विप्रपत्नी यदि सा च पतिव्रता ॥
ब्रह्महत्यासहस्रञ्च तस्या सङ्गमने लभेत ।
पुत्राधिकञ्च शिष्यञ्च प्रियो मतस्वामिनो भवान् ॥
स्वधर्म्म रक्ष पापिष्ठ । मामेव मातर त्यज ।
दास्यामि स्त्रीवध तुभ्य यदि मां सग्रहीष्यसि ॥
विलङ्घ्य तारावचन ताञ्च सम्भोक्तुमुद्यतम् ।
शशाप तारा कोपेन निष्कामा सा पतिव्रता ॥
राहुग्रस्तो यक्ष्मग्रस्त पापयुक्तो भवान भव ।
कलङ्की यक्ष्मणा ग्रस्तो भविष्यसि न सशय ॥
चन्द्रमेव तदा तूर्णं कामदेव शशाप सा ।
तेजस्विना केनचित्त्व भस्मीभूतो भविष्यसि ।
चन्द्रस्तारां गृहीत्वा च सत्वा च रमणे ब्रज । ।
क्रोडे निधाय प्रययौ रुदन्तीं तां सुविस्मिताम् ॥
निर्जने निर्जने रम्ये शैले शैले मनोहरे ।
तत्र दृष्ट्वासुरगुरु बलिगेहात समागतम् ॥
प्रणम्य सर्व्वमुक्त्वा च चन्द्रस्त शरण ययौ ।
शुक्रस्त बोधयामास वचन नीतियुक्तिम ॥

शुक्र उवाच ।
शृणु वत्स । प्रवक्ष्यामि गुरवे देहि तारकाम् ।
गुरुपत्नीं मातृपरां त्यज मद्वचनाद्विधो । ॥
कुरु पापक्षयोपाय निष्कृतिस्तु महाफला ।
सतीनां गुरुपत्नीनां ग्रहणन वलन च ॥
ब्रह्महत्यासहस्राणां पातक लभते जन ।
कुम्भीपाके पचेत्ते च यावद्वै ब्रह्मण शतम् ॥
बृहस्पतिश्च तेजस्वी त्वां भस्मीकर्त्तुमीश्वर ।
न चकार कृपालुश्चेत प्रियशिष्येण हेतुना ॥
उतथ्यपत्नी दृष्ट्वा स पुरा रेमे सकामत ।
तत्पत शापतोऽस्यैव परस्त्री प्रिया सती ॥
'एतस्मिन्नन्तरे ब्रह्मा बोधयित्वा कवि विभु ।
समानीय निशानाथ तारकासहितं ब्रज । ।
शम्भोश्च चरणाम्भोजे चकार च समर्पणम् ॥
शम्भुस्त प्रीतियुक्तश्च वासयामास वक्षसि ।
दत्वा तस्मै पादरेणु निष्पापञ्च चकार स ।
दत्वा तत्मस्तक हस्त कृपालुरभय ददौ ॥
क्षीरोदे स्नापयित्वा च प्रायश्चित्तेन शङ्कर ।
चकार चन्द्र निष्पाप ब्रह्मणा सहित सुदिम ॥
यागेन चन्द्र योगीन्द्रो द्विखण्डञ्च चकार स ।
ररक्षाद्ध ललाटे च सोऽर्द्धचन्द्र शङ्करस्य पुर ॥
अतएव महादेवो बभूव चन्द्रशेखर ।
मृगाङ्को लज्जितस्तत्र कलङ्की देवससदि ॥
लज्जया च स्वयोगेन देहत्यागञ्चकार स ।
तच्छरीरञ्च क्षीरोदे ब्रह्मणा च समर्पितम् ॥
हरोऽनाचिश्च कृपया सुधा क्षीरोदधेस्तटे ।
तन्नित्यस्तुमस तस्य पपात च जय ब्रज । ॥
भस्माद्बभूव चन्द्रश्च निष्पापो देवससदि ।
ब्रह्मा च भगवान शम्भुरभिषेकञ्चकार तम् ॥

उवाच च महादेवो निर्भय देवससदि ॥

महादेव उवाच
स्वस्थान गच्छ पुत्र । त्व कुरु स्वविषय मुदा ।
पश्चात स्वगुरुशापेन यक्ष्मग्रस्तो भविष्यसि ॥
स्वयं पतिव्रताशाप कर्त्तुमीशश्च को भुवि ।
ममाशिषा यक्ष्मणश्च प्रतिकारो भविष्यति ॥
यस्माद्भाद्रचतुर्थ्यान्तु गुरुपत्नी हृता त्वया ।
तस्मात्त्वस्मिन्दिने वत्स । पापदृश्यो युगे युगे ॥
मा भुक्त क्षीयते कर्म्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्य कृत कर्म्म शुभाशुभम् ॥
देहत्यागेन हे वत्स । कर्म्मभोगो न नश्यति ।
प्रायश्चित्तान्न सन्देहो ह्यल्पमेव भविष्यति ॥
तारापहरणे वत्स । कलङ्कश्चन्द्रमण्डले ।
मृगाङ्कत विलग्नश्च भविष्यति युगे युगे ॥'
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ८० ८२ अ ॥
नष्टचेष्टता, स्त्री (नष्टा चेष्टा यस्य । तस्य भाव
तल ।) प्रलय । इत्यमर । १ । ७ । ३३ ॥
शोकादिना परिस्पन्दनाशो नष्टचेष्टता तत्र
प्रलय प्रलीयतेऽनेन प्रलय लीङ् ड श्लो श्लिषि
अल । प्रलय सात्त्विको भाव मूर्च्छयो' ।
इति सर्व्वस्वम् ॥ हर्षशोकादिभिरशेषचेष्टा
नाश प्रलय इत्यर्थ' । इति भरत ॥ ईहा
शून्यता च ॥
नष्टाग्नि पु (नष्ट प्रमादात् निर्व्वाणमाप
अग्निर्यस्य ।) यस्याग्निहोत्रिण' प्रमादान्निद्रा
कारणान्तरेण वा अग्निर्नष्टो निर्व्वाण स्यात
स । तत्पर्य्याय । वीरहा २ । इत्यमर । २ ।
७ । ५३ ।
नष्टाग्निसूत्र, क्ली (नष्टस्य चौर्य्यापहृतस्य वस्तुन
आप्ति तस्या सूत्रमिव ।) किञ्चित्प्राप्तचौर
गोलदव्यम् । तत्पर्य्याय । लोप्त्रम् २ । इति
हारावली । १५८ ॥
नष्टेन्दुकला, स्त्री (नष्टा इन्दुकला यस्याम् ।)
कुहू । इत्यमर । १ । ४ । ६ ॥
नसा, स्त्री (नस्+वा टाप । यद्वा नसते कुटि
लतां प्रकाशयतीति । नस कौटिल्ये+अच ।
टाप ।) नासिका । इति त्रिकाण्डशेष ॥
नस्त पु (नसते कुटिलतां प्रकाशयत्यनेनेति ।
नस्+क्त । बाहुलकात इडभाव ।) नासिका ।
इति शब्दमाला ॥ (यथा महाभारते । ५ ।
१३१ । १० ।
'नस्ताभ्यां नस्तश्चैव श्रोत्राभ्याञ्च समन्तत ।
प्रादुरासन् महारौद्रा' सधूमा पावकार्च्चिष ॥')
नस्य क्ली । इति रत्नमाला ॥ पञ्चविधनस्त
कर्म्माणि यथा —
"प्रतिमर्षोऽवपीडश्च नस्य प्रधमनन्तथा ।
शिरोविरेचनञ्चैव नस्तकर्म्म तु पञ्चधा ॥
ईषदुच्छुसनात स्नेहो यावान् वक्त्र प्रपद्यते ।
नस्तो निषिक्तस्त निद्यात प्रतिमर्षं प्रमाणत ॥
प्रतिमर्षश्च नस्यार्थं करोति च न दोषभाक ।
शोधन स्तम्भनश्च स्यादवपीडो द्विधा मत ॥
अवपीड्य दीयते यस्मादवपीडस्तत स्मृत ।

स्नेहार्थं शून्यशिरसां ग्रीवास्कन्धोरसां तथा ।
बलार्थं दीयते स्नेहो नस्तःशब्दोऽत्र वर्त्तते ।
नस्यस्य स्नेहिकस्यात्र देयाः षष्टौ तु विन्दवः ॥
प्रत्येकशो नस्तकयोर्नृणामिति विनिर्णयः ॥"
इति वैद्यकपरिभाषा ॥
"शुक्तिश्च पाणिशुक्तिश्च मात्रास्तिस्रः प्रकीर्त्तिताः ।
द्वात्रिंशद्विन्दवश्चात्र शुक्तिरित्यभिधीयते ॥
द्विशुक्ती पाणिशुक्तिश्च देयास्तु कुशलैर्नरैः ।
तैलं कफे च वाते च केवले पवने वसाम् ॥
दद्यान्नस्यं सदा पित्ते सर्पिर्मज्ज्ञा समारुते ।
भावनं रेचनं पूर्व्वं शुक्लाग्रात्तं सुखवायुना ॥
षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ।
न हि भूरितरं दोषं पूर्णत्वादपकर्षति ॥
शिरोविरेचनद्रव्यैः स्नेहैर्वातैः प्रसाधितैः ।
शिरोविरेचनं दद्यात् रोगेष्वेतेषु बुद्धिमान् ॥
गौरवे शिरसः शूले जाड्ये स्यन्दे गलामये ।
शोथगण्डक्रिमिग्रन्थिकुष्ठापस्मारपीनसे ॥
तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ।
भुक्तभक्तशिरःस्नातस्नातुकामसुतास्रजाम् ॥
नवपीनसरोगार्त्तसूतिकाश्वासकासिनाम् ।
शुद्धानां दत्तवस्तीनां तथा नार्त्तवदुर्द्दिने ॥
अन्यत्रात्ययिके व्याधौ नैषां नस्यं प्रयोजयेत् ।
न नस्यं न्यूनसप्ताब्दे नातीताशीतिवत्सरे ।
न चोनद्वादशे धूमः कवडो नोनपञ्चमे ॥
न शुद्धिर्न्यूनदशमे न चातिक्रान्तसप्ततौ ।
आजन्ममरणं शस्तं प्रतिमर्षस्तु वस्तिवत् ॥"
इति सारकौमुदी ॥

नस्या, स्त्री, ( नस + टाप् । ) नासाक्षतं छिद्रम् । इति नस्तितशब्दटीकायां भरतः ॥
"नस्याभेदनदाहाभ्यां कर्णदाहादिभेदनैः ।
अतिदाहातिवाहाभ्यां वधे चान्द्रायणञ्चरेत् ॥"
इति स्मृतिः ॥

नस्तितः, पुं, ( नस्या नासाच्छिद्रं जाता अस्य । तारकादित्वादितच् । ) नासानिर्व्विद्धरज्जुवलीवर्द्दादि । नाकफोंड़ा बलद इति भाषा । तत्पर्य्यायः । नस्योतः २ । इत्यमरः ।२।९।६३॥

नस्योतः, पुं, (वे ञ तन्तुसन्ताने + भावे क्तः । नसि नासिकायां ऊतं वयनं यस्य ।) नस्तितः । इत्यमरटीकायां रमानाथः ॥

नस्यं, क्ली, ( नासिकायै हितम् । नासिका + यत् । नसादेशश्च । ) नासिकादेयचूर्णादि । तत्पर्य्यायः । नस्तम् २ नावनम् ३ । इति रत्नमाला ॥ यथा, वैद्यकपरिभाषायाम् ।
"वमनं रेचनं नस्यं निरूहश्चानुवासनम् ।
ज्ञेयं पञ्चविधं कर्म्म मात्रा तस्य प्रवक्ष्यते ॥"
नासाद्वारा देयौषधविशेषः । यथा,—
"प्रस्थे द्वे गवदमालानां क्वाथयेत् द्रोणमम्भसाम् ।
चतुर्भागावशेषेण तैलप्रस्थं विपाचयेत् ॥
काञ्जिकस्याढ़कं दत्त्वा पिष्ट्वैतानि दापयेत् ।
पुनर्नवां गोक्षुरकं सैन्धवं चुरयं वचा ॥
सरलं सुरदारुञ्च दृहती कण्टकारिका ।
नस्यपानादहरत्येव कर्णशूलं सुदुग्रहम् ॥"
इति गारुड़े १९८ अध्यायः ॥
अपि च ।
"सिद्धार्थकवचाहिङ्गुकरञ्जं देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता शिरीषो रजनीद्वयम् ॥
प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणावघर्षितम् ।
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा ॥
अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् ।
भूतेभ्यश्च भयं हन्ति राजद्वारे च शासनम् ॥"
इति गारुड़े १९९ अध्यायः ॥
(यथा च ।
"नस्यन्तत् कथ्यते धीरैर्नासाग्राह्यं तदौषधम् ।
नावनं नस्यकर्म्मेति तस्य नामद्वयं मतम् ॥
नस्यभेदो द्विधा प्रोक्तो रेचनं स्नेहनन्तथा ।
रेचनं कर्षणं प्रोक्तं स्नेहनं वृंहणं मतम् ॥
कफपित्तानिलध्वंसे पूर्व्वमध्यापराह्णके ।
दिनस्य गृह्यते नस्यं रात्रौ चाप्युत्कटे गदे ॥
नस्यं त्यजेद्भोजनान्ते दुर्द्दिने चापि तर्पणे ।
तथा नवप्रतिश्यायी गर्भिणी गरदूषितः ॥
अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासवः ।
क्रुद्धः शोकाभिभूतश्च तृष्णार्त्तो वृद्धबालकौ ॥
वेगावरोधी तापी च स्नातुकामश्च वर्ज्जयेत् ।
अष्टवर्षस्य बालस्य नस्यकर्म्म समाचरेत् ॥
अशीतिवर्षादूर्द्धञ्च नावनं नैव दीयते ।
अथ वैरेचनं नस्यं ग्राह्यं तैलैः सुतीक्ष्णकैः ॥
तीक्ष्णभेषजसिद्धैर्वा स्नेहैः क्वाथै रसैस्तथा ।
नासिकारन्ध्रयोरष्टौ षट् चत्वारश्च विन्दवः ॥
प्रत्येकं रेचने योज्या मुख्यमध्यान्तमात्रया ।
नस्यकर्म्मणि दातव्यं शाणैकं तीक्ष्णमौषधम् ॥
हिङ्गुः स्याद्यवमात्रस्तु माषैकं सैन्धवं मतम् ।
क्षीरश्चैवाष्टशाणं स्यात् पानीयञ्च त्रिकार्षिकम् ॥
कार्षिकं मधुरं द्रव्यं नस्यकर्म्मणि योजयेत् ॥
अवपीड़ः प्रधमनं द्वौ भेदावपरौ स्मृतौ ।
शिरो विरेचनस्थाने तौ तु देयौ यथायथम् ॥
कल्कीकृतादौषधाद्यः पीड़ितो निःसृतो रसः ।
सोऽवपीडः समुद्दिष्टस्तीक्ष्णद्रव्यसमुद्भवः ॥
षड़ङ्गुला द्विवक्त्राया नाड़ीचूर्णन्तया धमेत् ।
तीक्ष्णद्धोलमितं वक्त्रवातैः प्रधमनं हितम् ॥
ऊर्द्ध्वजत्रुगते रोगे कफजे स्वरसंक्षये ।
अरोचके प्रतिश्याये शिरःशूले च पीनसे ॥
शोफापस्मारकुष्ठेषु नस्यं वैरेचनं हितम् ।
भीरुस्त्रीकृशबालानां नस्यं स्नेहेन शस्यते ॥
गलरोगे सन्निपाते निद्रायां विषमज्वरे ।
मनोविकारे क्रिमिषु युज्यते चावपीड़नम् ॥
अत्यन्तोत्कटदोषेषु विसंज्ञेषु च दीयते ।
चूर्णं प्रधमनन्धीरैस्तद्धि तीक्ष्णतरं यतः ॥
नस्यं स्याद्गुड़शुण्ठीभ्यां पिप्पल्या सैन्धवेन च ।
जलपिष्टेन तेनाक्षिकर्णनासाशिरोगदाः ॥
हनुमन्यागलोद्भूता नश्यन्ति भुजपृष्ठजाः ।
मधूकसारकृष्णाभ्यां वचा मरिचसैन्धवैः ॥
नस्यक्षोष्णजले पिष्टं दद्यात् संज्ञाप्रबोधनम् ॥
अपस्मारे तथोन्मादे सन्निपातेऽपतन्त्रके ॥"
इति मध्यखण्डे विंशेऽध्याये शार्ङ्गधरेणोक्तम् ॥
"नस्यकर्म्म यथाकालं यो यथोक्तं निषेवते ।
न तस्य चक्षुर्न घ्राणं न श्रोत्रमुपहन्यते ॥
न स्युः श्वेता न कपिलाः केशाः श्मश्रूणि वा पुनः ।
न च केशाः प्रलुप्यन्ते वर्द्धन्ते च विशेषतः ।
मन्यास्तम्भः शिरःशूलमर्द्दितं हनुसंग्रहः ॥
पीनसार्द्धावभेदौ च शिरःकम्पश्च शाम्यति ।
सिराः शिरःकपालानां सन्धयः स्नायुकण्डराः ॥
नावनप्रीणिताश्चास्य लभन्तेऽभ्यधिकं बलम् ॥
मुखं प्रसन्नोपचितं स्वरः स्निग्धः स्थिरो महान् ।
सर्व्वेन्द्रियाणां वैमल्यं बलं भवति चाधिकम् ॥
न चास्य रोगाः सहसा प्रभवन्त्यूर्द्धजत्रुजाः ।
जीर्य्यतश्चोत्तमाङ्गे च जरा न लभते बलम् ॥"
इति चरके सूत्रस्थाने पञ्चमेऽध्याये ॥
"औषधमौषधसिद्धो वा स्नेहो वा नासिकाभ्यां दीयत इति नस्यं तद्द्विविधं शिरोविरेचनं स्नेहनञ्च । तद्द्विविधमपि पञ्चधा । तद्यथा । नस्यं शिरोविरेचनं प्रतिमर्शोऽवपीड़ः प्रधमनञ्च । तेषु नस्यं प्रधानं शिरोविरेचनञ्च नस्यविकल्पः प्रतिमर्शः शिरोविरेचनविकल्पोऽवपीड़ः प्रधमनञ्च । ततो नस्यशब्दः पञ्चधा निपातितः । तत्र यः स्नेहनार्थं शून्यशिरसां ग्रीवास्कन्धोरसां बलजननार्थं दृष्टिप्रसादजननार्थं वा स्नेहो विधीयते तस्मिन् वैशेषिको नस्यशब्दः । तत्तु नस्यं देयं वाताभिभूते शिरसि दन्तकेशश्मश्रुप्रपातदारुणकर्णशूलकर्णक्ष्वेड़तिमिरस्वरोपघातनासारोगास्यशोषावबाहुकाकालजवलीपलितप्रादुर्भावदारुणप्रबोधेषु वातपैत्तिकेषु मुखरोगेष्वन्येषु च वातपित्तहरद्रव्यसिद्धेन स्नेहेनेति ॥"
"तदेतद्द्विविधमभुक्तवतोऽन्नकाले पूर्व्वाह्णे श्लेष्मरोगिणां मध्याह्ने पित्तरोगिणामपराह्णे वातरोगिणाम् ॥"
इति सुश्रुते चिकित्सितस्थाने ४० अध्याये ॥) नासाया हिते तत्सम्बन्धिनि च, त्रि । प्रयत्ने, पुं । इति संक्षिप्तसारव्याकरणम् ॥

नस्या, स्त्री, ( नासिकायै हिता । नासिका + "शरीरावयवात् यत् ।" ५ । १ । ६ । इति यत् ततो नसादेशः । ) नासिका । यथा,—
"घ्राणं गन्धवहा नासा नसा नस्या च नासिका ॥"
इति भरतधृतसाहसाङ्कः ॥
( नासाक्षतच्छिद्रम् । इति कश्चित् । )

नस्योतः, पुं, ( नस्यया नासारज्ज्वा ऊतः । ) नस्तितः । इत्यमरः । २ । ९ । ६३ ॥ ( यथा, महाभारते । ३ । ३० । २६ ।
"मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः ॥")

नहि, व्य, निषेधः । ( यथा,—
"इयं सन्ध्या दूरादुपगतो हन्त मलयात्
तदेकां त्वद्गेहे विनयवति ! नेष्यामि रजनीम् ।
समीरेणोक्तैवं नवकुसुमिता चूतलतिका
धुनाना मूर्द्धानं नहि नहि नहीत्येव कुरुते ॥"
उद्भटः ॥)

वनानि विश्व कलय स नश्वरं
पश्यन्ति चाध्यात्मविदो विपश्चितः ।
तथापि मुह्यन्ति तवाज मायया
सुवासितं ह्यथमजे नतोऽस्मि तम् ॥" )

नष्ट, त्रि, ( नश्+क्त । ) अदर्शनविशिष्टः । तत्पर्य्यायः । तिरोहितः २ । इत्यमरः । २ । ८ । ११२ ॥ ( यथा, मघनर्ले । १ । ३०८ ।
"नष्टं मृतमतिक्रान्तं नानु शोचन्ति पण्डिताः ।
पण्डितानाञ्च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥"
अधमः । यथा चाणक्ये । ८० ।
"असन्तुष्टा द्विजा नष्टाः सन्तुष्टा इव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जास्तु कुलस्त्रियः ॥"
प्रचलितः । यथा हरिवंशे । १७४ । १२३ ।
"तृतीये तु मुहूर्त्ते सा नष्टा बाणपुरात्तदा ।
मरीप्रय चिकीर्षन्ती पूजयन्ती तपोधनान् ॥"
पलायितः । यथा रत्नावल्याम् ।
"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपाम्॥"
निष्फलः । यथा मनुः । ३ । १८० ।
"नष्टं देवलके दत्तमप्रतिष्ठन्तु वार्द्धुषौ ॥" )
नाशप्राप्तः । यथा । "योगी नष्टः परन्तप ॥"
इति श्रीभगवद्गीता ॥ नाशः क्ली ॥

नष्टचन्द्र, पुं ( नष्टो दृष्टचन्द्रः । ) भाद्रस्य शुक्लचतुर्थ्यामुदितचन्द्रः । यथा —
"नष्टचन्द्रो न द्रष्टव्यो भाद्रे मासि सितासिते ।
चतुर्थ्यामुदितोऽप्यत्र प्रतिषिद्धो मनीषिभिः ॥
चन्द्रस्तारापहरणे कलङ्कमतिदुष्करम् ।
तस्मै ददाति च नन्द । कामतो यः प्रपश्यति ॥
अकामतो नरो दृष्ट्वा मन्त्रपूतं जलं पिबेत् ।
तन्नाशुद्धो भवेत् सद्यो निष्कलङ्को महीतले ॥
सद्य प्रसेनमवधीत् सिंहो जाम्बवता हतः ।
सुकुमारक । मारोदीस्तव ह्येष स्यमन्तकः ॥
इति मन्त्रेण पूतञ्च जलं साधु पिबेद्भुवम् ॥
पुरा तारा गुरोः पत्नी नवयौवनसंयुता ।
रत्नभूषणभूषाढ्या रत्नवस्त्राम्बरा सती ॥
सुश्रोणी सुस्मिता रम्या सुन्दरी सुमनोहरा ।
अतीवकबरीरम्या मालतीमाल्यभूषिता ॥
सिन्दूरबिन्दुना साकं चारुचन्दनबिन्दुभिः ।
कस्तूरीबिन्दुनाधश्च भालमध्यस्थलोज्ज्वला ॥
रत्नेन्द्रसारनिर्म्माणक्वणन्मञ्जीररञ्जिता ।
सुवक्रलोचना श्यामा सुधारुकज्जलोज्ज्वला ॥
सुचारुचारुमुक्ताभश्नपङ्क्तिमनोहरा ।
रत्नकुण्डलयुग्मेन चारुगण्डस्थलोज्ज्वला ॥
कामिनीष्वतुला बाला गजेन्द्रमन्दगामिनी ।
सुकोमला चन्द्रमुखी कामाधारा च कामुकी ॥
स्वर्गमन्दाकिनीतीरे स्नाता स्निग्धाम्बरा वरा ।
ध्यायन्ती गुरुपादं सा स्वगृहं गमनोन्मुखी ॥
दृष्ट्वा तस्याश्च सर्व्वाङ्गमनङ्गबाणपीडितः ।
भाद्रे चतुर्थ्यां चन्द्रश्च जहार चैतत्तं व्रजः ॥
स्थानं चयेन समाप्य रथस्थो रसिको बली ।
रथमारोहयामास करे धृत्वा च तारकाम् ॥
कामार्त्तः कामिनीं तां समाश्रित्य चुचुम्ब स ।
[illegible]

तारकोवाच ।
त्यज मां त्यज मां चन्द्र । सुरेषु कुलपांसक ॥
गुरुपत्नीं ब्राह्मणीञ्च पतिव्रतपरायणाम् ॥
गुरुपत्नीमङ्गमेन ब्रह्महत्याशतं लभेत् ।
पुत्त्रस्त्वं तव मातेव धैर्य्यं कुरु सुरेश्वर ॥
धिक् त्वां श्रुत्वा सुरगुरुर्भस्मीभूतं करिष्यति ।
गुरुपत्नी विप्रपत्नी यदि सा च पतिव्रता ॥
ब्रह्महत्यासहस्रञ्च तस्याः सङ्गमने लभेत् ।
पुत्त्राधिकञ्च शिष्यञ्च शिष्यो मनस्वामिनो भवान् ॥
स्वधर्म्मं रक्ष मापित । मामेव मातरं त्यज ।
दास्यामि स्त्रीवधं तुभ्यं यदि मां सम्प्रहीष्यसि ॥
विलङ्घ्य तारावचनं ताञ्च सम्भोक्तुमुद्यतम् ।
शशाप तारा कोपेन निष्कामा सा पतिव्रता ॥
राहुग्रस्तो घनग्रस्तः पापयुक्तो भवान् भव ।
कलङ्के यक्ष्मणा ग्रस्तो भविष्यसि न संशयः ॥
चन्द्रमेवं तदा तूर्णं कामात्तं शशाप सा ।
तेजस्विना केनचिच्च भस्मीभूतो भविष्यसि ॥
चन्द्रस्तारां गृहीत्वा च धृत्वा च रमणं व्रजन् ।
क्रोडे निधाय प्रययौ रुदन्तीं तां सुविस्मिताम् ॥
निर्ज्जने निर्ज्जने रम्ये शैले शैले मनोहरे ।
तत्र दृष्ट्वा सुरगुरुं बलिगेहात् समागतम् ॥
प्रणम्य सर्व्वमुक्त्वा च चन्द्रस्य शरणं ययौ ।
शुक्रस्तं बोधयामास वचनं नीतियुक्तितः ॥

शुक्र उवाच ।
मृणु वत्स । प्रवक्ष्यामि गुरवे देहि तारकाम् ।
गुरुपत्नीं मातृपत्नीं त्यज मद्वचनादिधो ॥
कुरु पापक्षयोपायं निष्कृतिस्तु महाफला ।
सतीनां गुरुपत्नीनां ग्रहणं बलेन च ॥
ब्रह्महत्यासहस्राणां पातकं लभते जनः ।
कुम्भीपाके पचती च यावद्वै ब्रह्मणः शतम् ॥
इयं सतीह तेजस्वी त्वां भस्मीकर्त्तुमीश्वरः ।
न चकार कृपायुक्ते प्रियशिष्येव हेतुना ॥
उतथ्यपत्नीं दृष्ट्वा स पुरा रेमे सकामतः ।
ततपतं प्राप्तपनोऽस्त्येव परग्रस्ता प्रिया सती ॥
'एतस्मिन्नन्तरे ब्रह्मा बोधयित्वा कविं विधुः ।
समानीय निग्रहार्थं तारकासहितं व्रजः ।
शशिभोज्य चरणाम्भोजे चकार च समर्पणम् ॥
प्रभुस्तं प्रीतियुक्तञ्च वासयामास वक्षसि ।
दत्त्वा तस्मै पादरेणुं निष्पापञ्च चकार सः ।
दत्त्वा तस्कलङ्कं च कृपायुक्तमभयं ददौ ॥
क्षीरोदे स्नापयित्वा च प्रायश्चित्तेन शङ्करः ।
चकार चन्द्रं निष्पापं ब्रह्मणा सहितं सुचिम् ॥
योगेन चन्द्रं योगीन्द्रो द्विखण्डं च चकार सः ।
ररक्ष च ललाटे च सोऽप्यहं मङ्गलं पुरः ॥
अतएव महादेवो बभूव चन्द्रशेखरः ।
स्नात्वा लाञ्छनतत्र कलङ्की देवसंसदि ॥
लज्जया च खयोगेन देहत्यागं चकार सः ।
तच्छरीरञ्च क्षीरोदे ब्रह्मणा च समर्पितम् ॥
करोन्तावि तपया श्रुत्वा क्षीरोदधितटे ।
ध्यनिश्चसुअल तस्य पपात च जलं व्रज ॥
भस्माद्भभूव चन्द्रश्च निष्पापो देवसंसदि ।
ब्रह्मा च भगवान् शम्भुरभिषेकञ्चकार तम् ॥

[illegible] च महादेवो विभयं देवसंसदि ॥

महादेव उवाच ।
सस्थानं गच्छ पुत्त्र । त्वं कुरु स्वविषयं सुत ।
पश्चात् च गुरुशापेन यक्ष्मग्रस्तो भविष्यसि ॥
यथैव पतिव्रताशापं कर्त्तुमीश्वरः को भुवि ।
ममाश्रिता यतस्त्वञ्च प्रतिकारो भविष्यति ॥
यस्माद्भाद्रचतुर्थ्यान्तु गुरुपत्नी हृता हृता ।
तस्मात्तस्मिन् दिने वत्स । पापदर्शी युगे युगे ॥
मा भुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म्म शुभाशुभम् ॥
इदं योगेन वै वत्स । कर्म्मभोगो न नश्यति ।
प्रायश्चित्तात् सन्देहो ह्यस्मेव भविष्यति ॥
तारापहरणं वत्स । कलङ्कं चन्द्रमण्डले ।
स्नाताहत विलम्बञ्च भविष्यति युगे युगे ॥'
इति ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे । ८० । ८१ अ॰

नष्टचेष्टता, स्त्री ( नष्टा चेष्टा यस्य । तस्य भावः । तल् । ) प्रलयः । इत्यमरः । १ । ७ । ३३ ॥ शोकाग्निना परिमग्नदाष्टों नष्टचेष्टता तत्र प्रलयः प्रलीयतेऽनेन प्रलयः ली इ घ ञ्यो ह्रिवि त्वल । प्रलयः सात्त्विको भावः मूर्च्छेत्यथः । इति सर्व्वस्वम् ॥ हृषशोकादिभिरशेषचेष्टा नाशः प्रलयः इत्यथः । इति भरतः ॥ शून्यता च ॥

नष्टाग्नि, पुं ( नष्टः प्रमादात् निर्व्वाणमाप्तः अग्निर्यस्य । ) यस्याग्निहोत्रीय प्रमादाग्निना कारणान्तरेण वा अग्निर्नष्टो निर्व्वाण स्यात् सः । तत्पर्य्यायः । वीरहा २ । इत्यमरः । २ । ७ । ५३ ॥

नष्टाप्तिसूत्र, क्ली ( नष्टस्य चौर्य्यापहृतस्य वस्तुनः आप्तिः तस्याः सूत्रमिव । ) किञ्चित्प्राप्तचौर्य्यं नीतद्रव्यम् । तत्पर्य्यायः । लाप्त्रम् २ । इति हारावली । १५८ ॥

नष्टेन्दुकला, स्त्री ( नष्टा इन्दुकला यस्याम् । ) कुहूः । इत्यमरः । १ । ४ । ८ ॥

नसा, स्त्री, ( नस्+वा टाप् । यद्वा नसते कुटिलतां प्रकाशयतीति । नस कौटिल्ये+घञ् । टाप् । ) नासिका । इति विकाण्डशेषः ॥

नस्त, पुं, ( नसते कुटिलतां प्रकाशयत्यनेनेति । नस्+क्त । बाहुलकात् इड्भावः ।) नासिका । इति शब्दमाला ॥ ( यथा महाभारते । ५ । १३१ । १० ।
"नेत्राभ्यां नस्ततश्चैव श्रोत्राभ्याञ्च समन्ततः ।
प्रादुरासन् महारौद्राः सधूमाः पावकार्च्चिषः ॥ )
नस्यं क्ली । इति रत्नमाला ॥ पञ्चविधनस्यकर्म्माणि यथा —
"प्रतिमर्षोऽवपीडश्च नस्यं प्रधमनन्तथा ।
शिरोविरेचनञ्चैव नस्तकर्म्म तु पञ्चधा ॥
इषद्दुच्छ्वसनात् स्नेहो यावान् वक्त्रं प्रपद्यते ।
नस्ते निषिक्तस्तं विद्यात् प्रतिमर्षं प्रमाणतः ॥
प्रतिमर्षश्च नस्यार्थं करोति च न दोषभाक् ।
शोधनः स्तम्भनश्च स्यादवपीडो द्विधा मतः ॥
अवपीड्य दीयते यस्मादवपीडस्ततः स्मृतः ।

"नागोद्भवो नागधनाभिलाषी
वक्रोक्तिशालो नितरां कुशीलः ।
क्रोधाग्निसन्तापितबन्धुवर्गो
भर्त्तायमः स्यात् किल रङ्गभूमौ ॥"
इति कोष्ठीप्रदीपः ॥

रङ्गसीसकार्थे क्वचित् पुंलिङ्गोऽपि दृश्यते । पाक-
हीनयोस्तयोर्दोषो यथा,—
"पाकहीनौ नागवङ्गौ कुष्ठगुल्मरुजाकरौ ।
मेहपाण्डुकरौ वातकफग्लुकरौ पुनः ॥"
तयोर्मारणं यथा,—
"अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निःक्षिपेत् ।
द्रुतमात्रे विद्रुते नागे लौहदर्व्या च चालयेत् ॥
यामैकेन भवेद्भस्म तत्तुल्याञ्च मनःशिलाम् ।
काञ्जिकेन द्वयं पिष्ट्वा पचेद्गजपुटेन च ॥
स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिके न च ॥
पुनः पुटेच्छरावाभ्यामेवं षड्भिः पुटैर्मृतिः ॥"
नागः सिन्दूरवर्णाभो म्रियते सर्व्वकार्य्यकृत् ।
स तिक्तमधुरो नागो मृतो भवति भस्मसात् ॥
आयुःकीर्त्तिं वीर्य्यवृद्धिं करोति सेवनात् सदा ।
रोगान् हन्ति मृतो नागो वह्निपुष्टिसुखकारकः ॥"
इति सुखबोधः ॥

नागः, पुं, (नगे भवः । नग+अण् । यद्वा, दंश-
त्यस्मात् विषाग्निनेति । दंश+"दंशेर्नो लोपो-
दश नः ।" उणा० ५ । ६१ । गः । अन्तलोपः ।
दस्य नः । बाहुलकात् नकारस्य ना ।) पन्नगः ।
(यथा, विष्णुपुराणे । १ । ६ । ६६ ।
"नगांश्च विषं नागाः क्षीरोदाद् समुत्थितम् ॥")
हस्ती । (यथा, रघुः । ४ । ८३ ।
"भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥")
क्रूराचारी । मेघः । नागकेशरः । पुन्नागः ।
नागदन्तकः । मुस्तकः । देहानिलप्रभेदः ।
"उद्गारे नाग इत्युक्तो नीलजीमूतसन्निभः ॥"
इति शारदातिलकटीका ॥
उत्तरपदस्थिते श्रेष्ठः । इति मेदिनी । गे, १० ॥
(सीसकम् । अस्योत्पत्तिर्नामानि गुणाश्च ।
यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"दृष्ट्वा भोगिसुतां रम्यां वासुकिस्तु समोच यत् ।
वीर्य्यं जातस्ततो नागः सर्व्वरोगापहो नृणाम् ॥"
"नागस्तु नागशततुल्यबलं ददाति
व्याधिं विनाशयति जीवनमातनोति ।
वह्निं प्रदीपयति कामबलं करोति
मृत्युञ्च नाशयति सन्ततसेवितः सः ॥
पाकेन हीनौ किलवङ्गनागौ
कुष्ठानि गुल्मांश्च तथातिकष्टान् ।
कण्डूप्रमेहानिलवादशोथः
भगन्दरादीन् कुरुतः प्रयुक्तौ ॥")
ताम्बूली । देशभेदः । इति नानार्थटीकायां
भरतः ॥ पर्व्वतविशेषः । (यथा, विष्णुपुराणे ।
२ । २ । २८ ।
"शङ्खकूटोऽथ ऋषभो हंसो नागस्तथापरः ।
कालाञ्जराद्याश्च तथा उत्तरे केसराचलाः ॥")
नगे गिरौ चन्दनादितरौ वा भवः । न गच्छ-
तीति अगः न अगः नागः इति वा । तक्षक-
कर्कोटप्रभृतिर्देवयोनिर्मनुष्याकारः फणालाङ्गूल-
युक्तः । इति भरतः ॥ तत्पर्य्यायः । काद्रवेयः ।
२ । इत्यमरः । १।८।४ ॥ नागोत्पत्तिर्यथा,—
"दक्षजा प्रथमा सृष्टिं मरीचिः सुतिकारणम् ।
प्रथमं मनसा ध्यातस्तस्य पुत्त्रस्तु कश्यपः ॥
तस्य दाक्षायणी भार्य्या कद्रूर्नाम शुचिस्मिता ।
मारीचो जनयामास तस्यां पुत्त्रान्महाबलान् ॥
अनन्तं वासुकिञ्चैव कम्बलञ्च महाबलम् ।
कर्कोटकञ्च राजेन्द्र ! पद्मं चान्यं सरीसृपम् ॥
महापद्मं तथा शङ्खं कुलिकञ्चापराजितम् ।
एते कश्यपदायादाः प्रधानाः परिकीर्त्तिताः ।
एतेषान्तु प्रसूत्या तु इदमापूरितं जगत् ॥
कुटिलाः हीनकर्म्माणस्तीक्ष्णास्योत्पविषोल्वणाः ।
दृष्ट्वा दंशन्ति मनुष्यान् भस्म कुर्य्युः स्वयाद्ध्रुवम् ॥
अन्वग्गामी यथा सर्व्वो मनुष्याणां नराधिप ! ।
अहन्यहनि जायेत क्षयः परमदारुणः ॥
आत्मनस्तु क्षयं दृष्ट्वा प्रजाः सर्व्वाः समन्ततः ।
जग्मुः शरण्यं शरणं परन्तु परमेश्वरम् ॥
इमं सेवार्थमुद्दिश्य प्रजाः सर्व्वा महीपते ! ।
ऊचुः कमलजं देवं पुराणं ब्रह्मसंज्ञितम् ॥
देवा ऊचुः ।
देव देवेश लोकानां प्रकृतिः परमेश्वर ।
त्राहि नस्तीक्ष्णदंष्ट्रेभ्यो भुजङ्गानां महात्मनाम् ॥
अहन्यहनि ये देव ! पश्येयुरुरगा हरा ।
मनुष्यं पशुयूथं वा तत् सर्व्वं भस्मसाद्भवेत् ॥
त्वया सृष्टिः कृता देव नीयते सा भुजङ्गमैः ।
एतज्ज्ञात्वा तु दुर्वृत्तं तत् कुरुष्व महामते ॥
ब्रह्मोवाच ।
अहं रक्षां विधास्यामि भवतीनां न संशयः ।
व्रजध्वं स्वानि धिष्ण्यानि प्रजापालाः ससाध्वसाः ॥
एवमुक्ताः प्रजास्तेन ब्रह्मणाव्यक्तजन्मिना ।
आगतास्तु प्रजास्तत्र समाहूय भुजङ्गमान् ॥
शशाप परमक्रुद्धो वासुकिप्रमुखांस्तथा ।
ब्रह्मोवाच ।
यतो मत्प्रभवान्नित्यं क्षयं नयत मानुषान् ॥
भवान्तरे तथान्यस्मिन्मातुः शापात् सुदारुणात् ।
भविता तिक्षयो घोरो नूनं स्वायम्भुवान्तरे ॥
एवमुक्तास्तु वेपन्तो ब्रह्मणा भुजगोत्तमाः ।
निपत्य पादयोस्तस्य इदमूचुर्वचस्तदा ॥
नागा ऊचुः ।
भगवन् ! कुटिला जातिरस्माकं भवता कृता ।
विषोल्वणत्वं क्रूरत्वं दृक्शस्त्रत्वञ्च नस्तथा ॥
अस्मादिदं त्वया देव इदानीं प्रशमयाच्युत ! ॥
ब्रह्मोवाच ।
यदि नाम मया सृष्टा भवन्तः कुटिलाशयाः ।
ततः किं मनुजान्नित्यं भक्षयध्वं गतव्यथाः ॥
नागा ऊचुः ।
मर्य्यादां कुरु देवेश ! स्थानञ्चैव पृथक् पृथक् ।
नागानां वचनं श्रुत्वा देवो वचनमब्रवीत् ॥
अहं करोमि वो नागाः समयं मनुजैः सह ।
तदेकमनसः सर्व्वे शृणुध्वं मम शासनम् ॥
पातालं वितलञ्चैव सुतलाख्यं तृतीयकम् ।
दत्तं वै वसुकाभागं गृहं तत्र गमिष्यथ ॥
तत्र भोगान् बहुविधान् भुञ्जध्वं मम शासनात् ।
तिष्ठध्वं सप्तमं यावद्रात्रान्तन्ते पुनः पुनः ॥
ततो वैवस्वतस्यादौ काश्यपेया भविष्यथ ।
दायादाः सर्व्वदेवानां सुपर्णस्य च धीमतः ॥
तदा प्रसूतिर्वः सर्व्वा भोक्ष्यते चित्रभानुना ।
भवतां नैव दोषोऽयं भविष्यति न संशयः ॥
ये वै क्रूरा भोगिनो दुर्विनीता-
स्तेषामन्तो भविता नान्यथैतत् ।
काले प्राप्ते भक्षयध्वं दशध्वं
तथा परान् पापकृतो मनुष्यान् ॥
मन्त्रौषधैर्गारुडमण्डलैश्च
बद्धैर्ष्टा मानवा ये चरन्ति ।
तेषां भीतैर्व्वर्त्तितव्यं न चान्य-
च्चिन्त्यं कार्य्यं चान्यथा वो विनाशः ॥
इतीरिते ब्रह्मणा ते भुजङ्गा
जग्मुः स्थानं चातलाख्यं हि सर्व्वे ।
तस्थुर्भोगान् भुञ्जमानाः समग्रान्
रसातले लीलया संस्थितास्ते ॥
एवं शापं ते तु लब्ध्वा प्रसादञ्च चतुर्मुखात् ।
तस्थुः पातालनिलये मुदितेनान्तरात्मना ॥
एतत् सर्व्वञ्च पञ्चम्यां तेषां जातं महात्मनाम् ।
अतस्त्वियं तिथिर्धन्या सर्व्वपापहरा शुभा ॥
एतस्यां संयतो यस्तु अम्लन्तु परिवर्ज्जयेत् ।
क्षीरेण स्नापयेन्नागांस्तस्य यास्यन्ति मित्रताम् ॥"
इति वराहपुराणम् ॥

एषां शिवभूषणप्रभावं यथा,—
"वासुकाद्यास्तु ये सर्पा यथास्थानञ्च ते हरन् ।
भूषयाञ्चक्रुरत्यन्तं शिरोवाह्वादिषु द्रुतम् ॥"
इति कालिकापुराणे शिवविवाहे १८ अः ।
कम्बलाश्वतरनागयोः सरस्वत्या गानवरप्राप्ति-
विवरणं यथा,—
"एवं स्तुता तदा देवी विष्णोर्जिह्वा सरस्वती ।
प्रत्युवाच महात्मानं नागमश्वतरं ततः ॥
सरस्वत्युवाच ।
वरन्ते कम्बलभ्रातः ! प्रयच्छाम्युरगाधिप ! ।
वद्यतां प्रदास्यामि यत्ते मनसि वर्त्तते ॥
अश्वतर उवाच ।
सहायं देहि देवि ! त्वं पूर्व्वं कम्बलमेव मे ।
समस्तस्वरसम्बन्धमुभयोः संप्रयच्छ च ॥
सरस्वत्युवाच ।
सप्त स्वरा ग्रामरागाः सप्त पन्नगसत्तम ! ।
गीतकानि च सप्तैव तावतीश्चापि मूर्च्छनाः ॥
तानाश्चैकोनपञ्चाशत्तथा ग्रामत्रयञ्च यत् ।
एतत् सर्व्वं भवान् गाता कम्बलश्चैव ते सखा ॥
ज्ञास्यते मत्प्रसादेन भुजगेन्द्र परन्तथा ।
चतुर्व्विधं पदं तालं त्रिप्रकारं लयत्रयम् ॥
यतित्रयं तथा तोद्यं मया दत्तं चतुर्व्विधम् ॥
एतद्भवान् मत्प्रसादात् पन्नगेन्द्रापरञ्च यत् ।
अस्यान्तर्गतसम्बद्धं स्वरव्यञ्जनयोश्च यत् ॥
[illegible] मया दत्तं भवतः कम्बलस्य च ।

"नागोद्भवो नागधनाभिलाषी
वक्रोक्तिजालो नितरां कुशीलः ।
क्रोधाग्निसन्तापितबन्धुवर्गो
भर्गोपमः स्यात् किल रङ्गभूमौ ॥"
इति कोष्ठीप्रदीपः ॥

रङ्गसीसकार्थे क्वचित् पुंलिङ्गोऽपि दृश्यते । पाकहीनयोस्तयोर्दोषो यथा,—
"पाकहीनौ नागवङ्गौ कुष्ठगुल्मरुजाकरौ ।
मेहपाण्डुकरौ वातकफमल्लकरौ पुनः ॥"
तयोर्मारणं यथा,—
"अश्वत्थचिञ्चात्वक्चूर्णं चतुर्थांशेन निःक्षिपेत् ।
मृत्पात्रे विद्रुते नागे लौहदर्व्या च चालयेत् ॥
यामैकेन भवेद्भस्म तत्तुल्यञ्च मनःशिलाम् ।
काञ्जिकेन द्वयं पिष्ट्वा पचेद्गजपुटेन च ॥
स्वाङ्गशीतं पुनः पिष्ट्वा शिलया काञ्जिकेन च ॥
पुनः पुटेच्छरावाभ्यामेवं षड्भिः पुटैर्मृतिः ॥"
नागः सिन्दूरवर्णाभो म्रियते सर्व्वकार्य्यकृत् ।
सतिक्तमधुरो नागो मृतो भवति भस्मसात् ॥
आयुःकीर्त्तिं वीर्य्यवृद्धिं करोति सेवनात् सदा ।
रोगान् हन्ति मृतो नागो वङ्गवद्गुणकारकः ॥"
इति सुखबोधः ॥

नागः, पुं, (नगे भवः । नग + अण् । यद्वा, दृहत्वसात् विषाग्निनेति । दह + "दहेर्गो लोपो दस्य नः ।" उणां ५ । ६१ । गः । अन्तलोपः । दस्य नः । वाहुलकात् नकारस्य ना ।) पन्नगः । (यथा, विष्णुपुराणे । १ । ६ । ६६ ।
"जगृहुश्च विषं नागाः क्षीरोदाच्च समुत्थितम् ॥")
हस्ती । (यथा, रघुः । ४ । ८३ ।
"भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥")
क्रूरचारी । मेघः । नागकेशरः । पुन्नागः । नागदन्तकः । मुस्तकः । देहानिलप्रभेदः ।
"उद्गारे नाग इत्युक्तो नीलजीमूतसन्निभः ॥"
इति शारदातिलकटीका ॥
उत्तरपदस्थिते श्रेष्ठः । इति मेदिनी । गे, १० ॥
(सीसकम् ।° अस्योत्पत्तिर्नामानि गुणाश्च । यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ।
"दृष्ट्वा भोगिसुतां रम्यां वासुकिस्तु मुमोच यत् ।
वीर्य्यं जातस्ततो नागः सर्व्वरोगापहो नृणाम् ॥"
"नागस्तु नागशततुल्यवलं ददाति
व्याधिं विनाशयति जीवनमातनोति ।
वह्निं प्रदीपयति कामवलं करोति
मृत्युञ्च नाशयति सन्ततसेवितः सः ॥
पाकेन हीनौ किलवङ्गनागौ
कुष्ठानि गुल्मांश्च तथातिकष्टान् ।
कण्डूप्रमेहानिलवादशोथ-
भगन्दरादीन् कुरुतः प्रयुक्तौ ॥")
ताम्बूली । देशभेदः । इति नानार्थटीकायां भरतः ॥ पर्व्वतविशेषः । (यथा, विष्णुपुराणे । २ । २ । २८ ।
"शङ्खकूटोऽथ ऋषभो हंसो नागस्तथापरः ।
कालाञ्जराद्याश्च तथा उत्तरे केशराचलाः ॥")
नगे गिरौ चन्दनादितरौ वा भवः । न गच्छतीति अगः न अगः नागः इति वा । तक्षककर्कोटप्रभृतिर्देवयोनिर्मनुष्याकारः फणालाङ्गुलयुक्तः । इति भरतः ॥ तत्पर्य्यायः । काद्रवेयः । २ । इत्यमरः । १।८।४ ॥ नागोत्पत्तिर्यथा,—
"सृजता ब्रह्मणा सृष्टिं मरीचिः सूतिकारणम् ।
प्रथमं मनसा ध्यातस्तस्य पुत्त्रस्तु कश्यपः ॥
तस्य दाक्षायणी भार्य्या कद्रुर्नाम शुचिस्मिता ।
मारीचो जनयामास तस्यां पुत्त्रान्महावलान् ॥
अनन्तं वासुकिञ्चैव कम्वलञ्च महावलम् ।
कर्कोटकञ्च राजेन्द्र ! पद्मं चान्यं सरीसृपम् ॥
महापद्मं तथा शङ्खं कुलिकञ्चापराजितम् ।
एते कश्यपदायादाः प्रधानाः परिकीर्त्तिताः ।
एतेषान्तु प्रसूत्या तु इदमापूरितं जगत् ॥
कुटिला हीनकर्म्माणस्तीक्ष्णास्योत्थविषोल्वणाः ।
दष्ट्वा संदश्य मनुजान् भस्म कुर्य्युः क्षणाद्ध्रुवम् ॥
शब्दगामी यथा स्पर्शो मनुष्याणां नराधिप ! ।
अहन्यहनि जायेत क्षयः परमदारुणः ॥
आत्मनस्तु क्षयं दृष्ट्वा प्रजाः सर्व्वाः समन्ततः ।
जग्मुः शरण्यं शरणं परन्तु परमेश्वरम् ॥
इमं सेवार्थमुद्दिश्य प्रजाः सर्व्वा महीपते ! ।
ऊचुः कमलजं देवं पुराणं ब्रह्मसंज्ञितम् ॥
देवा ऊचुः ।
देव देवेश लोकानां प्रकृतिः परमेश्वर ।
त्राहि नस्तीक्ष्णदंष्ट्रेभ्यो भुजङ्गानां महात्मनाम् ॥
अहन्यहनि ये देव ! पश्येयुरुरगा दृशा ।
मनुष्यं मृगयूथं वा तत् सर्व्वं भस्मसाद्भवेत् ॥
त्वया सृष्टिः कृता देव नीयते सा भुजङ्गमैः ।
एतज्ज्ञात्वा तु दुर्वृत्तं तत् कुरुष्व महामते ॥
ब्रह्मोवाच ।
अहं रक्षां विधास्यामि भवतीनां न संशयः ।
व्रजध्वं स्वानि धिष्ण्यानि प्रजापालाः ससाध्वसाः ॥
एवमुक्ताः प्रजास्तेन ब्रह्मणाव्यक्तमूर्त्तिना ।
आगतास्तु प्रजास्तावत्तानाहूय भुजङ्गमान् ॥
शशाप परमक्रुद्धो वासुकिप्रमुखांस्तथा ।
ब्रह्मोवाच ।
यतो मत्प्रभवानित्थं क्षयं नयत मानुषान् ॥
भवान्तरे तथान्यस्मिन्मातुः शापात् सुदारुणात् ।
भविताविक्षयो घोरो नूनं स्वायम्भुवान्तरे ॥
एवमुक्तास्तु वेपन्तो ब्रह्मणा भुजगोत्तमाः ।
निपत्य पादयोस्तस्य इदमूचुर्व्वचस्तदा ॥
नागा ऊचुः ।
भगवन् ! कुटिला जातिरस्माकं भवता कृता ।
विषोल्वणत्वं क्रूरत्वं दृक्शस्त्रत्वञ्च नस्तथा ॥
सम्पादितं त्वया देव इदानीं शमयाच्युत ! ॥
ब्रह्मोवाच ।
यदि नाम मया सृष्टा भवन्तः कुटिलाशयाः ।
ततः किं मनुजानित्यं भक्षयध्वं गतव्यथाः ॥
नागा ऊचुः ।
मर्य्यादां कुरु देवेश ! स्थानञ्चैव पृथक् पृथक् ।
नागानां वचनं श्रुत्वा देवो वचनमब्रवीत् ॥
अहं करोमि वो नागाः समयं मनुजैः सह ।
तदेकमनसः सर्व्वे शृणुध्वं मम शासनम् ॥
पातालं वितलञ्चैव सुतलाख्यं तृतीयकम् ।
दत्तं वै वसुकाभानां गृहं तत्र गमिष्यथ ॥
तत्र भोगान् वहुविधान् भुञ्जध्वं मम शासनात् ।
तिष्ठध्वं सप्तमं यावद्रात्रग्रन्तन्ते पुनः पुनः ॥
ततो वैवस्वतस्यादौ काश्यपेया भविष्यथ ।
दायादाः सर्व्वदेवानां सपर्णस्य च धीमतः ॥
तदा प्रसूतिर्व्वः सर्व्वा भोक्ष्यते चित्रभानुना ।
भवतां नैव दोषोऽयं भविष्यति न संशयः ॥
ये वै क्रूरा भोगिनो दुर्विनीता-
स्तेषामन्तो भविता नान्यथैतत् ।
कालं प्राप्तं भक्षयध्वं दशध्वं
तथा परान् चापकृतो मनुष्यान् ॥
मन्त्रौषधैर्गारुड़मण्डलैश्च
वद्धैर्द्रष्टा मानवा ये चरन्ति ।
तेषां भीतैर्व्वर्त्तितव्यं नचान्य-
च्चिन्त्यं कार्य्यं चान्यथा वो विनाशः ॥
इतीरिते ब्रह्मणा ते भुजङ्गा
जग्मुः स्थानं क्ष्मातलाख्यं हि सर्व्वे ।
तस्थुर्भोगान् भुञ्जमानाः समग्रान्
रसातले लीलया संस्थितास्ते ॥
एवं शापं ते तु लब्ध्वा प्रसादञ्च चतुर्मुखात् ।
तस्थुः पातालनिलये मुदितेनान्तरात्मना ॥
एतत् सर्व्वञ्च पञ्चम्यां तेषां जातं महात्मनाम् ।
अतस्त्वियं तिथिर्धन्या सर्व्वपापहरा शुभा ॥
एतस्यां संयतो यस्तु अम्लन्तु परिवर्ज्जयेत् ।
क्षीरेण स्नापयेन्नागांस्तस्य यास्यन्ति मित्रताम् ॥"
इति वराहपुराणम् ॥

एषां शिवभूषणप्रमाणं यथा,—
"वासुक्याद्याश्च ये सर्पा यथास्थानञ्च ते हरन् ।
भूषयाञ्चक्रुरुद्गच्य शिरोवाह्वादिषु द्रुतम् ॥"
इति कालिकापुराणे शिवविवाहे १८ अः ।
कम्वलाश्वतरनागयोः सरस्वत्या गानवरप्राप्तिविवरणं यथा,—
"एवं स्तुता तदा देवी विष्णोर्जिह्वा सरस्वती ।
प्रत्युवाच महात्मानं नागमश्वतरं ततः ॥
सरस्वत्युवाच ।
वरन्ते कम्वलभ्रातः ! प्रयच्छाम्युरगाधिप ! ।
तदुच्यतां प्रदास्यामि यत्ते मनसि वर्त्तते ॥
अश्वतर उवाच ।
सहायं देहि देवि ! त्वं पूर्व्वं कम्वलमेव मे ।
समस्तस्वरसम्बन्धमुभयोः संप्रयच्छ च ॥
सरस्वत्युवाच ।
सप्त स्वरा ग्रामरागाः सप्त पन्नगसत्तम ! ।
गीतकानि च सप्तैव तावत्यश्चापि मूर्च्छनाः ॥
तानाश्चैकोनपञ्चाशत्तथा ग्रामत्रयञ्च यत् ।
एतत् सर्व्वं भवान् गाता कम्वलश्चैव ते सखा ॥
ज्ञास्यते मत्प्रसादेन भुजङ्गेन्द्र परन्तथा ।
चतुर्व्विधं पदं तालं त्रिप्रकारं लयत्रयम् ॥
यतित्रयं तथा तोद्यं मया दत्तं चतुर्व्विधम् ॥
एतद्भवान् मत्प्रसादात् पन्नगेन्द्रापरञ्च यत् ।
अस्यान्तर्गतमायत्तं स्वरव्यञ्जनयोश्च यत् ॥
तदशेषं मया दत्तं भवतः कम्वलस्य च ।

क्षीरं सर्पिस्तु नैवेद्यं देयं सर्पविषापहम् ॥'
मनसाध्यानम्। यथा, पद्मपुराणे।
'देवीममामहीनां श्रियमधरवदनां चारुकान्तिं वदान्यां
हंसारूढ़ामुदारामरुणितवसनां सर्व्वदां सर्व्वदैव।
स्मेरास्यां मण्डिताङ्गीं कनकमणिगणैर्नागरत्नैरनेकै-
र्वन्देऽहं साष्टनागामुरुकुचयुगलां भोगिनीं कामरूपाम् ॥'
पुराणान्तरे।
'अनन्तो वासुकिः पद्मो महापद्मोऽथ तक्षकः।
कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः॥
शेषः पद्मो महापद्मः कुलिकः शङ्खपालकः।
वासुकिस्तक्षकश्चैव कालीयो मणिभद्रकः॥
ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ ॥'
गारुड़ेऽपि।
'अनन्तं वासुकिं शङ्खं पद्मं कम्बलमेव च।
तथा कर्कोटकं नागं धृतराष्ट्रञ्च शङ्खकम् ॥
कालीयं तक्षकञ्चापि पिङ्गलं मणिभद्रकम्।
यजेत्तानर्च्चितान्नागान् दष्टमुक्तो दिवं व्रजेत् ॥'
अत्र च।
'योऽसौ चानन्तरूपेण ब्रह्माण्डं सचराचरम्।
पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमो नमः ॥'
इत्यनेन प्रणवपूर्व्वेण मत्स्यपुराणोक्तेनानन्तं पूजयेत् ॥ रत्नाकरे।
'पिचुमर्द्दस्य पत्राणि स्थापयेद्भवनोदरे।
स्वयञ्चापि तदश्नीयात् ब्राह्मणांश्चैव भोजयेत् ॥'
पिचुमर्द्दस्य निम्बस्य ॥" इति तिथ्यादितत्त्वम् ॥

नागपत्रा, स्त्री, (नागदमनं पत्रं यस्याः। टाप्।) नागदमनी। इति भावप्रकाशः ॥

नागपत्री, स्त्री, (नागवत् पत्रं यस्याः। ङीष्।) लक्ष्मणा। इति राजनिर्घण्टः ॥

नागपदः, पुं, (नागवत् पदं स्थानं यस्य।) षोड़शरतिबन्धान्तर्गतद्वितीयबन्धः। तस्य लक्षणं यथा,—
"पादौ स्कन्धे तथा हस्ते क्षिपेल्लिङ्गं भगे लघु।
कामयेत् कामुको नारीं बन्धो नागपदो मतः॥"
इति रतिमञ्जरी ॥

नागपाशः, पुं, (नागपाश इव व्याप्तास्त्यस्येति। अच्।) स्त्रीणां करणम्। (नागः पाश इव।) वरुणायुधः। इति मेदिनी। शे, ३५॥
"सार्द्धद्वयावर्त्तनात्तु नागपाश इति स्मृतः।
अक्षग्रन्थिमथो दद्यान्नागपाशमथापि वा॥"
इत्यागमः ॥
"वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम्॥"
इति देवीपुराणीयदुर्गाध्यानम् ॥

नागपाशकः, पुं, (नागपाश इव प्रतिकृतिः। "इवे प्रतिकृतौ।" ५।३।९६। इति कन्। यद्वा, नागपाश इव कायतीति। कै+कः।) रतिबन्धविशेषः। तस्य लक्षणं यथा,—
"स्वजङ्घाद्वयमध्यस्थां हस्ताभ्यां धारयेत् कुचौ।
रमेन्निःशङ्कितः कामी बन्धोऽयं नागपाशकः॥"
इति रतिमञ्जरी ॥

नागपुरं, क्ली, (नागनामकं पुरम्। शाकपार्थिवादिवत् समासः।) देशविशेषः। तद्विवरणं यथा,—
"जटाजूटात् पपातोर्द्धे मेरोस्तस्मात्ततोऽगमत्।
देवैः परिहृता गङ्गा हेमकूटञ्च पर्व्वतम्॥
मन्दरञ्चैव कैलासं हिमवन्तञ्च पर्व्वतम्।
तामायान्तीन्तु रोधाय खलीलो नाम दानवः॥
पार्व्वतं रूपमास्थाय वर्षाणाञ्च शतैर्द्विजाः।
ततो भगीरथो राजाराधयामास कौशिकम्॥
स तुष्टः प्रददौ नागं वाहनं तं भगीरथः।
समारुह्यागमत्तत्र यत्र रुद्धा भगीरथी॥
तेन नागेन तं दैत्यं संविदार्य्य स सत्तमः।
शतधा तं समाधाय स्कन्धैरैरावतो गजः॥
महीतलं समापेदे स यावन्नागसाह्वयम्॥
तस्मात् खातनाद्भूमिर्या अभून्नागपुरं वरम्॥"
इति वह्निपुराणे गङ्गावतरणनामाध्यायः॥

नागपुष्पः, पुं, (नागस्य हस्तिनो मदगन्धयुक्तं पुष्पं यस्य।) पुन्नागवृक्षः। नागकेशरः। (यथा, महाभारते। १। २०८। ४०।
"पुन्नागैर्नागपुष्पैश्च लकुचैः पनसैस्तथा॥")
चम्पकः। इति मेदिनी। पे, २५॥ (पुन्नागपुष्पे तु क्ली। तत्र गुणा यथा,—
"नागपुष्पं कषायोष्णं रुक्षं लघ्वामपाचनम्।
ज्वरकण्डूतृषास्वेदच्छर्द्दिहृल्लासनाशनम्॥
दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम्॥"
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे॥)

नागपुष्पफला, स्त्री, (नागस्य नागकेशरस्येव पुष्पफले यस्याः।) कुष्माण्डी। इति राजनिर्घण्टः॥

नागपुष्पिका, स्त्री, (नागस्य पुष्पमिव पुष्पं यस्याः। कप्। टापि अत इत्वम्।) स्वर्णयूथी। इति राजनिर्घण्टः॥

नागपुष्पी, स्त्री, (नागस्य नागकेशरस्य पुष्पमिव पुष्पं यस्याः। ङीष्।) नागदमनी। इति भावप्रकाशः॥ (पर्य्यायोऽस्या यथा, भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे।
"नागपुष्पी श्वेतपुष्पा नागिनी रामदूतिका॥"
अस्या गुणा। यथा,—
"नागिनी रोचनी तिक्ता तीक्ष्णोष्णा कफपित्तनुत्॥")

नागफलः, पुं, (नागस्य पुन्नागस्येव फलं यस्य।) पटोलः। इति राजनिर्घण्टः॥

नागबन्धुः, पुं, (नागानां हस्तिनां बन्धुरिव प्रियत्वात्।) अश्वत्थवृक्षः। इति शब्दचन्द्रिका॥ नागानां बान्धवश्च॥

नागबलः, पुं, (नागानामिव बलं यस्य।) भीमसेनः। इति त्रिकाण्डशेषः॥ (अस्य नागबलाप्तिकथा। यथा, महाभारते। १। १२८। ६५—७०।
"एवमुक्तस्तदा नागो वासुकिं प्रत्यभाषत।
यदि नागेन्द्र! तुष्टोऽसि किमस्य धनसञ्चयैः॥
रसं पिबेत् कुमारोऽयं त्वयि प्रीते महाबलः।
बलं नागसहस्रस्य यस्मिन् कुण्डे प्रतिष्ठितम्॥
यावत् पिबति बालोऽयं तावदस्मै प्रदीयताम्।
एवमस्त्विति तं नागं वासुकिः प्रत्यभाषत॥
ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः।
प्राङ्मुखश्चोपविष्टः स रसं पिबति पाण्डवः॥
एकोच्छ्वासात्ततः कुण्डं पिबति स्म महाबलः।
एवमष्टौ स कुण्डानि ह्यपिबत् पाण्डुनन्दनः॥
ततस्तु शयने दिव्ये नागदत्ते महाभुजः।
अशेत भीमसेनस्तु यथासुखमरिन्दमः॥"
तथा च तत्रैव। १। १२८। १९—२१।
"ततोऽष्टमे तु दिवसे प्रत्यबुध्यत पाण्डवः।
तस्मिंस्तदा रसे जीर्णे सोऽप्रमेयबलो बली॥
तं दृष्ट्वा प्रतिबुध्यन्तं पाण्डवं ते भुजङ्गमाः।
सान्त्वयामासुरव्यग्रा वचनञ्चेदमब्रुवन्॥
यत्ते पीतो महाबाहो! रसोऽयं वीर्य्यसंभृतः।
तस्मान्नागायुतबलो रणेऽधृष्यो भविष्यति॥")
हस्तितुल्यबलवति, त्रि॥

नागबला, (नागस्येव बलं यस्याः।) बलाभेदः। गोरक् चाउलिया इति गुलशकरी इति काकशी इति च भाषा॥ (यथा, गारुड़े १७९ अध्याये।
"जग्ध्वा नागबला चूर्णं श्वासकासादिरुङ्भवेत्॥")
तत्पर्य्यायः। गाङ्गेरुकी २ झषा ३ ह्रस्वगवेधुका ४। इत्यमरः। २। ४। ११७॥ गाङ्गेरुणी ५ गोरक्षतण्डुलाह्व ६। इति भरतः॥ भद्रोदनी ७ खरगन्धा ८ चतुःपला ९ महोदया १० महापत्रा ११ महाशाखा १२ महाफला १३ विश्वदेवा १४ अनिष्टा १५ देवदण्डा १६ महागन्धा १७ घण्टा १८। अस्या गुणाः। मधुराम्लत्वम्। कषायत्वम्। उष्णत्वम्। गुरुत्वम्। कण्डूतिकुष्ठवातग्रहपित्तनाशित्वञ्च। इति राजनिर्घण्टः॥ स्निग्धत्वम्। आयुष्यत्वम्। हृद्यत्वम्। ग्राहित्वम्। शुक्रक्षीणक्षयरोगेषु हितत्वञ्च। इति राजवल्लभः॥

नागभृत्, पुं, (नागः क्रूरचारी सन् बिभर्त्ति व्यात्मानमिति। भृ+क्विप्।) डुण्डुभः। इति त्रिकाण्डशेषः॥

नागमल्लः, पुं, (नागेषु हस्तिषु मल्लः।) ऐरावतः। इति शब्दरत्नावली॥

नागमाता, [ऋ] स्त्री, (नागानां हस्तिनां मातेव भूषकत्वात्।) मनःशिला। इति हेमचन्द्रः। ४। १२६॥ (नागानां सर्पाणां माता।) मनसादेवी। इति शब्दरत्नावली॥ (यथा, ब्रह्मवैवर्त्ते। २। १। ६७।
"नागेश्वरस्यानन्तस्य भगिनी नागपूजिता।
नागेश्वरी नागमाता सुन्दरी नागवाहिनी॥"
सुरसा। इयं हि सागरोल्लङ्घनसमये हनुमतः परीक्षार्थं देवैरादिष्टा तस्य विघ्नमाचरितुं गता तेन वञ्चिता च। यथा, रामायणे। ६।१।१३६।
"ततो देवाः सगन्धर्व्वाः सिद्धाश्च परमर्षयः।
अब्रुवन् सूर्य्यसङ्काशां सुरसां नागमातरम्॥"
यथा, च अध्यात्मरामायणे। ६। १। १८—२४।

स्त्रीसौभाग्यविवर्द्धिनी मदकरी ज्ञेया सदा वल्लभा
गुल्माध्मानविवन्धजिच्च कथिता सा मालवे तु
स्थिता ॥
अन्या पुष्कलिका नाम कषायोष्णा कटुस्तथा ।
मलापकर्षा कण्ठस्य पित्तकृद्वातनाशिनी ॥
देशजीया कटुस्तीक्ष्णा हृद्या दीर्घदला च या ।
कफवातहरा रुच्या कटुर्दीपनपाचनी ॥"
इति राजनिर्घण्टः ॥

नागवारिकः, पुं, ( नागानां हस्तिनां वारो वारणम् । स कार्य्यत्वेनास्त्यस्येति । नागवार+ठन् ।) राजकुञ्जरः । हस्तिपः । गणस्यराजः । (नागानां सर्पाणां वारो वारणमस्त्यस्येति । ) गरुड़ः । मयूरः । इति मेदिनी । के, २३० ॥

नागवीटः, पुं, ( नाग इव विशेषेण एटति इतस्ततो भ्रमतीति । वि+इट गतौ+"इगुपधज्ञेति ।" ३ । १ । १३५ । इति कः । ) टाङ्करः । इति त्रिकाण्डशेषः ॥ चाकरा इति ख्यातः ॥

नागवीथी, स्त्री, (नागस्येव वीथी पन्थाः ।) अश्विन्यादिनक्षत्रत्रयघटितग्रहस्थानत्रयात्मर्गतोत्तरस्थानस्थपथविशेषः । यथा,—
"सप्तविंशतिनक्षत्राणि त्रिधा त्रयश्चरेव वीथी स्थानानि दिजसत्तमाः ।
स्थानं जारद्गवं मध्यं तथैरावतमुत्तरम् ।
वैश्वानरं दक्षिणतो निर्द्दिष्टमिह तत्त्वतः ॥
नदेव मध्यनोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथीत्रयेण त्रिधा भिद्यते । तथाहि त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैर्नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथीत्रयम् । तथाचोक्तम् ।
अश्विनी कृत्तिका याम्या नागवीथीति
शब्दिता ॥"
इति विष्णुपुराणे । २ । ८ । ७८ श्लोकटीकायां श्रीधरस्वामी ॥ कश्यपापत्यविशेषः । यथा,—
"नागवीथी च यामिन्याम् ।" इति ब्रह्मपुराणे द्वितीयोऽध्यायः ॥ ( धर्म्मस्य यामिपत्नीगर्भजाता कन्या । यथा, मत्स्यपुराणे । ५ । १८ ।
"लम्बायां घोषनामानो नागवीथी तु यामिजा ॥")

नागशुण्ठी, स्त्री, ( नागस्य शुण्डवत् आकृतिरस्यस्येति । अच् । ततो गौरादित्वात् ङीष् । ) डङ्गरीफलम् । इति राजनिर्घण्टः ॥

नागसम्भवं, क्ली, (नागात् सीसकात् सम्भवो यस्य ।) सिन्दूरम् । इत्यमरः । २ । ६ । १०५ ॥

नागसुगन्धा, स्त्री, ( नागस्येव सु शोभनो गन्धो यस्याः । ) भुजङ्गाक्षी । सर्पसुगन्धा । इति भरतधृतस्वामी ॥ ( रास्नाभेदः । तत्पर्य्यायो यथा,—
"नाकुली सरसा नागसुगन्धा गन्धनाकुली ।
नकुलेष्टा भुजङ्गाक्षी सर्पाङ्गी विषनाशिनी ॥"
इति भावप्र०।प्रस्य पूर्व्वखण्डे प्रथमे भागे ॥)

नागस्तोककं, क्ली, ( नागस्य नागविषस्य स्तोकः स्वल्पता यत्र । कप् । स्थावरविषत्वादेवास्य तथात्वम् । ) वत्सनाभः । इति राजनिर्घण्टः ॥

नागस्फोता, स्त्री, ( नाग इव स्फोता । ) दन्ती । नागदन्ती । इति राजनिर्घण्टः ॥

नागहनुः, पुं, (नागस्य हस्तिनो हनुरिव ।) नखनामगन्धद्रव्यम् । इति राजनिर्घण्टः ॥

नागहन्त्री, स्त्री, (नागान् हन्तीति । हन+तृच्+ङीप् । ) वन्ध्याकर्कोटकी । इति राजनिर्घण्टः ॥

नागाख्यः, पुं, ( नाग इव आख्या यस्य । ) नागकेशरः । इति त्रिकाण्डशेषः ॥

नागाञ्चला, स्त्री, नागयष्टिः । इति जटाधरः ॥

नागाञ्जना, स्त्री, हस्तिनी । ( नागस्येव अञ्जनं रञ्जनवर्णत्वं यस्याः ।) नागयष्टिः । इति मेदिनी । ने, १८८ ॥

नागाधिपः, पुं, ( नागानां अधिपः । ) अनन्तः । इति हेमचन्द्रः । ४ । ३७३ ॥

नागान्तकः, पुं, ( नागानां अन्तको विनाशकः । ) गरुड़ः । इत्यमरः । १ । १ । ३१ ॥

नागारातिः, पुं, ( नागानां अरातिः शत्रुः । ) वन्ध्याकर्कोटकी । इति राजनिर्घण्टः ॥

नागालाबुः, स्त्री, ( नाग इव अलाबुः । ) कुम्भतुम्बी । इति राजनिर्घण्टः ॥

नागाशनः, पुं, (अश्नातीति । अश+ल्युः । नागानां अशनो भक्षकः ।) गरुड़ः । इति हारावली । १० ॥

नागाह्वं, क्ली, ( नागस्य आह्वा नाम आख्या यस्य । ) हस्तिनापुरम् । इति त्रिकाण्डशेषः ॥

नागाह्वा, स्त्री, ( नागं नागकेशरं आह्वयते स्पर्द्धते इति । आ+ह्वे+अच् । टाप् । ) लाङ्गलीकन्दः । इति राजनिर्घण्टः ॥

नागी, स्त्री, ( नागस्य स्त्री पत्नी । नाग+जानपदेति स्त्रीत्वार्थे ङीष् । ) नागपत्नी । इति मुग्धबोधम् ॥ ( अस्याः दधिगुणा यथा,—
"लघु पाके च नागीनां वीर्य्योष्णं पक्तिनाशनम् ।
कषायानुरसं नाग्या दधि वर्चो विवर्द्धनम् ॥"
इति सुश्रुते सूत्रस्थाने ४५ अध्याये ॥)

नागोदं, क्ली, ( नागवदुदरं यस्मात् । पृषोदरादित्वात् रलोपः । ) उरस्त्राणम् । इति हेमचन्द्रः । ३ । ४६२ ॥

नागोदरं, क्ली, ( नागवत् दृढमुदरं यस्मात् । ) उरस्त्राणम् । इति हारावली । १८८ ॥ (गर्भिण्या गर्भोपद्रवविशेषः । यथा, सुश्रुते शरीरस्थाने । १० अध्याये ।
"शुक्रशोणितं वायुनाभिप्रपन्नमवक्रान्तजीवमाध्मापयत्युदरं तत् कदाचित् यदृच्छया उपशान्तं नैगमेषापहृतमिति भाषन्ते । तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुः । तत्रापि लीनवत् प्रतीकारः ॥")

नाचिकेतः, पुं, नचिकेताः । अग्निः । यथा,—
"स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो
प्रब्रूहि तं श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त
एतद्द्वितीयेन वृणे वरेण ॥
प्र ते ब्रवीमि तदु मे निबोध
स्वर्ग्यमग्निं नचिकेतः प्रजानन् ।
अनन्तलोकाप्तिमथो प्रतिष्ठां
विद्धि त्वमेतं निहितं गुहायाम् ॥
लोकादिमग्निं तमुवाच तस्मै
या इष्टका यावतीर्वा यथा वा ।
स चापि तत्प्रत्यवदद्यथोक्त-
मथास्य मृत्युः पुनरेवाह तुष्टः ।
तमब्रवीत् प्रीयमाणो महात्मा
वरं तवेहाद्य ददामि भूयः ।
तवैव नाम्ना भवितायमग्निः
सृङ्कां चेमामनेकरूपां गृहाण ।
त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं
त्रिकर्मकृत्तरति जन्ममृत्यू ।
ब्रह्मयज्ञं देवमीड्यं विदित्वा
निचाय्येमां शान्तिमत्यन्तमेति ।
त्रिणाचिकेतस्त्रयमेतद्विदित्वा
य एवं विद्वांश्चिनुते नाचिकेतम् ।
स मृत्युपाशान् पुरतः प्रणोद्य
शोकातिगो मोदते स्वर्गलोके ॥"
इति कठोपनिषदि प्रथमा वल्ली । १३-१
( ऋषिविशेषः । अस्य विवरणं यथा, म
भारते । १३ । ७१ । २—३१ ।
"अत्राप्युदाहरन्तीममितिहासं पुरातनम्
ऋषेरुद्दालकेर्वाक्यं नाचिकेतस्य चोभ
ऋषिरुद्दालकिर्दीक्षामुपगम्य ततः सुतम्
त्वं मामुपचरस्वेति नाचिकेतमभाषत ॥
समाप्ते नियमे तस्मिन् महर्षिः पुत्रमब्र
उपस्पर्शनसक्तस्य स्वाध्यायाभिरतस्य च
इध्मा दर्भाः सुमनसः कलशश्चाभितो
विस्मृतं मे तदादाय नदीतीरादिहाव्रज
गत्वानवाप्य तत् सर्व्वं नदीवेगसमाप्लुत
न पश्यामि तदित्येव पितरं सोऽब्रवीन्
क्षुत्पिपासाश्रमाविष्टो मुनिरुद्दालकिस्त
यमं पश्येति तं पुत्रमशपत् स महात
तथा स पित्राभिहितो वाग्वज्रेण कृता
प्रसीदेति ब्रुवन्नेव गतसत्त्वोऽपतद्भुवि ॥
नाचिकेतं पिता दृष्ट्वा पतितं दुःखमूर्छि
किं मया कृतमित्युक्त्वा निपपात महीत
तस्य दुःखपरीतस्य स्वं पुत्रमनुशोचतः
व्यतीतं तदहःशेषं सा चोग्रा तत्र शर्व
पित्र्येणाश्रुप्रपातेन नाचिकेतः कुरूद्व
प्रास्पन्दच्छयने कौश्ये वृष्ट्या शस्यमिव
स पर्य्यपृच्छत् तं पुत्रं श्लाघ्यं प्रत्यागतं पु
दिव्यैर्गन्धैः समादिग्धं क्षीणस्वप्नमिवो
अपि पुत्र जिता लोकाः शुभास्ते स्वेन
दिष्ट्या चासि पुनः प्राप्तो नहि ते मा

प्रत्यक्षदर्शी सर्व्वस्य पित्रा पृष्टो महा
स तां वार्त्तां पितुर्मध्ये महर्षीणां न्य
कुर्व्वन् भवच्छासनमाशु यातो
ह्यहं विशालां रुचिरप्रभावाम्
वैवस्वतीं प्राप्य सभामपश्यं
सहस्रशो योजनहेमभासम् ॥
दृष्ट्वैव मामभिमुखमापतन्तं
देहीति स ह्यासनमादिदेश ।

नाट्योत्पत्तिर्यथा,—
"इहानुश्रूयते ब्रह्मा शक्रेणाभ्यर्थितः पुरा ।
चकाराकृष्य वेदेभ्यो नाट्यवेदन्तु पञ्चमम् ॥
उपवेदोऽथ वेदाश्च चत्वारः कथिताः स्मृतौ ।
तत्रोपवेदो गान्धर्व्वः शिवेनोक्तः स्वयम्भुवे ॥
तेनापि भरतायोक्तस्तेन मर्त्ये प्रचारितः ।
शिवाब्जयोनिभरतास्तस्मादस्य प्रयोजकाः ॥"
इति सङ्गीतदामोदरः ॥

नाट्यधर्म्मिका, स्त्री, ( नाट्यधर्म्मोऽस्त्यस्याः क्रियाया इति ठन् ।) दर्शनार्थशास्त्रोक्तनाट्यम् । यथा, हेमचन्द्रः ।
"गीतवाद्यनृत्यत्रयं नाट्यं तौर्य्यत्रिकञ्च तत् ।
संगीतं प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्म्मिका ॥"

नाट्यप्रियः, पुं, ( नाट्यं प्रियं यस्य । ) शिवः । इति हेमचन्द्रः । २ । ११२ ॥

नाट्यशाला, स्त्री, ( नाट्यस्य नृत्यगीतादेः शाला गृहम् । ) प्रासादद्वारसमीपगृहम् । नाटमन्दिर इति भाषा । यथा,—
"नाट्यशाला च कर्त्तव्या द्वारदेशसमाश्रया ॥"
इति गरुड़पुराणम् ॥

नाट्यालङ्कारः, पुं, ( नाट्यस्य अलङ्कारः । ) नाट्यभूषणहेतुः । स तु अष्टषष्ठिप्रकारः । यथा,—
"सिद्धिस्मिनोरयोऽम्भेशो निरुक्तिश्च विशेषणम् ।
गुणाभिपात उद्दिष्टविचारप्राप्तिनीतयः ॥
अभिप्रायः परीहारो गर्हणानुनयौ तथा ।
अर्थापत्तिः प्रसिद्धिश्च दाक्षिण्यं प्रियभाषणम् ॥
अभिमानाख्यानगर्व्वा हर्षक्षोभोद्यमाश्रयाः ।
पश्चात्तापः स्पृहाक्रन्दौ कपटञ्च प्रवर्त्तनम् ॥
उत्तेजनञ्च दृष्टान्तः शोभोदाहरणे अपि ।
संशयोऽक्षरसंघातो विमलोक्तिः पदोच्चयः ॥
परीवादोऽगुक्तसिद्धिरक्षमाध्यवसायकौ ।
प्रोत्साहनं तुल्यतर्क उपपत्त्यनुतर्कणे ॥
निवेदनञ्च साहाय्यं याच्ञा पृच्छा विशेषणम् ।
अभिज्ञानञ्च सारूप्यं गुणकीर्त्तनसञ्चयः ॥
विपर्य्ययश्चातिशयो भूयाहेतुनिदर्शनम् ।
मानावेशश्च संक्षेपसमीहाशीर्विसर्पकाः ॥
उल्लेख उपदिष्टी चेत्यष्टषष्टिमिता अमी ।
अलङ्कारा मता नित्यं नाटकादिषु सूरिभिः ॥"
इति सङ्गीतदामोदरः ॥

(साहित्यदर्पणमते त्रयस्त्रिंशत् नाट्यालङ्काराः । यथा, तत्रैव । ६ । २००—२३२ ।
"आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः ।
उत्प्रासनं स्पृहाक्षोभपश्चात्तापोपपत्तयः ॥
आशंसाध्यवसायौ च विसर्पोल्लेखसञ्ज्ञितौ ।
उत्तेजनं परीवादो नीतिरर्थविशेषणम् ॥
प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनम् ।
उत्कीर्त्तनं तथा याच्ञा परीहारो निवेदनम् ॥
प्रवर्त्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।
इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ॥
आशीरिष्टजनाशंसाक्रन्दः प्रलपितं शुचा ।
कपटं मायया यत्र रूपमन्यद्विभाव्यते ॥
अक्षमा सा परिभवः स्वल्पोऽपि नाभिसह्यते ।
गर्वोऽवलेपजं वाक्यं कार्य्यस्यारम्भ उद्यमः ॥
ग्रहणं गुणवत्कार्य्यहेतोराश्रय उच्यते ।
उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनि ॥
आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा ।
अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु ॥
मोहावधीरितार्थस्य पश्चात्तापः स एव तु ।
उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ॥
आशंसनं स्यादाशंसा प्रतिज्ञाध्यवसायकः ।
विसर्पो यत्समारब्धं कर्म्मानिष्टफलप्रदम् ॥
कार्य्यग्रहणमुल्लेख उत्तेजनमितीष्यते ।
स्वकार्य्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक् ॥
भर्त्सना तु परीवादो नीतिः शास्त्रेण वर्त्तनम् ।
उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा ।
उपालम्भस्वरूपेण तत् स्यादर्थविशेषणम् ॥
प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ।
साहाय्यं सङ्कटे यत् स्यात् सानुकूल्यं परस्य च ॥
अभिमानः स एव स्यात् प्रश्रयादनुवर्त्तनम् ।
अनुवृत्तिर्भूतकार्य्याख्यानमुत्कीर्त्तनं मतम् ॥
याच्ञा तु क्वापि याच्ञायाः स्वयं दूतमुखेन वा ।
परीहार इति प्रोक्तः कृतानुचितमार्ज्जनम् ॥
अवधीरितकर्त्तव्यकथनन्तु निवेदनम् ।
प्रवर्त्तनन्तु कार्य्यस्य यत् स्यात् साधुप्रवर्त्तनम् ॥
आख्यानं पूर्ब्बवृत्तोक्तिः युक्तिरर्थावधारणम् ।
प्रहर्षः प्रमदाधिक्यं शिक्षा स्यादुपदेशनम् ॥"
एतेषामुदाहरणन्तु तत्रैव द्रष्टव्यम् ॥)

नाट्योक्तिः, स्त्री, ( नाट्ये नृत्यगीतादौ या उक्तिः ।) नाटकविषयकवचः । नटानां कर्म्म नाट्यं तत्रोक्तिः नाट्योक्तिः । इति भरतः ॥ तद्यथा । आर्य्येति ब्राह्मणम् । क्षत्त्रियं महाराजेति । सखीं हलेति । नीचं हण्डे इति । चेटीं हञ्जे इति । स्वामिनमार्य्यपुत्त्रेति । राजश्यालं राष्ट्रियेति । समानं हंहो इति । राजानं देवेति । सार्व्वभौमं भट्टेति । भगिनीपतिमावुत्तेति सम्बोधयेत् । इति सङ्गीतदामोदरः ॥ गणिकायां अज्जुका । विद्वति भावः । जनके आवुकः । कुमारे युवराजभर्त्तृदारकौ । राज्ञि देवभट्टारकौ । राजसुतायां भर्त्तृदारिका । कृताभिषेकायां राजस्त्री देवी । इतरासु राज्ञीषु भट्टिनी । अवध्योक्तौ अब्रह्मण्यम् । मातरि अम्बा । बालायां वासूः । आर्य्ये मारिषः । ज्येष्ठाभगिन्यां अत्तिका । निष्ठायां निर्व्वहणम् । इत्यमरः । १।७।११—१५ ॥ ( यथाच साहित्यदर्पणे । ६ । १५४—१६० ।
"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।
सर्व्वश्राव्यं प्रकाशं स्यात्तद्भवेदपवारितम् ॥
रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते ।
त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम् ॥
अन्योन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम् ।
किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ॥
श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम् ॥
दत्तां सिद्धाञ्च सेनाञ्च वेश्यानां नाम दर्शयेत् ।
दत्तप्रायाणि वणिजां चेटचेट्योस्तथा पुनः ॥
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ॥
नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम् ।
नायिकानायकाख्यानां संज्ञाप्रकरणादिषु ॥
नाटिकासट्टकादीनां नायिकाभिर्विशेषणम् ।
प्रायेण णयन्तकः साधिर्गमैः स्थाने प्रयुज्यते ॥
राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ।
राजर्षिभिर्वयस्येति तथा विदूषकेण च ॥
राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च ।
स्वेच्छया नामभिर्विप्रैर्विप्र आर्य्येति चेतरैः ॥
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ।
वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम् ॥
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ।
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ॥
वयस्येत्युत्तमैर्हंहो मध्यैरार्य्येति चाग्रजः ।
भगवन्निति वक्तव्याः सर्व्वैर्देवर्षिलिङ्गिनः ॥
वदेद्राज्ञीश्च चेटीश्च भवतीति विदूषकः ।
आयुष्मन् रथिनं सूतो वृद्ध तातेति चेतरैः ॥
वत्स पुत्त्रक तातेति नाम्ना गोत्रेण वा सुतः ।
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्य्येति चाधमैः ॥
विप्रैरयममात्येति सचिवेति च भण्यते ।
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ॥
अगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ।
उपाध्यायेति चाचार्य्यो महाराजेति भूपतिः ॥
स्वामीति युवराजस्तु कुमारो भर्त्तृदारकः ।
सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः ॥
वाच्या प्रकृतिभी राज्ञः कुमारी भर्त्तृदारिका ।
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः ॥
हलेति सदृशी प्रेष्या हञ्जे वेश्याऽज्जुका तथा ॥
कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरतीजनैः ।
आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः ॥
शकादयश्च सम्भाष्या भद्रदत्तादिनामभिः ।
यस्य यत् कर्म्म शिल्पं वा विद्या वा जातिरेव वा ॥
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम् ॥")

नाड़िः, स्त्री, ( नाड़यतीति । नड़ भ्रंशे + णिच् + इन् ।) नाड़ी । इत्यमरटीकायां भरतः ॥

नाड़िकं, क्ली, ( नाड़िरिव प्रतिकृतिः । नाड़ि + "इवे प्रतिकृतौ ।" ५ । ३ । ९६ । इति कन् । ) कालशाकम् । इति भावप्रकाशः ॥

नाड़िका, स्त्री, ( नाड़ी एव । स्वार्थे कन् । ) षट्क्षणः । घड़ि इति भाषा । तत्पर्य्यायः । साधारिका २ घटिका ३ । इति हेमचन्द्रः ।२।५१ ॥ घटिकाज्ञानोपायो यथा,—
"निमेषो मानुषो योऽयं मात्रामात्रप्रमाणकः ।
तैः पञ्चदशभिः काष्ठा त्रिंशत् काष्ठास्तथा कला ॥
नाड़िका तु प्रमाणेन कला दश च पञ्च च ।
उन्मानेनाम्भसः सा तु पलान्यर्द्धत्रयोदश ॥
हेममाषैः कृतच्छिद्रा चतुर्भिश्चतुरङ्गुलैः ।
मागधेन प्रमाणेन जलप्रस्थस्तु संस्कृतः ॥"
इति विष्णुपुराणम्

"नैमित्तिकलयं प्रमत्तयिष्यन्निमेषादिक्रमेण प्रथमां-प्रोक्तमेव कल्पप्रमाणमनुसारयति निमेष इति सप्तभिः। मात्रैव मात्रं प्रमाणं यस्य। एक-मात्रलब्धवर्णोच्चारणकालसंमितो हि निमेषः। निमेषकालतुल्या हि मात्रा लघ्वक्षरस्य यदिति वचनोक्तेः। नाड़िकाज्ञानोपायमाह। उन्मानेनेति सार्द्धेन। अम्भस उन्मानेन उन्मी-यते अनेनेत्युन्मानं पात्रम्। सार्द्धेन योगे तयो-दशधार्द्धद्वादशेत्यर्थः। उन्मानरूपेण घटितानि सार्द्धद्वादशपलानि सा नाड़िका। सार्द्धद्वादश-पलताम्रनिर्मितपात्रेण सा नाड़िका ज्ञातये-त्यर्थः। किं प्रमाणं तत् पात्रं कार्य्यं तदाह मागधेन प्रमाणेन जलप्रस्थस्तु संस्तुत इति। सार्द्धद्वादशपलजलेन हि मागधदेशप्रस्थः पूर्य्यते। तत्प्रमाणं पात्रं कार्य्यमित्यर्थात् सिद्धम्। ननु तथापि पात्रेण कथं नाड़िकाज्ञानं क्रियापरि-च्छेद्यत्वात् कालस्येत्याशङ्क्य क्रियासिद्धये। प्रस्थादि विभिन्नमिति हैमेति। माषः पञ्चगुञ्जः। हैमो माषैश्चतुर्भिश्चतुरङ्गुलेन शलाकारूपेण रचितैः कृतच्छिद्रा। एतदुक्तं भवति सार्द्ध-द्वादशपलताम्रमयं मागधप्रस्थसंमितमर्द्धायतं पात्रं चतुर्म्माषचतुरङ्गुलहैमशलाकया कृताध-श्छिद्रं जले स्थापितं तेन छिद्रेण यावता कालेन पूर्य्यते तावान् कालो नाड़िकेति। तथा च शुकः। द्वादशार्द्धपलोन्मानं चतुर्भिश्चतुरङ्गुलैः। स्वर्णमाषैः कृतच्छिद्रं यावत् प्रस्थजलप्लुतमिति॥") इति तट्टीकायां श्रीधरस्वामी। (यथा, सूर्य्य-सिद्धान्ते। १। ११।

"षड्भिः प्राणैर्विनाड़ी स्यात् तत् षष्ट्या नाड़िका स्मृता॥"

"षड्भिरिति। षट्प्रमाणैरसुभिः पानीयपलं भवति पलानां षष्ट्या घटिकोक्ता कालतत्त्वज्ञैः॥" इति तट्टीका॥)

**नाड़िकेलः**, पुं, (नारिकेलः। रस्य डत्वम्।) नारिकेलः। इत्यमरटीकायां भरतः॥

**नाड़िचीरं**, क्ली, (नाड़िरिव चीरं यत्र।) तिर्व्व-ष्टनम्। इति हारावली। २१४॥ नली इति भाषा॥

**नाड़िन्धमः**, पुं, (नाड़ीं वंशनलीं धमतीति। ध्मा ग्रन्थादिसंयोगयोः+"नाड़ीमुष्ट्योश्च।" ३।२।३०। इति खश्। "घ्माध्मासोरिति।" ७।३।७८। इति धमादेशः। "खित्यनव्ययस्य।" ६।३।६६। इति पूर्व्वपदस्य ह्रस्वः।) स्वर्ण-कारः। इत्यमरः। २।१०।८। (उत्तमोत्ता-धिरोहणात् तद्दुर्द्दुर्निर्व्वाणैर्नाड़ीं धमति उप-तापयतीति।) श्वासकारके, त्रि। यथा, भट्टिः। ६।८४।

"स्वल्पेऽप्यसिन्धाक्रान सत्वमयमत्तिवौ। कथं नाड़िन्धमान् मार्गानागतो विभमो-पमान्॥")

**नाड़िन्धयः**, त्रि, (नाड़ीं धयतीति। धेट पाने+"नाड़ीमुष्ट्योश्च।" ३।२।३०। इति खश्।

"खित्यनव्ययस्य।" ६।३।६६। इति ह्रस्वः।) नाड़ीपानकर्त्ता। इति मुग्धबोधव्याकरणम्॥

**नाड़िपत्रं**, क्ली, (नाड़िरिव पत्रं यस्य।) नाड़ी-चम्। इति शब्दमाला॥

**नाड़ी**, स्त्री, (नाडि+"कृदिकारादक्तिनः।" इति वा ङीष्।) नालम्। व्रणान्तरम्। (नाली घा इति भाषा। यथा, सुश्रुते निदानस्थाने १० अध्याये।

"तस्यातिमात्रगमनाद्गतिरिष्यतश्च नाड़ीव यद्वहति तेन मता तु नाड़ी॥"

इस्तमूलगता नाड्यो यथा, तत्रैव १६ अध्याये।

"नालाख्यौ कमलौ विद्येत् सोऽनिर्मार्गकः। इस्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः॥")

शिरा। गण्डदूर्व्वा। कुहनचर्य्या। षट्क्षण-कालः। इति मेदिनी। डे, १६॥ शिरायाः पर्य्यायः। धमनिः २ सिरा ३। इत्यमरः। २। ६। ६५॥ नाड़िः ४ नालिः ५ नाली ६ धमनी ७ शिरा ८। इति भरतः॥ धरणी ९ धरा १० तन्तुकी ११ जीवितज्ञा १२ सिंहा १३। इति राजनिर्घण्टः॥ * ॥ कायनाड़ी त्रिविधा। एका वातुवहा। अपरा मलविड्मूत्रव-वाहिनी। अपरा आहारवाहिनी। इति भरतः॥ "सा तु गर्भस्थबालकस्य सप्तभिर्मासै-र्भवति।" इति मुग्धबोधः॥ (यथा, तोड़लतन्त्रे ८ उल्लासे।

श्रीदेव्युवाच।

"सार्द्धत्रिकोटिनाड़ीनामालयश्च कलेवरम्। क्रमेण श्रोतुमिच्छामि तद्रहस्यं मयि प्रभो!॥

श्रीशिव उवाच।

लोमि कूपे यथादार्द्धकोटयश्चैव सुन्दरि!। हस्तास्ये च तथा पादेऽखिलरानाड्यः स्थिताः॥ उदरे च तथा नाभौ पञ्चलक्षाः प्रकीर्त्तिताः। हृदादिष्वङ्गमर्मेषु नवलक्षाः प्रकीर्त्तिताः॥ अथ पार्श्वे तथा चर्म्मे तथैव सर्व्वसन्धिषु। रुद्रासूत्रं स्थितं लक्षं शरीरे नाड्यः प्रिये!॥ इड़ा च पिङ्गला चैव सुषुम्ना चित्रिणी तथा। ब्रह्मनाड़ी च एकस्थे पञ्च नाड्यः प्रकीर्त्तिताः॥ कुहूश्च शङ्खिनी चैव गान्धारी हस्तिजिह्विका। नद्गिनी च तथा भिन्ना रहसंज्ञा व्यवस्थिता॥ एता नाड्यः परेशानि! सुषुम्नायाः प्रजायते॥") नाड़ीक्रममाह।

"सार्द्धत्रिकोट्यो नाड्यो हि स्थूलाः सूक्ष्माश्च देहिनाम्।

नाभिकन्दनिबद्धास्तास्तिर्य्यगूर्द्ध्वमधःस्थिताः॥ द्विसप्ततिसहस्राणि तासां स्थूलाः प्रकीर्त्तिताः। देहे धमन्यो धन्याख्याः पञ्चेन्द्रियगुणावहाः॥ ताश्चैव सूक्ष्मसुविराणि शतानि यत्र स्थूलानि यैरन्नरसस्य वहन्ति। आप्याययन्ति वपुरिदं हि नृणाममीषा-मभःश्रवन्तिरिव सिन्धुशतैः समुद्रः॥

एतन्मूर्द्धन इव धर्म्मचयेन नहं कार्य्यं नृणामिह शिरायतसङ्कुलेन॥ सप्तशतानां मध्ये चतुरधिका [illegible] तासां एका परीक्षणीया या दृ[illegible] विज्ञप्ता। चतुरधिकेति तदुक्तम्।

तिर्य्यक् कूर्म्मो देहिनां [illegible] नाभे पक्कं तस्य पुच्छस्य याम्ये। ऊर्द्ध्वे भागे हस्तपादौ च वामौ तस्याधस्तात् संस्थितौ दक्षिणौ

वक्त्रे नाड़ीद्वयं तस्य पुच्छे [illegible] पञ्च पञ्च करे पादे वामदक्षिणभागयो तासां मध्ये एकैकेति एकस्या एव [illegible] नान् दक्षिणेति प्राधान्यं पुरुषाश्रया। वामे भागे स्त्रिया योज्या नाड़ी [illegible] इति प्रोक्तं मया देवि! [illegible] नपुंसकस्य तु [illegible] भवेत् परीक्षा। साम्यन्तु न स्यादेव मस्य तु प्रकृतिस्थता। चरणेति दक्षिणपश्चिमपक्षात् पार्श्वेसा दृ[illegible] पश्चिमपक्षात् पार्श्वस्यैव सदुपदेशात्। तु वक्ष्यते॥ * ॥

परीक्षाप्रकारमाह।

स्वेन रोगार्त्तिकुर्परभागभाजा पीडाय [illegible] अङ्गुष्ठमूलमधिपश्चिमभागमध्ये नाड़ीं प्रभञ्जनगतिं सततं [illegible]

स्वेन करेण। [illegible] हेतुः। रोगार्त्ता वातादिपिशुनवायून् यथा स्वात्तया पीडेति बाधित। [illegible] सम्यक्तिकपोलेभिषरं भावेति [illegible] तत्र हस्तस्थितये। धारणेत्यर्थमाह। पीड़नं वातादिर्म्मस्थापनबोधनाय। पीड़नाकारं न तु [illegible] स्थितिः। दक्षिणेति प्राथमिकं [illegible] मन्यथालात्। भवेति योग्यतया [illegible] नाभिकायद्धमम्। स्वकेति तदुक्तम्। अङ्गुष्ठस्य तु मूले या धमनी [illegible] तस्या गतिवशादिदात् सुखं दुःखस्य [illegible] प्रभञ्जनगतिर्व्वेति वायवन्तरविरोधः। मिति सुखदशायामपि। तदुक्तम्। रोगाभिबोधाय [illegible] परीक्षणीयमाह। वातं पित्तं कफं द्वन्द्वं सन्निपातमथैव च साध्यासाध्यविवेकश्च सर्व्वं नाड़ी [illegible] सन्निपातमिति सामान्यतः। [illegible] विशेषतश्चार्थः। धर्म्मभिन्नेनदश्च [illegible] मित्युपसंहारः।" इति नाड़ीप्रकाशो द्योतः॥ * ॥ अथ नाड़ीज्ञानसमयमाह

"प्रातः कृतसमाचारः [illegible] सुखासीनः सुखासीनं [illegible] प्रातर्दिन प्राथमिकं मध्याह्ने उष्णता [illegible]

अथ प्रमेहज्ञानम् ।
प्रमेहे ग्रन्थिरूपा या सुतप्ता त्वामदूषयेत् ॥*॥
विषविष्टम्भगुल्मज्ञानमाह ।
उत्पित्सुरूपा विवरिष्टिकायां
विष्टम्भगुल्मेन च वक्ररूपा ।
अत्यर्थवातेन अधः स्फुरन्ती
उत्तानमेढ्रिस्य समाप्तिकाले ॥*॥
गुल्मे विशेषमाह कश्चित् ।
गुल्मेन कम्पोऽथ पराक्रमेण
पारावतस्येव गतिं करोति ॥*॥
अथ भगन्दरज्ञानम् ।
व्रणार्थं कठिने देहे प्रयाति पैत्तिकं क्रमम् ।
भगन्दरासुरूपेण नाड़ीव्रणनिवेदने ।
प्रयाति वातिकं रूपं नाड़ी मावकरूपिणी ॥
अथ वान्तादिज्ञानम् ।
वान्तस्य शल्याभिहतस्य जन्तो-
र्वेगावरोधाकुलितस्य भूयः ।
गतिं विधत्ते धमनी गजेन्द्र-
मरालमानेव कपोतलयेन ॥
स्त्रीरोगादिकमपि रक्तादिज्ञानक्रमेण ज्ञातव्यम् ।
क्वचित्प्रकरणोल्लेखात् क्वचिदौचित्यमात्रतः ।
क्वचिद्देशात् क्वचित् कालात् सङ्कीर्णगदनिर्णयः ॥
नाड़ीपरिचयज्ञानं प्रायशो नैव दृश्यते ।
तेन धार्य्या मयोक्तं यत्तत् समाधेयसत्तमैः ॥"
इति श्रीशङ्करसेनकविराजकृते नाड़ीप्रकाशे तृतीयोद्योतः ॥

नाड़ीकः, पुं, ( नाड़ीव कायतीति । कै+कः । ) शाकविशेषः । पाटशाक इति नालिताशाक इति च भाषा ॥ तत्पर्य्यायः । पट्टशाकः २ नाड़ीशाकः ३ । अस्य गुणाः । रक्तपित्तनाशित्वम् । विष्टम्भित्वम् । वातकोपनत्वञ्च । इति भावप्रकाशः ॥

नाड़ीकलापकः, पुं, ( नाड़ीनां नाड़ीवन्नालानां कलापः समूहो यत्र । कप् । ) सर्पाक्षी । इति भावप्रकाशः ॥

नाड़ीकेलः, पुं, ( नारिकेलः । पृषोदरादित्वात् साधुः । ) नारिकेलः । इति शब्दरत्नावली ॥

नाड़ीचः, पुं, ( नाड्या चीयते इति । चि+बाहुलकात् डः । ) शाकविशेषः । नालिता इति भाषा । तत्पर्य्यायः । केमुकम् २ चेचुली ३ चेचुः ४ विश्वरोचनः ५ । इति त्रिकाण्डशेषः ॥
"नाड़ीचशाकं द्विविधं तिक्तं मधुरमेव च ।
रक्तपित्तहरं तिक्तं क्रिमिकुष्ठविनाशनम् ।
मधुरं पिच्छिलं शीतं विष्टम्भि कफवातकृत् ॥"
इति राजवल्लभः ॥

नाड़ीचरणः, पुं, ( नाड़ीव चरणौ यस्य । ) पक्षी । इति त्रिकाण्डशेषः ॥

नाड़ीजङ्घः, पुं, ( नाड़ीवत् जङ्घा यस्य । ) काकः । इति त्रिकाण्डशेषः ॥ मुनिविशेषः । यथा ।
"नाड़ीजङ्घः सरगुरुसनिर्व्वक्ति हरेरकालौ मासादेसौ न शुभफलदौ पौषमाघौ न शेषान् ।"
इति मलमासतत्त्वम् ॥
बकविशेषः । यथा, महाभारते । १२ । १६६ । १६—२० ।
"ततोऽस्तं भास्करे याते सन्ध्याकाल उपस्थिते ।
आजगाम स्वभवनं ब्रह्मलोकात् खगोत्तमः ॥
नाड़ीजङ्घ इति ख्यातो दयितो ब्रह्मणः सखा ।
बकराजो महाप्राज्ञः कश्यपस्यात्मसम्भवः ॥"

नाड़ीतरङ्गः, पुं, ( नाड्यां नालायां तरङ्गो यत्र । ) काकोलः । हिण्डकः । रतहिण्डकः । इति मेदिनी । गे, ५६ ॥

नाड़ीतिक्तः, पुं, ( नाड्या तिक्तः । ) नेपालनिम्बः । इति राजनिर्घण्टः ॥ ( नेपालनिम्बशब्देऽस्य विशेषो ज्ञेयः ॥ )

नाड़ीदेहः, पुं, ( नाड़ीसारो देहो यस्य । क्षमत्वात् तथात्वम् । ) भृङ्गी । इति त्रिकाण्डशेषः ॥

नाड़ीनक्षत्रं, क्ली, ( नाड़ीस्थितं नक्षत्रम् । ) नरस्य जन्मदशमषोड़शाष्टादशत्रयोविंशपञ्चविंशनक्षत्राणि । राज्ञः पूर्व्वोक्तानि जातिदेशाभिषेकनक्षत्राणि च । यथा,—
"जन्माद्यं कर्म्म ततोऽपि दशमं साङ्घातिकं षोड़शमम् ।
समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम् ॥
आद्यात्तु पञ्चविंशं मानसमेवं नरः षड्भः स्यात् ।
भवनक्षो नृपतिः स्वजातिदेशाभिषेकर्क्षैः ॥"*॥
जातृचन्तु ।
"पूर्व्वात्रयं वानलमग्रजानां
राज्ञान्तु पौष्णेन सहोत्तराणि ।
सर्पाश्विमित्रं पितृदैवतञ्च
प्रजापतेर्भञ्च कृषीवलानाम् ॥
आदित्यहस्ताभिजिदश्विभानि
तान्यन्त्यजातेः प्रभविष्णुतायाम् ।
देशभं देशनामर्क्षम् । नाड़ीनक्षत्राणि ॥*॥
ईहा देहार्थहानिः स्याज्जन्मर्क्षे उपतापिते ।
कर्म्मर्क्षे कर्म्मणां हानिः पीड़ा मनसि मानसे ॥
स्त्रीमित्रविप्रबन्धूनां हानिः साङ्घातिके तथा ।
सन्तापं सामुदायिके मित्रभृत्यार्थसङ्क्षयः ।
वैनाशिके विनाशः स्याद्देहद्रविणसम्पदाम् ॥
नाड़ीनक्षत्रफलम् ॥*॥
जातिभे कुलनाशः स्याद्बन्धनञ्चाभिषेकभे ।
देशभे देशभङ्गः स्यात् क्रूरैरेवं मुनेः शुभम् ॥
यस्मिन् राजाभिषेको भवति तदाभिषेचनिकभम् । अ इ उ ए कृत्तिका । ओ व वि वु रोहिण्यौत्यादि देशभम् ।
सर्व्वेषां पीड़ायां दिनमेवमुपोषितोऽनलं जुहुयात् ।
सावित्र्या क्षीरतरोः समिद्भिरमरद्विजाग्रस्थः ॥"
इति ज्योतिस्तत्त्वम् ॥

नाड़ीविग्रहः, पुं, ( नाड़ीसारो विग्रहो यस्य । अतिकृशत्वात् तथात्वम् । ) भृङ्गी । इति हेमचन्द्रः । २ । १२४ ॥

नाड़ीव्रणः, पुं, ( नाड़ीसंलग्नो व्रणः । ) सर्व्वदागलद्व्रणः । नाली घा इति भाषा । इत्यमरः । २ । ६ । ५४ ॥ तस्य निदानं यथा,—
"यः शोथमाममिति पक्वमुपेक्षतेऽज्ञो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः ।
अभ्यन्तरं प्रविशति प्रविदार्य्य तस्य
स्थानानि पूर्व्वविहितानि ततः सपूयः ॥
तस्यातिमात्रगमनाद्गतिरिष्यते तु
नाड़ीव यद्वहति तेन मता तु नाड़ी ॥"*॥
वातादिदोषभेदेन तस्य रूपाणि यथा,—
"दोषैस्त्रिभिर्भवति सा पृथगेकशश्च
सम्मूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ।
तत्रानिलात् परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपासु ॥
पित्तात्तृषाज्वरकरी परिदाहयुक्ता
पीतं स्रवत्यधिकमुष्णमहःसु चापि ।
ज्ञेया कफाद्बहुघनार्ज्जुनपिच्छिलास्रा
स्तब्धा सकण्डुररुजा रजनीप्रवृद्धा ॥
दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा
यस्यां भवन्त्यभिहितानि च लक्षणानि ।
तामादिशेत् पवनपित्तकफप्रकोपात्
घोरामसुक्षयकरीमिव कालरात्रिम् ॥
दोषद्वयाभिहितलक्षणदर्शनेन
तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥"
शल्यनिमित्तलक्षणं यथा,—
"नष्टं कथञ्चिदनुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति ।
सा फेनिलं मथितमच्छमसृग्विमिश्र-
मुष्णं करोति सहसा सरुजञ्च नित्यम् ॥"
असाध्यकृच्छ्रसाध्ययोर्लक्षणं यथा,—
"नाड़ी त्रिदोषप्रभवा न विध्येत्
शेषाश्चतस्रः खलु यत्नसाध्याः ॥"
इति माधवकरः ॥*॥
"विड़ङ्गत्रिफला क्षौद्रपूर्णं लीढं समाक्षिकम् ।
हन्ति कुष्ठं क्रमीन् मेहनाड़ीव्रणभगन्दरान् ॥"
इति गरुड़पुराणम् ॥
(अस्य चिकित्सान्तरं यथा,—
"नाड़ीनां गतिमन्विष्य शस्त्रेणापाद्य कर्म्मवित् ।
सर्व्वव्रणक्रमं कुर्य्यात् शोधनं रोपणादिकम् ॥
नाड़ीं वातकृतां साधु पाटितां लेपयेद्भिषक् ।
प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥
पैत्तिकीं तिलमञ्जिष्ठानागदन्तीनिशायुगैः ।
श्लैष्मिकीं तिलयष्ट्याह्वनिकुम्भारिष्टसैन्धवैः ॥
शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ।
आरग्वधनिशाकालाकल्कैर्याज्यमधुसंयुता ।
सूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशिनी ॥
घोण्टाफलत्वङ्मदनात् फलानि
पूगस्य च त्वक् लवणञ्च मुख्यम् ।
स्नुह्यर्क्कदुग्धेन सहैष कल्को
वर्त्तीकृतो हन्त्यचिरेण नाड़ीम् ॥
वर्त्तीकृतं माक्षिकसंप्रयुक्तं
नाड़ीघ्नमुक्तं लवणोत्तमं वा ।

अथ प्रमेहज्ञानम् ।
प्रमेहे ग्रन्थिरूपा सा सुतप्ता त्वामदूषणी ॥ * ॥
विषविष्टम्भगुल्मज्ञानमाह ।
उत्पित्सुरूपा विषरिष्टिकायां
विष्टम्भगुल्मेन च वक्ररूपा ।
अत्यर्थवातेन अधः स्फुरन्ती
उत्तानमेदिन्यसमाप्तिकाले ॥ * ॥
गुल्मे विशेषमाह कश्चित् ।
गुल्मेन कम्पोऽथ पराक्रमेण
पारावतस्येव गतिं करोति ॥ * ॥
अथ भगन्दरज्ञानम् ।
व्रणार्थं कठिने देहे प्रयाति पैत्तिकं क्रमम् ।
भगन्दरानुरूपेण नाड़ीव्रणनिवेदने ।
प्रयाति वातिकं रूपं नाड़ी पावकरूपिणी ॥
अथ वान्तादिज्ञानम् ।
वान्तस्य शल्याभिहतस्य जन्तो-
र्वेगावरोधाकुलितस्य भूयः ।
गतिं विधत्ते धमनी गजेन्द्र-
मरालमानेव कफोल्वणेन ॥
स्त्रीरोगादिकमपि रक्तादिज्ञानक्रमेण ज्ञातव्यम् ।
क्वचित्प्रकरणोल्लेखात् क्वचिदौचित्यमात्रतः ।
क्वचिद्देशात् क्वचित् कालात् सङ्कीर्णगदनिर्णयः ॥
नाड़ीपरिचयज्ञानं प्रायशो नैव दृश्यते ।
तेन धाष्ट्र्यां मयोक्तं यत्तत् क्षमाधेयसुधर्मैः ॥"
इति श्रीशङ्करसेनकविराजकृते नाड़ीप्रकाशे
तृतीयोद्योतः ॥

नाड़ीकः, पुं, ( नाड़ीव कायतीति । कै+कः । ) शाकविशेषः । पाटशाक इति नालिताशाक इति च भाषा ॥ तत्पर्य्यायः । पट्टशाकः २ नाड़ीशाकः ३ । अस्य गुणाः । रक्तपित्तनाशित्वम् । विष्टम्भित्वम् । वातकोपनत्वञ्च । इति भावप्रकाशः ॥

नाड़ीकलापकः, पुं, ( नाड़ीनां नाड़ीवन्नालानां कलापः समूहो यत्र । कप् । ) सर्पाक्षी । इति भावप्रकाशः ॥

नाड़ीकेलः, पुं, ( नारिकेलः । पृषोदरादित्वात् साधुः । ) नारिकेलः । इति शब्दरत्नावली ॥

नाड़ीचः, पुं, ( नाड्या चीयते इति । चि+बाहुलकात् डः । ) शाकविशेषः । नालिता इति भाषा । तत्पर्य्यायः । केचुकम् २ चेचुली ३ चेचुः ४ विश्वरोचनः ५ । इति त्रिकाण्डशेषः ॥
"नाड़ीचशाकं द्विविधं तिक्तं मधुरमेव च ।
रक्तपित्तहरं तिक्तं क्रिमिकुष्ठविनाशनम् ।
मधुरं पिच्छिलं शीतं विष्टम्भि कफवातकृत् ॥"
इति राजवल्लभः ॥

नाड़ीचरणः, पुं, ( नाड़ीवच्चरणौ यस्य । ) पक्षी । इति त्रिकाण्डशेषः ॥

नाड़ीजङ्घः, पुं, ( नाड़ीवत् जङ्घा यस्य । ) काकः । इति त्रिकाण्डशेषः ॥ मुनिविशेषः । यथा ।
"नाड़ीजङ्घः सुरगुरुसुनिर्व्वक्ति दृष्टेरकालौ
मासावेतौ न शुभफलदौ पौषमाघौ न शेषान् ।"
इति मलमासतत्त्वम् ॥
बकविशेषः । यथा, महाभारते । १२ । १६६ । १६—२० ।
"ततोऽस्तं भास्करे याते सन्ध्याकाल उपस्थिते ।
आजगाम स्वभवनं ब्रह्मलोकात् खगोत्तमः ॥
नाड़ीजङ्घ इति ख्यातो दयितो ब्रह्मणः सखा ।
बकराजो महाप्राज्ञः कश्यपस्यात्मसम्भवः ॥"

नाड़ीतरङ्गः, पुं, ( नाड्यां नालायां तरङ्गो यत्र । ) काकोलः । हिण्डकः । रतहिण्डकः । इति मेदिनी । गे, ५६ ॥

नाड़ीतिक्तः, पुं, ( नाड्या तिक्तः । ) नेपालनिम्बः । इति राजनिर्घण्टः ॥ ( नेपालनिम्बशब्देऽस्य विशेषो ज्ञेयः ॥ )

नाड़ीदेहः, पुं, ( नाड़ीसारो देहो यस्य । कृशत्वात् तथात्वम् । ) भृङ्गी । इति त्रिकाण्डशेषः ॥

नाड़ीनक्षत्रं, क्ली, ( नाड़ीस्थितं नक्षत्रम् । ) नरस्य जन्मदशमषोड़शाष्टादशत्रयोविंशपञ्चविंशनक्षत्राणि । राज्ञः पूर्व्वोक्तानि जातिदेशाभिषेकनक्षत्राणि च । यथा,—
"जन्माद्यं कर्म्म ततोऽपि दशमं साङ्घातिकं षोड़शभम् ।
समुदयमष्टादशभं विनाशसंज्ञं त्रयोविंशम् ॥
आद्यात्तु पञ्चविंशं मानसमेवं नरः षड्भः स्यात् ।
नवनक्षत्रो नृपतिः स्वजातिदेशाभिषेकर्क्षैः ॥" * ॥
जातृचन्तु ।
"पूर्व्वात्रयं सानलमग्रजानां
राज्ञान्तु पौष्णेन सहोत्तराणि ।
सपौष्णमित्रं पितृदैवतञ्च
प्रजापतेर्भञ्च कृषीवलानाम् ॥
आदित्यहस्ताभिजिदश्विभानि
तान्यन्यजातेः प्रभविष्णुतायाम् ।
देशभं देशनामर्क्षम् । नाड़ीनक्षत्राणि ॥ * ॥
ईहा देहार्थहानिः स्यात्कर्म्मर्क्षे उपतापिते ।
कर्म्मर्क्षे कर्म्मणां हानिः पीड़ा मनसि मानसे ॥
स्त्रीशिक्षविषयबन्धूनां हानिः साङ्घातिके तथा ।
सन्तापः सामुदायिके मित्रभृत्यार्थसङ्क्षयः ।
वैनाशिके विनाशः स्याद्देहस्य विषयस्य सम्पदाम् ॥
नाड़ीनक्षत्रफलम् ॥ * ॥
जातिभे कुलनाशः स्याद्बन्धनञ्चाभिषेकभे ।
देशभे देशभङ्गः स्यात् क्रूरैरेवं शुभैः शुभम् ॥
यस्मिन् राजाभिषेको भवति तदाभिषेचनिकभम् । अ इ उ ए कृत्तिका । ओ व वि वु रोहिणीत्यादि देशभम् ।
सर्व्वेषां पीड़ायां दिनमेवमुपोषितोऽनलं जुहुयात् ।
सावित्र्या क्षीरतरोः समिद्भिरमरद्विजागुरतः ॥"
इति ज्योतिस्तत्त्वम् ॥

नाड़ीविग्रहः, पुं, ( नाड़ीसारो विग्रहो यस्य । अतिकृशत्वात् तथात्वम् । ) भृङ्गी । इति हेमचन्द्रः । २ । १२४ ॥

नाड़ीव्रणः, पुं, ( नाड़ीसंलग्नो व्रणः । ) सर्व्वदागलद्व्रणः । नाली घा इति भाषा । इत्यमरः । २ । ६ । ५४ ॥ तस्य निदानं यथा,—
"यः शोथमाममिति पक्वमुपेक्षतेऽज्ञो
यो वा व्रणं प्रचुरपूयमसाधुवृत्तः ।
अभ्यन्तरं प्रविशति प्रविदार्य्य तस्य
स्थानानि पूर्व्वविहितानि ततः सपूयः ॥
तस्यातिमात्रगमनाद्गतिरिष्यते तु
नाड़ीव यद्वहति तेन मता तु नाड़ी ॥" * ॥
वातादिदोषभेदेन तस्य रूपाणि यथा,—
"दोषैस्त्रिभिर्भवति सा पृथगेकशश्च
संमूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ।
तत्रानिलात् परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिकं स्रवति क्षपासु ॥
पित्तात्तृषाज्वरकरी परिदाहयुक्ता
पीतं स्रवत्यधिकमुष्णमहःसु चापि ।
ज्ञेया कफाद्बहुघनार्ज्जुनपिच्छिलास्रा
स्तब्धा सकण्डुररुजा रजनीप्रवृद्धा ॥
दाहज्वरश्वसनमूर्च्छनवक्त्रशोषा
यस्यां भवन्त्यभिहितानि च लक्षणानि ।
तामादिशेत् पवनपित्तकफप्रकोपात्
घोरामसुक्षयकरीमिव कालरात्रिम् ॥
दोषद्वयाभिहितलक्षणदर्शनेन
तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥"
शल्यनिमित्तलक्षणं यथा,—
"नष्टं कथञ्चिदनुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति ।
सा फेनिलं मथितमच्छमसृग्विमिश्र-
मुष्णं करोति सहसा सरुजञ्च नित्यम् ॥"
असाध्यकृच्छ्रसाध्ययोर्लक्षणं यथा,—
"नाड़ी त्रिदोषप्रभवा न सिध्येत्
शेषाश्चतस्रः खलु यत्नसाध्याः ॥"
इति माधवकरः ॥ * ॥
"विडङ्गत्रिफला छायाचूर्णं लीढ़ं समाक्षिकम् ।
हन्ति कुष्ठं क्रमीन् हन्ति नाड़ीव्रणभगन्दरान् ॥"
इति गरुड़पुराणम् ॥
( अस्य चिकित्सान्तरं यथा,—
"नाड़ीनां गतिमन्विष्य शस्त्रेणापाट्य कर्म्मवित्
सर्व्वव्रणक्रमं कुर्य्यात् शोधनं रोपणादिकम् ॥
नाड़ीं वातकृतां साधु पाटितां लेपयेद्भिषक् ।
प्रत्यक् पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥
पैत्तिकीं तिलमञ्जिष्ठानागदन्तीनिशायुतैः ।
श्लैष्मिकीं तिलयष्ट्याह्वनिकुम्भारिष्टसैन्धवैः ॥
शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिताम् ।
आरग्वधनिशाकालाचूर्णाज्यक्षौद्रसंयुता ।
सूत्रवर्त्तिर्व्रणे योज्या शोधनी गतिनाशनी ॥
घोण्टाफलत्वङ्मदनात् फलानि
पूगस्य च त्वक् लवणञ्च मुख्यम् ।
स्नुह्यर्कदुग्धेन सहैव वर्त्ती
वर्त्तीकृतो हन्त्यचिरेण नाड़ीम् ॥
वर्त्तीकृतं माक्षिकसंप्रयुक्तं
नाड़ीघ्नमुक्तं लवणोत्तमं वा ।

